**VOLUME—I**

# SARVAMULA GRANTHĀH

## PRASTHĀNATRAYI

[ *With the versions of the oldest manuscript of Sri Hrishikesha Thirtha, one of the direct disciples of Sri Anandathirtha* ]



**SRI ĀNANDATHIRTHA BHAGAVATPĀDA**

[ SRI MADHWACHARYA ]



AKHILA BHĀRAṬA

MĀDHWA MAHĀ MANDALA

PUBLICATION

SARVAMULA GRANTHĀH

[ WORKS OF SRI MADHWACHARYA ]

VOLUME–I [ PRASTHANATRAYI ]







This is an Akhila Bharatha
Madhwa Maha Mandala Publication
under the Presidentship of
SRI RAGHUVALLABHA THIRTHA
OF SRI PALIMAR MUTT, UDIPI







*Editing* :
BANNANJE GOVINDACHARYA
Isavasyam, UDIPI–3



*Finance* :
K. NARAYANA RAU
Gadag



*Printing* :
M. H. KAUJALGI
BRINDAVAN PRINTERS AND PUBLISHERS (P) LTD.
12/13 Lalbagh Fort Road, Bangalore-4



*Copies available at* :
AKHILA BHARATA MADHWA MAHAMANDALA
POORNAPRAJNA VIDYAPEETHA
Poornaprajna Nagara, Bangalore-28



*Price* :
**Rs. ~~Eighty~~ [ Complete Set ]**

सम्पुटम्—१ (प्रस्थानत्रयी)

# सर्वमूलग्रन्थाः

श्रीमदाचार्यपादशिष्यप्रवरश्रीहृषीकेशतीर्था-
दिलिखितप्रतन्ततरकोशानुसारिपाठसंवलितम् ,
पाठान्तरविशेषटिप्पण्यादिभिरुपोद्बलितम् ,
प्रस्थानत्रयव्याख्यारूपं प्रथमं सम्पुटम्



श्रीमदानन्दतीर्थभगवत्पादाः



अखिलभारतमाध्वमहामण्डलप्रकाशनम्

प्रकाशनाध्यक्षाः

श्रीरघुवल्लभतीर्थश्रीपादाः
श्रीपलिमारुमठः
उडुपी

*

सम्पादकः

बन्नञ्जे गोविन्दाचार्यः
ईशावास्यम्
उडुपी—३

*

शोधनकाले सहकर्तारः

बी· अनन्तकृष्ण उपाध्यायः
ए· नारायणतन्त्री
(दि·) एस्· नारायणाचार्यः
एस्· अनन्तरामाचार्यः
पादूरु वेङ्कटरमण आहितानलः

*

आर्थिकनिर्वहणम्

के. नारायणराव्
गदग

*



प्राप्तिस्थानम्

अखिलभारतमाध्वमहामण्डलम्
पूर्णप्रज्ञविद्यापीठमन्दिरम्
पूर्णप्रज्ञनगरम्
बेङ्गलूर्—२८

*

मूल्यम्
(समग्रस्य सम्पुटत्रयस्य)
अशीतिरूप्यकाणि

# पूर्व वक्तव्यम्

बहोः कालात् श्रीमदानन्दतीर्थभगवत्पादानां सर्वमूलग्रन्था मुद्रिताः पुस्तकापणेषु नोपलभ्यन्त इति प्रकाशम्। तेन च सर्वापि सर्वमूलकृतिरेकत्र सम्पुटीकृत्य मुद्रिता करणीयेति सर्वेषामपि माध्वविदुषामैककण्ठ्यमासीत्।

अथच भगवत्पादानां शिष्यप्रवरेण साक्षादेव देवगुरुमुखात् सर्वमूलकृतीः श्रुतवता श्रीहृषीकेशतीर्थश्रीपादेन सर्वेऽपि भगवत्पादकृता ग्रन्थाः स्वहस्तेन लिपिबद्धाः कृताः। सा च पूजार्हा कृतिः सम्प्रत्यस्मन्मठे संरक्षिता वर्तते। ततश्च साक्षादधिकृततया ग्रन्थकर्तृपाठपरम्परेदानीमपि सुरक्षितेति महानयमाचार्यपादानामनुग्रह एव। प्रायः, सप्तशतवर्षेभ्यः पुरातनी, आचार्यपादसमकालीना तालपत्रमयी कृतिरियमेकैवेति भाति। तत्र पुनराचार्यपादशिष्येष्वन्यतम एव तत्कृतीः सङ्कलय्यैवमस्मत्कृते विलिख्य न्यधापयदित्यपूर्वोऽयं योगः।

तेन च वयं विचारयन्तोऽभूम, एतावन्तं कालमसुद्रित आचार्यपादकृतीनां प्रतनः पाठः समग्रोऽपीदम्प्रथमतया सद्भ्यस्तत्त्वबुभुत्सुभ्यो देय इति। तदर्थं च प्रथमं मुद्रणाय प्रयतितं च। तदानीमेव श्रीयुतः के. नारायणराव् महाशयः सात्त्विकश्रद्धया सर्वमूलमुद्रणाय सर्वमार्थिकसाहाय्यं दातुं स्वयं पुर आगमत्। तदात्वे माध्वमहामण्डलाध्यक्षाः श्रीपेजावरमठाधीशाः श्रीविश्वेशतीर्थश्रीपादा एतां प्रवृत्तिमस्मासु सूचयामासुः। मुद्रणाय प्रयतन एकत्र प्रेरणा, तत्समकालमेव साहाय्यदानायापरत्र प्रेरणेति भगवत्तमानामाचार्यपादानामेवेयमनुग्रहप्रसररीतिः।

ततश्चास्मन्मठे सुरक्षितं प्रतनपाठं मुद्रयित्वा श्रीमाध्वमहामण्डलद्वारा प्रकाशनाय सम्प्रति पर्यायपीठमधिरूढेभ्यः श्रीपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादेभ्यः प्रादाम। सम्प्रति च श्रीभण्डारकेरिमठाधीशश्रीविद्यामान्यतीर्थश्रीपादानां मण्डलाध्यक्ष्ये तस्यैतस्योद्दिष्टस्य प्रकाशनस्य प्रथमं सम्पुटं श्रीमध्वनवमीमहोत्सवपुण्यावसरे प्राकाश्यमानीयत इति कस्य नाम न सन्तोषपदम्। आशास्महे, अवशिष्टोऽपि ग्रन्थभागः सम्पुटद्वयात्मनाऽचिरादेवाध्येतॄणां हस्तमेतीति।

अत्र प्रकाशनावसरे, मूलकोशादिपरिशोधनेन, पाठान्तरविवेचनेन, तथोपयुक्तस्थलेषु समुचितटिप्पण्यादिसंयोजनेन च प्रकाशनं सवैदुष्यं सम्पाद्य आचार्यपादसेवायां महान्तं भागं निरूढवतः श्रीमतो बन्नञ्जेपदोपाह्वस्य गोविन्दाचार्यस्य श्रीमदाचार्यपादानामनुग्रहः सदा रक्षा भवत्विति सहार्दमाशास्महे।

अथचास्मिन् कोशान्तरसन्तुलनादिकर्मणि सहकृतवतां सर्वेषां विदुषां श्रेयः प्रशास्यते। तथा, एतन्मुद्रणाद्युपयुक्तनिखिलार्थसार्थदानेन श्रीमान् के. नारायणराव् महाशयः आत्मनो दानित्वं सफलीचकार। आत्मनोऽर्थं सार्थं चकार। शुभायति शुभोदर्कं च तस्य दानं श्रेयसा प्रेयसा च तं संयोजयतु। मुद्रणकर्मणि श्रद्धया कृतश्रमं श्रीकौजलगीमहोदयं सानन्दमभिनन्दामहे।

सर्वानपि भगवान् शुभेन संयोजयत्विति—

माघशुक्लनवमी
[ मध्वनवमी ]
शकाब्दाः १८९०

प्रकाशनाध्यक्षाः
श्रीरघुवल्लभतीर्थश्रीपादाः
श्रीपलिमारुमठः
उडुपी ( रूप्यपीठपुरम् )

## प्रस्थानत्रयी

# उपनिषत्प्रस्थानम्

## श्रीमदैतरेयोपनिषद्भाष्यम्

ॐ ॥ एष पन्था एतत् कर्मैतद् ब्रह्मैतत् सत्यं तस्मान्न प्रमाद्येत् तं नातीयान्न ह्यत्यायन् पूर्वे येऽत्यायंस्ते पराबभूवुः ॥१॥ तदुक्तमृषिणा प्रजा ह तिस्रो अत्यायमीयुर्न्यान्या अर्कमभितो विविश्रे। बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेशेति ॥२॥ प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानीमानि वयांसि वङ्गावगधा-

ॐ॥ नारायणं निखिलपूर्णगुणैकदेहं
सर्वज्ञमच्युतमपेतसमस्तदोषम्।
प्राणस्य सर्वचिदचित्परमेश्वरस्य
साक्षादधीश्वरमियां शरणं रमेशम् ॥

प्रादुर्बभूव भगवांस्तपसेतराया नारायणोऽब्जजसुतस्य विशालनाम्नः। तस्मिन् गतेऽध्वरमभूत् सुरविप्रसङ्घो निश्चेतनस्तदनु पद्मभवोऽमुमस्तौत्। तैः[1] संस्तुतः स भगवान् गिरिशेन्द्रमुख्यान् सर्वानबोधयदजेन सहैव तेऽथ। दासत्वमापुरत एव महत्सुराणां दासत्वतः स महिदास इति प्रसिद्धः। शृण्वत्सु तेषु भगवानवदद् रमायै दिव्यां श्रुतिं स परमोऽतिमुदैतरेयीम्। सा बह्वृचैः प्रपठिता चतुराननास्याद् यस्यां रहस्यमुदितं परमं हि विष्णोः। "महाभूतश्रुतिः[2] सैषा महाभूतिर्यतो हरिः। विशेषेणात्र कथितः सर्वज्ञः शाश्वतः प्रभुः" इत्यृक्संहितायाम् ॥*॥ "एष एव सदा पन्था भगवान् पुरुषोत्तमः। नित्यं स्वप्राप्तिहेतुत्वात् कर्तृत्वात् कर्म मातृतः। ब्रह्मैष गुणपूर्णत्वात् सत्यं साधुस्वरूपतः। क्वापि तं विस्मरेन्नैव त्यक्त्वा तं नेतरं व्रजेत्। पूर्वे नैनं तत्यजुर्हि ब्रह्माद्यास्तेन संसृतेः। मुक्ताः श्रीश्च तदत्यागान्नित्यमुक्ता गुणाधिका। विहायस्ययनात्

१ "तेन स्तुतः" इति प्रचलितपाठः। तैरिति पाठे पद्मभवः गिरिशादिभिः सहास्तौदिति ध्येयम्।

२ "महाभूतिश्रुतिः" इति प्र. पाठः। प्रभूतत्वान्महाभूतमिति च भगवानुच्यत इति वक्ष्यते हि।

श्चेरपादा न्यन्या अर्कमभितो विविश्र इति ॥३॥ ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निं बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव बृहद् भुवनेष्व-न्तरसावादित्यः पवमानो हरित आ विवेशेति ॥४॥ वायुरेव पवमानो दिशो हरित आविष्टः ॥५॥*॥ इति प्रथमं ब्राह्मणम् ॥*॥

उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किश्च तस्याग्निरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते अन्तरिक्षमेवोक्थमन्तरिक्षं वा अनु पतन्त्यन्तरिक्षमनु धावयन्ति ॥१॥ तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुतेऽसावेव द्यौरुक्थममुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किश्च ॥२॥ तस्यासावादित्योऽर्कोऽन्न-मशीतयोऽन्नेन हीदं सर्वमश्नुत इत्यधिदैवतमथाध्यात्मम् ॥३॥ पुरुष एवो-क्थमयमेव महान् प्रजापतिरहमुक्थमस्मीति विद्यात् तस्य मुखमेवोक्थं यथा पृथिवी तथा तस्य वागर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते ॥४॥ नासिके एवोक्थं यथाऽन्तरिक्षं तथा तस्य प्राणोऽर्कोऽन्नमशीतयोऽन्नेन

---

प्रोक्ता वयांसीति पिशाचकाः। वर्तितज्ञानतो वङ्गा नरास्तैरवनं सदा। अन्नरूपैर्गृध्नवो हि वङ्गावगधनामकाः। राक्षसा असुरा ईरपादा इति समीरिताः। धर्मो ज्ञानं च वैरा-ग्यमैश्वर्यं चतुरात्मकः। वायुर्देवोऽत्रासुराणामैश्वर्यगुण एव हि। ईरपादास्ततः प्रोक्तास्ते त्रयो विष्णुमत्यजन्। पराभूतास्ततस्ते तु तमस्यन्धे निपातिताः। देवाश्च ऋषयो मर्त्यसत्तमा इति च त्रयः। आश्रिता विष्णुमेवैकं त्रिस्थानस्थितमच्युतम्। अग्निस्थमाश्रिता मर्त्या विष्णुमर्काभिधं परम्। आ जनैरर्चितत्वात् स ह्यर्क इत्युच्यते हरिः। अग्नौ कर्माणि कृत्वैव मानुषा मुक्तिभागिनः। कर्मभिः शुद्धसत्त्वानां कर्म-त्यागोऽपि नान्यथा। आश्रिताः सूर्यगं विष्णुमृषयो बृहदित्यसौ। तेजसा बृंहणादुक्तो विष्णुरादित्य इत्यपि। आदानात् सर्ववस्तूनां स्वाध्यायेनामुमाश्रिताः। मुच्यन्त ऋषयो नित्यं नान्यथा तु कथञ्चन। वायुस्थमाश्रिता देवाः पवमानाभिधं हरिम्। संसारात् पावयित्वा यन्महानन्दे मिनोत्ययम्। पवमानस्ततो विष्णुर्व्याप्तः सर्वासु दिक्षु च। आश्रितो भगवान् सर्वैः सर्वत्रापि विशेषतः। आश्रयात् पृथगुक्तोऽयं नित्यानन्दो रमापतिः ॥*॥ उत्थापनादुक्थनामा स एव पृथिवीस्थितः। प्रथितः पृथिवीनामा सोऽ-न्तरिक्षाभिधोऽत्रगः। अन्तरीक्ष्यो यतो द्युस्थो द्युनामाऽतिप्रकाशनात्। अध्यात्मे च निविष्टोऽसौ पुरुषाख्यो जनार्दनः। पूर्षु स्थितत्वात् स महान् प्रजानां पतिरेव च। अहमुक्थमिति ह्येतां विद्यामनुभवत्यसौ। पृथक् पृथक् च तस्याङ्गान्युक्थानि जगदीशितुः। अग्निवातदिनेशानामुत्थानानि पृथक् पृथक्। वदनं नासिका

हीदं सर्वमश्नुते तदेतद् ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतमिव ललाटमेवोक्थम् ॥५॥*॥ इति द्वितीयं ब्राह्मणम् ॥*॥

यथा द्यौस्तथा तस्य चक्षुरन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते ॥१॥ समानमशीतयोऽध्यात्मं चैवाधिदैवतं चान्नमेवान्नेन हीमानि सर्वाणि भूतानि समनन्ती३ ॥२॥ अन्नेनेमं लोकं जयत्यन्नेनामुं तस्मात् समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेव तदिदमन्नमन्नादमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च ॥३॥ यद्ध किञ्चेदं प्रेता३इ ॥४॥ तदसौ सर्वमत्ति यदु किञ्चातः प्रैती३ तदियं सर्वमत्ति सेयमित्याद्याऽत्र्यत्ता हवा आद्यो भवति न तस्येशे यं नाद्याद् यद्वैनं नाद्युः ॥५॥ अथातो रेतसः सृष्टिः प्रजापते रेतो देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधय ओषधीनां रेतोऽ-

---

नेत्रमित्येतानि परात्मनः । तृचाशीतिविभिन्नस्य शस्त्रस्यान्नत्वहेतुतः । विष्णोस्तृचाशीतिवत् स्यात् प्रसिद्धान्नमिति स्फुटम् । अन्नाभिमानिदेवश्च तृचाशीत्याश्च देवताः । सोम एव ततश्चान्नमशीतय इतीरितम् । अदनाघ्राणदृष्ट्याख्यभोगत्रयविभागतः । मुखनासाचक्षुषां तद्भोग्यमन्नं हरेः श्रुतम् । अरणं गमनं यस्मादर्कः शीघ्रगतित्वतः । श्येन एव तदाकारा चितिरर्कपदोदिता । सुपर्णप्रतिमा सा यत् तदारूढो जनार्दनः । तस्मात् तस्यार्क इति सा प्रोच्यते वैदिकैः पदैः । योऽसौ चितिगतो वीन्द्रः सोऽग्निवातरविष्वपि । तथा वाक्प्राणचक्षुष्षु तस्मात् तेऽर्काः प्रकीर्तिताः । तेषु स्थिते सुपर्णे च रूपभेदैः पृथक् पृथक् । स्थितो विष्णुस्तदर्कास्ते तस्मादेव प्रकीर्तिताः । व्यात्तत्वाज्जीवदेहेषु मुखे विष्णोर्मुखं स्मृतम् । नासयोर्नासिका विष्णोरक्ष्णोरेव तदक्षिणी । जीववाक्प्राणचक्षुष्षु तद्वागाद्यास्ततः स्थिताः । विष्णोर्वाग् भार्गवो रामः प्राणोऽस्य नरकेसरी । चक्षुस्तु कपिलो विष्णुरग्न्यादीनां च कारणम् । जीववागादिसंस्थं च सुपर्णमधिसंस्थिताः । अविशेषोऽपि भगवान् पूर्णैश्वर्यस्वरूपतः । अङ्गाङ्गित्वेनैक एव स्वानन्दानुभवः स्थितः । स एव व्यूह्य चाऽऽत्मानं पृथग्रूप इव स्थितः । सुपर्णनामा भगवान् सुपर्णे च व्यवस्थितः । अग्न्यादिषु च तन्नामा वासुदेवः स संस्थितः । अन्ननामा स एवान्ने चेष्टयन् सर्वमास्थितः। अन्ने स्थितस्स एवेशो ह्यन्नदातृगतिप्रदः। तस्यान्तरिक्षगस्यैव नियमादनु पक्षिणः । पतन्ति धावयन्त्यश्वनरादींश्च नरादयः । परस्य विष्णोर्धामत्वात् सूर्यो ब्रध्न इतीरितः । निहितश्चैव तल्लोको नासिकायां नतस्थले । पृथिव्यां संस्थितो विष्णुः स्त्रीरूपेण द्युलोकतः। पतितं सर्वमेवात्ति तथा दिवि च संस्थितः। इतो गतं सर्वमत्ति द्युनामा भगवान् परः । भोग्यत्वादाद्य इत्युक्त एवमाद्यात्तृरूपवान् । एक एव परो विष्णुरत्ताऽन्यैरुपजीव्यतः । आद्यो भवति चान्येषां नोपजीव्यो

न्नमन्नस्य रेतो रेतो रेतसो रेतः प्रजाः प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसो रेतो वाग् वाचो रेतः कर्म ॥६॥ तदिदं कर्मकृतमयं पुरुषो ब्रह्मणो लोकः स इरामयो यद्धीरामयास्तस्माद्धिरण्मयो हिरण्मयो हवा अमुष्मिन् लोके सम्भवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत् प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे तस्मात् प्रपदे इत्याचक्षते ॥७॥ शफाः खुरा इत्यन्येषां पशूनां तदूर्ध्वमुदसर्पत् तावूरू अभवतामुरु गृणीहीत्यब्रवीत् तदुदरमभवदुर्वेव मे कुर्वित्यब्रवीत् तदुरोऽभवदुदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ता३ई ॥८॥*॥ इति तृतीयं ब्राह्मणम् ॥*॥

---

भवेद् यथा। हरिः स सर्वजीवानां न भुज्यन्ते यथाऽमुना। सर्वे लोकास्तथा कर्तुं नैवेष्टे कश्चन क्वचित्। स एष भगवान् विष्णुः प्रजापतिरितीरितः। तस्माज्जाताः सर्वेदेवा ब्रह्माद्यास्तेभ्य एव च। वृष्टिः सञ्जायते तस्याः सर्वा ओषधयोऽभवन्। ओषधीभ्योऽन्नमन्नाच्च रेतो रेतस एव च। सर्वाः प्रजाः प्रजायन्ते सङ्कल्पो हृदयाभिधः। प्रजाभ्यो जायते तस्माद् विकल्पाख्यं मनस्तथा। विकल्पाद् वाक्प्रचारश्च वाचा नामादिवेदनात्। कर्म सञ्जायते तस्मात् कर्मणश्च जगत् पुनः। कर्माभिमान्ययं जीवः परस्य ब्रह्मणो हरेः। आवासस्थानमुद्दिष्टो विशेषात् स इरामयः। इच्छानुरूपं तु सुखमिरेत्येव प्रकीर्तितम्। इच्छानन्दप्रभूतत्वात् स एव च हिरण्मयः। हिरुक् सुखं हिरण्यं स्याद् बाह्यानन्दात् पृथग् यतः। आधिक्यार्थे मयड् यस्मादधिकानन्दरूपकः। उत्सृज्य कर्मजं रूपं निजानन्दैकरूपकः। एवं नारायणं जानन् सर्वलोकैककारणम्। तल्लोके दृश्यते भूतैर्मुक्तैरानन्दरूपकः। तमिमं प्रथमज्ञानिपुरुषं चतुराननम्। वासुदेवाभिधं ब्रह्म प्राप प्रपदयोः पुरा। यस्मात् प्रपेदे भगवान् प्रपदा चतुराननम्। तस्मात् प्रपदनादेव प्रपदं नाम कीर्तितम्। चतुर्मुखाकारवतां नृणां पादतळोपरि प्रपदाख्या वर्ततेऽतो नतु पश्वादिनां क्वचित्। अथादूर्ध्वं ततो विष्णुः। प्रपदादूरुमत्र च। स्थित ऊरू च तावास्तामूरूध्वंगमनाद्धरेः। किञ्चिदूर्ध्वं ततो गत्वा वायुना सह केशवः। वायुमाहोरुगरणं कुर्वत्र स्थित इत्यपि। उर्वेव गरणं चक्रे वायुर्यत्र स्थितः सदा। तत् स्थानमुदरं नाम पुनराह जनार्दनः। उरु स्थानं निवासं मे कुरु विस्तारसंयुतम्। तथाऽकरोत् स वायुश्च तदुरोऽभू दुरुत्वतः। उरोमध्ये च हृदयं तत्र वासो हरेः सदा। सूक्ष्मदृष्टियुता ये तु मुनयः शार्कराक्ष्यकाः। उदरे ते परं ब्रह्म वासुदेवमुपासते। हृत्स्थमेव परं विष्णुं ध्यायन्त्यारुणयः सदा। उदरस्थं च हृद्गं च ते उभे ब्रह्म तत् परम्। एकमेव यतस्तस्मादुभये ह्यपि तद्विदः ॥*॥ तत ऊर्ध्वं गतो विष्णुर्वायुना सह दैवतैः। स्थितो मूर्धनि देवेशः श्रितोऽसाविति तच्छिरः। तत्र

ऊर्ध्वं त्वेवोदसर्पत् तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत् तच्छिरसः शिरस्त्वम् ॥१॥ ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद ॥२॥ ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन् हन्तास्माच्छरीरादुत्क्रामाम तद् यस्मिन् न उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति ॥३॥ वागुदक्रामदवदन्नश्नन् पिबन्नास्तैव चक्षुरुदक्रामदपश्यन्नश्नन् पिबन्नास्तैव श्रोत्रमुदक्रामदशृण्वन्नश्नन् पिबन्नास्तैव ॥४॥ मन उदक्रामन्मीलित इवाश्नन् पिबन्नास्तैव ॥५॥ प्राण उदक्रामत् तत् प्राण उत्क्रान्तेऽपद्यत तदशीर्यताशारीती३ ॥६॥ तच्छरीरमभवत् तच्छरीरस्य शरीरत्वं शीर्यते हवा अस्य द्विषन् पाप्मा भ्रातृव्यः पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥७॥ ता अहिंसन्तैवाहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन् हन्तेदं पुनः शरीरं प्रविशाम तद् यस्मिन् नः प्रपन्न इदं शरीरमुत्थास्यति तदुक्थं भविष्यतीति वाक् प्राविशदशयदेव चक्षुः प्राविशदशयदेव श्रोत्रं प्राविशदशयदेव मनः प्राविशदशयदेव ॥८॥ प्राणः प्राविशत् तत् प्राणे प्रपन्न उदतिष्ठत् तदुक्थमभवत् तदेतदुक्थं प्राण एव प्राण उक्थमित्येव विद्यात् तं देवा अब्रुवन् त्वमुक्थमसि त्वमिदं सर्वमसि ॥९॥ तव वयं स्मस्त्वम-

---

प्राणात्मना वायुर्मनोरूपेण शङ्करः। शेषः सुपर्ण इन्द्रश्च मनांस्येव पृथक् पृथक्। अहम्भावमनो रुद्रः शेषोऽसौ पाञ्चरात्रिकः। वैदिकं गरुडश्चेन्द्रो यज्ञादिविषयं मनः। श्रोत्रं चन्द्रो रविश्चक्षुर्वागग्निः परिकीर्तितः। एते देवास्तदन्ये च सर्वप्राणिषु संश्रिताः। उपासते सदा[1] विष्णुं परमात्मानमच्युतम्। वाचा हिंसामकुर्वस्ते विनिन्दन्तः परस्परम्। ते विष्णोराज्ञयाऽवोचन्नुत्क्रामाम पृथक् पृथक्। देहादब्जभवस्यास्माद् यस्मिन्नुत्क्रान्त एव हि। शरीरं पद्यते श्रेयान् स न इत्यवधार्यताम्। ततः क्रमेण वाग्याद्या निष्क्रान्तास्तेषु सर्वशः। निष्क्रान्तेषु नवै पातः शरीरस्याभवत् क्वचित्। वायावुत्क्रान्त एवैतच्छरीरमपतत् क्षितौ। उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः। तेषां बलपरीक्षार्थं वाय्वादीनां समस्तशः। पुनस्ते प्राविशन् सर्वे वह्निसूर्यौ शशी शिवः। नोत्थानमभवत् तेषु प्रविष्टेष्वपि सर्वशः। वायौ प्रविष्टे तूत्थानं कायस्याऽसीत् तदैव च। उच्चैः स्थितत्वादुक्थोऽभूद् वायुरेव ततः प्रभुः। उच्चत्वं च गुणाधिक्यं

---

१. "महाविष्णुम्" इति प्र. पाठः।

स्माकमसीति तदप्येतदृषिणोक्तं त्वमस्माकं तव स्मसीति ॥१०॥ तं देवाः प्राणयन्त स प्रणीतः प्रातायत प्रातायीती३ तत् प्रातरभवत् समागादिती३ तत् सायमभवदहरेव प्राणो रात्रिरपानो वागग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रं स एष प्रहितां संयोगोऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत् तदुक्तं भवत्येतद्ध स्मैव तद्विद्वानाह हिरण्यदन् वेदो न तस्येशे यं मह्यं न दद्युरिति ॥ ११ ॥ प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेदैतद्ध तदनीशानानि ह वा अस्मै भूतानि बलिं हरन्ति य एवं वेद ॥१२॥ तत् सत्यं सदिति प्राण-

---

त्वमुच्चोऽसीति तेऽब्रुवन् । भृत्या वयं तवैव स्मस्त्वमस्माकं पतिः सदा । स्पर्धामहे त्वद्बलेन त्वया नान्येन केनचित् । इत्यूचुर्वीन्द्रशेषेशशक्रचन्द्रादिकाः पृथक् । वायुः स संस्तुतस्तैश्च प्रसन्नोऽभूद् दिवौकसाम् । तस्माच्छ्रुत्वा परं ब्रह्म देवा नारायणाभिधम् । शिष्यप्रशिष्यादिषु च तेऽनयन् वायुनोदितम् । वायुमप्यनयन् सर्वे यशसा तद्गुणोक्तितः । ये ये गुणान् विजानन्ति वायोस्तानाविशन्मरुत् । तत्र तत्र प्रविष्टत्वात् प्रततोऽसौ बभूव ह । प्रततत्वात् प्रातरिति तस्य नामाभवद् विभोः । सङ्गतश्चाभवज्जीवचिता रूपान्तरेण सः । सङ्गतत्वात् सायमिति तद् रूपं नामतोऽभवत् । वायोस्तत् पुनरध्यात्मं प्राणापानाभिधं द्वयम् । अध्यात्ममग्निर्वागाख्यश्चक्षुः सूर्यः प्रकीर्तितः । यज्ञादिसाधने यत्तु मनश्चन्द्रः प्रकीर्तितः । मित्रो यमश्च वरुणः कुबेरश्च दिगीश्वराः । श्रोत्राभिमानिनः सर्वे वैदिकश्रवणोचितम् । श्रोत्रं चन्द्रस्तथा स्मार्ततान्त्रिकश्रवणोचितम् । यम एव षडङ्गानां विषयश्रवणोचितम् । श्रोत्रं तु वरुणः काम्यशास्त्रार्थे मित्र एवच । श्रोत्रं यन्नीतिशास्त्रार्थे कुबेरस्तत् प्रकीर्तितः । विष्णुना प्रहितानां हि संयोगोऽध्यात्ममेष हि । शिवादीनां च सर्वेषां मनस्त्वं कथितं पुरः । एताः सर्वा देवता हि ब्रह्मवायुसुपर्णकाः । शेषशङ्करशक्राश्च चन्द्रसूर्ययमा अपि । अग्निश्च मित्रावरुणौ कुबेराद्याश्च सर्वशः । अधिदैवं स एवैक आधिक्यात् पुरुषोत्तमः । दैवमात्रास्तदन्ये तु स आविः पुरुषोत्तमः । पूर्णज्ञानस्वरूपत्वादेतावत् कथितं भवेत् । तात्पर्यात् सर्ववेदैश्च तज्ज्ञानन्नवदन्मुनिः । हिरण्यदन्नाम वैदो भूतेषु हि सुरानृते । मदभीष्टं ममाऽदातुं नैवेष्टे कश्चनाञ्जसा । विष्णुना प्रहितानां हि देवानामहमुत्तमम् । वेदसंयोगमध्यात्मं ततो मुक्तो यथेष्टभुक् । स्यान्नैवात्रास्ति सन्देहः स्वेच्छाविहृतिरेव च । मन्निषेधे न शक्तोऽस्ति प्रीता देवा हि मे सदा । अधिदैवेन सहिता विष्णुना प्रभविष्णुना । एतद्धि तेन कथितं मुनिना तत्त्ववेदिना । विष्णुप्रहितदेवानां योगमध्यात्ममञ्जसा । वेद तं च नियोक्तारमुपास्ते विष्णुमव्ययम् । एतादृशोपासनाया योग्यः सन् सततं सुधीः । स्वस्वाम्यन्यानि भूतानि हरेयुर्बलिमस्य हि । मुक्तस्य वैष्णवे लोके मुक्तानि च न

स्तीत्यन्नं यमित्यसावादित्यस्तदेतत् त्रिवृत् त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति स यदि ह वा अपि मृषा वदति सत्यं हैवास्योदितं भवति य एवमेतत् सत्यस्य सत्यत्वं वेद ॥१३॥ तस्य वाक् तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं हीदं नामानी३ ॥१४॥ सर्वं वाचाऽभिवदति वहन्ति ह वा एनं तन्तिसम्बद्धा य एवं वेद ॥१५॥ तस्योष्णिग् लोमानि त्वग् गायत्री त्रिष्टुप् मांसमनुष्टुप् स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती स च्छन्दोभिश्छन्नो यच्छन्दोभिश्छन्नस्त-स्माच्छन्दांसीत्याचक्षते च्छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणो यस्यां कस्याश्चिद् दिशि कामयते य एवमेतच्छन्दसां छन्दस्त्वं वेद ॥१६॥

---

संशयः। इत्येतद्ध्यानयोग्याश्च मुनयो देवतास्तथा। मानुषा ज्ञानमात्रेण स्वावरैः पूज्यतामियुः। मुक्ता मुक्तैर्मुक्तियोग्या इति शास्त्रस्य निर्णयः। स एष भगवान् विष्णुः सत्यमित्यभिधीयते। सर्वोत्तमत्वात् पूर्णत्वात् सर्वज्ञत्वात् तथैव च। देवतात्रयमन्यच्च पृथक् सत्यमितीर्यते। शेषवीन्द्रशिवादिभ्य उत्तमत्वात् सदैव हि। वायुः सदिति सम्प्रोक्तो जीवेषु तु सुपूर्णतः। तीति ब्रह्मा समुद्दिष्टः स एवान्नाभिमानवान्। अन्नं प्रजापतिरिति श्रुतिरन्या ह्यभाषत। अतिनादात् सदा वेदैरप्यन्नं स चतुर्मुखः। यमित्यादित्य उद्दिष्टो गमयेद् यत् प्रकाशयन्[1]। देवतात्रयमेतत्तु सहितं सत्यमुच्यते। शुक्लकृष्णकनीनासु चक्षुषोऽप्येत आस्थिताः। एवं सत्यपदार्थं यो विज्ञायोपास्त आद-रात्। योग्यस्तस्या उपासाया नैवासत्येन दुष्यति। देवता मुनयश्चैव योग्या अस्या अपि स्फुटम्। मानुषाणां ज्ञानमात्राद् दोषो नातितरां भवेत्। तस्य नारायणस्यैव सर्ववेदात्मिका हि वाक्। तन्तिरूपा जगद्बन्धे नाम ब्रह्मादिकं च यत्। विप्रक्षत्रियवै-श्यादिरूपं चाखिलमेव तु। दाम तेनैव बध्नाति सकलं जगदच्युतः। सर्वे हि नामव-न्तोऽत्र सर्वे वेदोदिता अपि। वेदात्मिकया यतो वाचा विष्णुर्वदति सोऽखिलम्। य एतद् विष्णुवाचैव बद्धं नामाख्यदामभिः। ज्ञात्वा जगदुपास्ते तु योग्यः संस्तदुपासने। तं प्रत्येवाखिलान्येव भूतानि सह दैवतैः। बलिं हरन्ति पश्चाथ भूतान्येनं वहन्ति च। योग्योऽस्याश्चोपासनाया योग्यो ब्रह्मपदस्य यः। भूतयुक्ते रथे तस्मात् स तिष्ठति सुरार्चितः। मुक्तः संश्च तदन्येषां ज्ञानमात्राद् विमुक्तिगैः। स्वावरैः सेव्यतैव स्यात् कैश्चिदेव क्वचित् क्वचित्। तथैव वायुना बद्धं जगदेतत् ततोऽवरम्। सुपर्णशेषगिरि-शशक्रसूर्यादिमञ्जसा। विष्णोर्वायोश्च लोमादौ छन्दांस्येवाऽश्रितानि च। विष्णोर्विमुक्तवायोश्च लोमाद्यं तच्चिदात्मकम्[2]। लोमप्राणादिभेदश्च नैव कश्चि-

---

१ “यमयेद्यत्प्रकाशनात्” इति प्र. पाठः। २. “तु चिदात्मकम्” इति प्र. पाठः।

तदुक्तमृषिणा । अपश्यं गोपामित्येष वै गोपा एष हीदं सर्वं गोपायत्यनि-पद्यमानमिति नह्येष कदाचन संविशत्या च परा च पथिभिश्चरन्तमित्या च ह्येष परा च पथिभिश्चरति ॥१७॥ स सध्रीचीः स विषूचीर्वसान इति सध्रीचीश्च ह्येष विषूचीश्च वस्त इमा एव दिश आवरीवर्ति भुवनेष्वन्तरित्येष ह्यन्तर्भुवनेष्वावरीवर्त्यथो आवृतासोऽवतासो न कर्तृभिरिति ॥१८॥ सर्वं हीदं प्राणेनाऽऽवृतं सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धस्तद्यथाऽयमाकाशः प्राणेन बृहत्या विष्टब्ध एवं सर्वाणि भूतान्या पिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येव विद्यात् ॥१९॥*॥ इति चतुर्थं ब्राह्मणम् ॥*॥

अथातो विभूतयोऽस्य पुरुषस्य वाचा सृष्टौ पृथिवी चाग्निश्चास्यामोषधयो जायन्तेऽग्निरेनाः स्वदयतीदमाहरतेदमाहरतेत्येवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च यावदनु पृथिवी यावदन्वग्निस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च य एवमेतां वाचो

---

चिदात्मनि। छन्नश्छन्दोभिरेवं स केशवस्तेन चाभिधा। छन्दांसीत्येव तेषां हि य एवंविदुपासकः। निवारयन्ति पापेभ्यश्छन्दांसि किमु केशवः। योग्या अस्याश्च विद्याया भृग्वाद्या देवतास्तथा। छन्दस्सु संस्थितो विष्णुर्गोपायत्येव तद्धिदम्। मन्त्रोऽप्यर्थमिमं प्राहापश्यं गोपामिति स्म ह। एष गोप्ता हि सर्वस्य वायुस्थः पुरुषोत्तमः। छन्दस्सु संस्थितो वायुर्वायौ च स जनार्दनः। वायुश्च वायुसंस्थश्च कदाचिन्नहि तिष्ठतः। वायुर्हि नित्यसञ्चारी सदा सर्वप्रवृत्तिमान्। चोदितः केशवेनैव तत्स्थेनामितशक्तिना। आ समन्तात् पराक् चापि पञ्चभूतेभ्य ईश्वरः। वायुस्तस्थो हरिश्चैव चरत्यमितपौरुषः। सध्रीचीनासु पूर्वादिदिक्ष्वेतौ चतसृष्वपि। नित्यदा वसतः कोणादिष्वथापि विषूचिषु। अन्तश्च सर्वभूतेषु चरतो लोकसाक्षिणौ। हस्तयोरेतयोरेव नित्याक्षीणं वसु स्थितम्। तद्व्यसह्यं बलं वायोरनन्तं किमु तद्धरेः। वायोराधारभूतस्य ताभ्यां हि क्रतुनामकः। आवृताः सर्वजीवा हि यथैव कनकावटाः। आच्छाद्यन्ते वित्तविद्भिस्ताभ्यामेवं च चेतनाः। आवृता महदाद्यास्तु देहे तिष्ठन्ति चैतयोः। विष्टब्धाश्चैव सर्वेऽपि जीवा आकाश एव च। स वायुः प्रकृतिश्चैव विष्टब्धौ केशवेन हि। बृहत्वाद् बृहतीत्येव तयोर्नाम प्रकीर्तितम्। वायुकेशवयोः प्राणनाम सर्वप्रणायनात्। विशेषतो बृहत्प्राणो भगवांस्तत्र केशवः। इति विद्यात् तस्य विष्णोरङ्गानामथ वैभवः[1]॥*॥ उच्यते तस्य वाचा हि सृष्टावग्निः क्षितिस्तथा। शुश्रूषार्थे तस्य

---

१ "वैभवम्" इति प्र. पाठः। पुल्लिङ्गप्रयोगेऽपि स एवार्थः। वै भवः इति वा छेदः, अङ्गानां सकाशात् भवः सृष्टिरित्यर्थः। अङ्गेभ्यः सृष्टिकथनं हि प्रस्तुतम्।

विभूतिं वेद प्राणेन सृष्टावन्तरिक्षं च वायुश्चान्तरिक्षं वा अनु चरन्त्यन्तरिक्षमनु शृण्वन्ति वायुरस्मै पुण्यं गन्धमावहत्येवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षं च वायुश्च यावदन्वन्तरिक्षं यावदनु वायुस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यतेऽन्तरिक्षस्य च वायोश्च य एवमेतां प्राणस्य विभूतिं वेद ॥१॥ चक्षुषा सृष्टौ द्यौश्चाऽदित्यश्च द्यौर्हास्मै वृष्टिमन्नाद्यं सम्प्रयच्छत्यादित्योऽस्य ज्योतिःप्रकाशं करोत्येवमेतौ चक्षुः पितरं परिचरतो द्यौश्चाऽदित्यश्च यावदनु द्यौर्यावदन्वादित्यस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते ॥२॥ यावदेतयोर्न जीर्यते दिवश्चाऽदित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद ॥३॥ श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च दिग्भ्यो हैनमायन्ती३ ॥४॥ दिग्भ्यो विशृणोति चन्द्रमा अस्मै पूर्वपक्षापरपक्षान् विचिनोति पुण्याय कर्मण एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च यावदनु दिशो यावदनु चन्द्रमास्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते दिशां च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद ॥५॥ मनसा सृष्टा आपश्च वरुणश्चाऽपो हास्मै

---

पृथ्वी जनयत्योषधीः प्रभोः। ताः पचत्यग्निरुद्युक्त आहृता आहृताः पुनः। आहरेति वचोऽस्यापि शृण्वन्त्येव महर्षयः। मुखजत्वात् तयोर्विष्णोर्मुखं जनक इष्यते। आस्यभोग्यं ततो विष्णोरन्नं तौ कुरुतः सदा। सर्वैर्यद् भुज्यते चान्नं तत्र तत्र स्थितो हरिः। तद् भुङ्क्तेऽतस्तदर्थं हि तावन्नं कुरुतः सदा। विष्णोर्वाग्विभवं वेद य उपास्ते च सर्वदा। योग्यः संस्तदुपासायाः स भूम्यग्निसमन्वितः। समं तयोर्व्याप्तिमांश्च तद्वन्मुक्तश्च नित्यदा। अनष्टलोको वसति समीपे केशवस्य च। योग्या अस्या उपासायाः पृथिव्यग्निपदस्य ये। योग्यास्ते वै मुख्यतया तदन्ये यत्र तौ स्थितौ। तत्र चर्तुं समर्थाः स्युर्मुक्तिं प्राप्य यथेच्छया[1]। कादाचित्कोपासने तु तावत् तेषां च योग्यता। वेदनं ह्यापरोक्ष्येण मुख्यं भवति नान्यथा। एकदेशविदो यस्मात् परोक्षज्ञानिनोऽखिलाः। आपरोक्ष्यं भवेद् यस्मान्नैवोपासामृते क्वचित्। तस्मादुपासापूर्वं तु योऽपरोक्षं प्रपश्यति। स एव वेद नान्यस्तु योग्यश्चैवापरोक्षदृक्। तस्माद् योग्यस्योक्तफलमन्येषां किञ्चिदेव हि। प्राणादिभ्यश्च वाय्वाद्या एवं विष्णोः प्रजज्ञिरे। ब्रह्मशेषसुपर्णेन्द्रशिवाद्या आप ईरिताः। ते विष्णोर्मनसा जाताः सर्वे चाबभिमानिनः। वैश्वदेव्यस्ततो ह्यापो वरुणश्च मनोभवः। प्राणिनां पूर्तपुण्येषु श्रद्धारूपमनोऽधिपः। एवं सर्वा देवता हि

---

१ "यदृच्छया" इति प्र. पाठः। २ "एवं हि सर्वेदेवा" इति प्र. पाठः।

श्रद्धां सन्नमन्ते पुण्याय कर्मणे वरुणोऽस्य प्रजां धर्मेण दाधारैवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यतेऽपां च वरुणस्य च य एवमेतां मनसो विभूतिं वेद ॥६॥*॥ इति पञ्चमं ब्राह्मणम् ॥*॥

आपा इत्याप इति तदिदमाप एवेदं वै मूलमदस्तूलमयं पितैते पुत्रा यत्र ह क्वचन पुत्रस्य तत् पितुर्यत्र वा पितुस्तत् पुत्रस्येत्येतत् तदुक्तं भवत्येतद्ध स्मैतद् विद्वानाह महिदास ऐतरेय आऽहं मां देवेभ्यो वेदा ओ मद् देवान् वेदेतः प्रदाना ह्येत इतः सम्भृता इति स एष गिरिश्चक्षुः श्रोत्रं मनो वाक् प्राणस्तं ब्रह्मगिरिरित्याचक्षते गिरति हवै द्विषन्तं पाप्मानं भ्रातृव्यं पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥१॥ स एषोऽसुः स

---

विष्ण्वङ्गेभ्यः प्रजज्ञिरे। स्वोत्पत्त्यङ्गं च ते विष्णोः शुश्रूयन्ते पृथक् पृथक्। विष्णोर्विषयधर्मेषु ज्ञानादिषु चतुर्मुखः। श्रद्धां ददाति भूतानां वैदिकश्रवणे विपः। तान्त्रिके शेषरुद्रौ च शक्रो यज्ञादिकर्मणि। वायुर्गन्धवहश्चास्य भक्तिज्ञानप्रदस्तथा। भूतानां तस्य विषये त्वन्तरिक्षं च कर्मणः। तदीयस्यैव भोगार्थं जीवानां श्रुतिचारदम्। अन्तरिक्षं च विघ्नेशः सूर्यस्तत्कर्मसिद्धये। भूतानां ज्योतिषो दाता द्यौरप्यह्नाद्यदायिनी। आप इत्येव देवानां ब्रह्मादीनां कथं भवेत्। नामेत्यपृच्छल्लक्ष्मीस्तं महिदासं जनार्दनम्। आप इत्येव नामैषां भवतीत्याह स प्रभुः। इदं मदाख्यं यद् ब्रह्म ह्याप इत्यभिधीयते। आ पूर्णत्वाद् गुणैः सर्वैस्तन्मूलमखिलस्य च। तूलभूतं तदन्यत्तु पिता ह्येष जनार्दनः। पुत्रा ब्रह्मादयः सर्वे नैवायं वृक्षमूलवत्। स्वतन्त्रत्वाज्जगन्नाथः पितृत्वात् परमेशितुः। तन्नामाऽप इति ह्येतत् ब्रह्मरुद्रादिनां भवेत्। यथा यदव इत्येव रघवः कुरवस्तथा। पुत्रनाम पितुश्च स्यात् तत्तन्त्रत्वात् सुतस्य हि। यथा पितामहाद्याश्च पितरो नाम कीर्तिताः। तथाऽपि मुख्यया वृत्त्या व्यवहारव्यवस्थितिः। आप इत्येव सर्वेषां देवानां प्रददौ हरिः। स्वकीयमेवमन्यानि पृथक् पृथगदात् प्रभुः। नारायणादिनामानि ददौ नान्यस्य केशवः। एवं स भगवान् विष्णुर्महिदासाभिधः प्रभुः। जानन्नित्योदितज्ञानादाह देवीमिदं वचः। देवपर्यन्तमा व्याप्तिं वेदाहं मम सर्वदा। मत्पर्यन्तं तथा व्याप्तिं देवानामपि सर्वशः। मयि देवास्तेषु चाहमिति विद्धि वरानने। मयैते हि प्रदत्तानि पदानि ब्रह्मपूर्वकाः। अधितिष्ठन्ति सत्ताद्या अप्येतेषां मदाज्ञया। ज्ञानकर्मबलेहाद्या मद्दत्ता इति किं वदे। सम्भृता मत्त एवैते स एष भगवान् गिरिः। गिरणात् सर्वभूतानां चक्षुर्नामास्य दर्शनात्। सर्वश्रोतृत्वतः श्रोत्रं मनो मन्तृत्वहेतुतः। प्राणनामा प्रणेतृत्वात् तमेनं गुणपूर्तितः। गरणाच्चाखिलस्यास्य प्राहुर्ब्रह्मगिरिं प्रभुम्। य एवं वेद तं विष्णुमापरोक्ष्येण शाश्वतम्। गिरत्येवाखिलं पापं भ्रातृवत् सह संस्थितम्। पराभवति

एष प्राणः स एष भूतिश्चाभूतिश्च तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्त-
स्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह परा बभूवु-
र्भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥२॥
स एष मृत्युश्चैवामृतं च तदुक्तमृषिणा । अपाङ् प्राङेति स्वधया गृभीत
इत्यपानेन ह्ययं यतः प्राणो न पराङ् भवत्यमर्त्यो मर्त्येना सयोनिरित्येतेन
हीदं सर्वं सयोनि मर्त्यानि हीमानि शरीराणी३ ॥३॥ अमृतैषा देवता ता
शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न निचिक्युरन्यमिति निचि-
न्वन्ति हैवेमानि शरीराणी३ ॥४॥ अमृतैवैषा देवताऽमृतो हवा अमुष्मिन्

---

पाप्माऽस्य द्वेष्टा निरयदस्सदा। असनाद् भगवान् सोऽसुः सर्वस्यापि जनार्दनः। प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते। स एव भूतिनामाऽपि ज्ञानैश्वर्यादिभूतिदः। अज्ञानादिप्रदातृत्वात् स एवाभूतिनामकः। सुखज्ञानादिगुणदं पूर्णं सर्वगुणैः प्रभुम्। उपासते तं वाय्वाद्या देवास्तस्माच्च तेऽखिलाः। बभूवुः सुखसज्ज्ञानपूर्वैः सर्वैर्गुणैर्युताः। देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः। स्थित्वा सुप्तेषु विष्णुं तं भूर्भूरित्येव शंसति। भूशब्दार्थो भूतिरिति वैपरीत्येन चासुराः। अभूतिकारणो[1] ऽस्माकमैश्वर्यादिगुणोज्झितः। इत्येवोपासते तस्मात् पराभूताश्च सर्वशः। ज्ञानैश्वर्यादिभिर्हीनाः पेतुरन्धे तमस्यथ। य एवं वेद तं विष्णुं भूतिदं भूतिरूपिणम्। भावाभावं च देवानां दैत्यानां चैवमेवतु। ज्ञानैश्वर्यादिभिः सोऽपि भवेत् तस्य परात्मनः। प्रसादादस्य पाप्मा च पराभवति सर्वशः। स एष भगवान् विष्णुर्मृत्युदो मोक्षदस्तथा। स एव जीवनकरो यदाऽपानेन संयुतः। प्राणं नियमयत्यस्मिन् शरीरे पुरुषोत्तमः। शरीराद् बहिरेतौ तु यदा निःसारयत्यजः। तदा मृत्युप्रदश्चायं मुक्तानामपि जीवनम्। प्राणादेव हि तत्रापि प्राणाधारो जनार्दनः। अपाक्[2] प्राक् च सदा गच्छेद् वायुरानन्दरूपिणा। अनेनैव गृहीतो हि प्राणोऽपानेन संयुतः। अनेन हरिणा यस्मान्नियतो न पराङ् भवेत्। अमर्त्यस्तत्प्रसादेन वायुर्देहैः सह स्थितः। अनित्या अपि देहास्ते शश्वत् सन्त्या विमोक्षतः। स्थूलसूक्ष्मविभागेन किमु वायुर्जगत्प्रभुः। नानागती च तावेतौ वायुः प्राप्नोति केशवम्। शरीरं तु विनष्टं सत् पञ्चत्वमुपगच्छति। जडं तज्जडतामेति चेतना वायुदेवता। चेतनेशं हरिं याति विरुद्धगमनौ च तौ। ऊर्ध्वं गच्छति वायुः स देहोऽधः पतति क्षितौ। दृश्यमेतच्छरीरं चाप्यदृश्यो[3] वायुदेवता। य एवं वेद तं वायुममृतं सर्वनायकम्। पूर्णानन्देन हरिणा गृहीतं तद्वशं सदा। स मुक्तो लोकमाप्नोति विष्णोर्मुक्तैश्च दृश्यते" इति च

---

१ "अभूतिकारकः" इति, २ "अर्वाक्" इति, ३ "अदृश्या" इति च प्रचलिताः पाठाः।

लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो दद्दशे य एवं वेद य एवं वेद ॥
॥५॥॥ इति श्रीमदैतरेयोपनिषदि प्रथमप्रघट्टके षष्ठोऽध्यायः ॥॥
इति प्रथमः प्रघट्टकः

---

ब्रह्म पन्थाः सत्यं कर्मेति तस्य नारायणस्य वासुदेवाद्याः क्रमेण चतस्रो मूर्तयः। नासिकायां यन्नेत्रयोर्मध्ये विनतमिव किञ्चिन्नतस्थानं तत् सूर्यलोकस्थानीयं विद्यात्। तथेति निर्णयः। इरामया इति दैर्घ्यमवधारणार्थं। "दैर्घ्यं प्लुतं च हुङ्कारो[2] बिन्दुरप्यवधारणे" इति हि शब्दनिर्णये। ब्रह्मा हैव ताइ ते।

"देशतः कालतोऽर्थाच्च बलतो गुणतस्तथा। स्वरूपतोऽपि नैव स्याद् भेदोऽल्यल्पोऽपि यत्र हि। केवलैश्वर्ययोगेन यत्र सङ्ख्या द्विवद् भवेत्। स्वरस्पर्शविभागेन तत्रोक्तिः स्याद् विभक्तिषु। अचिन्त्यात्तु तथैश्वर्यादेकोऽपि बहुरूपवत्। प्रकाशयेद् यथा विष्णुः सर्वत्राप्यविशेषवान्। न विशेषो हि रूपाणां मत्स्यादीनां कथञ्चन। नैश्वर्ये न बले चैव नाऽनन्दादिगुणेष्वपि" इत्यादिशब्दनिर्णयवचनाद् द्विवचनमत्र व्यवहारमात्रमिति दर्शयितुं ता इत्युक्तम्। "संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते। उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम्" इत्यतो ब्रह्मा हेति दैर्घ्यमपि परब्रह्मत्वविवक्षया।

अद[1] एव नारायणाख्यमधिकं दैवतमन्यानि दैवतमात्राणि। स्थानान्तरेऽन्येषामप्यधिदैवतत्वकथनं कर्मदेवाद्यपेक्षया। मुख्याधिदैवतं नारायण एव तस्योष्णिग् लोमानीत्यादि लोमसूष्णिगित्याद्यर्थे। "सप्तसु प्रथमा" इति सूत्रात्। "स च्छन्दोभिश्छन्नः" इति वाक्यशेषात्। "ब्राह्मणोऽस्य मुखमासीत्" इत्यादिवच्च।

"अङ्गेषु यस्य च्छन्दांसि देवा लोका मखा अपि। तद्वशा नियता नित्यं नमस्तस्मै परात्मने" इति च स्कान्दे।

अस्मै पुण्याय कर्मण इति। एनमुद्दिश्य जीवानां पुण्यकर्म कर्तुम्। तर्हि स्तुत्यादिकर्माणि कृतानि श्रोत्रेण शृणोति भगवान्। दिग्भ्योऽप्यन्य एव विशृणोति जीवः। अन्येषां जीवानां श्रवणजं भोगं स्वश्रोत्रेण दिग्भिरननुगृहीतेन भगवान् भुङ्क्ते। नच जीववागादिना पृथिव्यग्न्यादिकं सृष्टमित्यत्र किञ्चिन्मानमस्ति। "मुखादिन्द्रश्चाग्निश्च" इत्यादिना भगवतः सकाशाद्धि सर्वेषां सृष्टिः प्रसिद्धा। सृष्टिभेदादन्यथाऽन्यथा वचनम्। नच मुख्यकारणाङ्गीकाराविरोध औपचारिककारणमङ्गीकर्तुं युक्तम्। अतिप्रसङ्गात्। नहि यत्किञ्चित् कारणत्वमस्तीत्येतावता ब्राह्मणस्य चण्डालः पितेत्युच्यते। पितृत्वं चात्रोक्तम् "वाचं पितरम्" इत्यादिना।

"मानुषाणां तु यत् कर्म न देवोत्पत्तिकारणम्। दैवतैरुपकारस्तु क्रियते नरकर्मणा। देवानां कर्मणैवैते जायन्ते सर्वमानुषाः। प्रधानत्वान्न देवानां नृकर्मोत्पत्तिकारणम्" इति च ब्रह्माण्डे।

आह महिदास ऐतरेय इति तु सर्वस्य वचनस्य तदीयत्वप्रकाशनार्थम्, नतु सन्निहितस्यैव। यथा

---

१ "अद उ एव" इति प्र. पाठः। २ "हिङ्कारः" इति प्र. पाठः।

ॐ॥ एष इमं लोकमभ्यार्चत् पुरुषरूपेण य एष तपति प्राणो वाव तदभ्यार्चत् प्राणो ह्येष य एष तपति तं शतं वर्षाण्यभ्यार्चत् तस्माच्छतं वर्षाणि पुरुषायुषो

"इन्द्रं कुत्सः" इत्यादि। यथाच "पूर्वं तु बादरायणो हेतुव्यपदेशात्" इत्यादि ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमहैतरेयोपनिषद्भाष्ये
प्रथमः प्रघट्टकः

---

ॐ॥ एष नारायणो वायुना सहेमं लोकमभ्यार्चत्, ब्रह्मादिशरीरेषु प्रविवेश। पुरुष इत्यन्तर्यामिरूपस्याऽख्या, पुरि शेत इति। प्रसिद्धत्वाच्च पञ्चरात्रेषु। य एष सूर्यमण्डले स्थित्वा तपति स भगवान् नारायणः।

"य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद" इत्यादिश्रुतिभ्यः। "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्युक्त्वा "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्युक्तत्वान्न शिवादयः। शिवो हि विरूपाक्षः। प्रसिद्धश्च पुण्डरीकाक्ष इति भगवान् नारायणः। "यमादित्यो न वेद" इत्युक्तत्वान्नाऽदित्यः। "भेदव्यपदेशाच्चान्यः" इति च भगद्वचनम्। "वृत्रं यदिन्द्र शवसाऽवधीरहिमादित् सूर्यं दिव्याऽऽरोहयो दृशे। यत् सूर्यस्य हरितः पतन्तीः पुरः सतीरुपरा एतशे[2] कः। सीदन्निन्द्रस्य जठरे कनिक्रदन्नृभिर्यतः सूर्यमारोहयो दिवि।", "चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत", "यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः", "उद्वेति प्रसवीता जनानां महान् केतुरर्णवः सूर्यस्य", "येनाऽवृतं खं च दिवं महीं च येनाऽदित्यस्तपति तेजसा भ्राजसा च", "यमन्तःसमुद्रे कवयोऽवयन्ति तदक्षरे परमे प्रजाः", "तमेताः पञ्चदेवताः परिम्रियन्ते विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निः" इत्यादौ सूर्यस्य सर्वत्र पराधीनत्वावगतेश्च। "ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः। केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः" इति च नारसिंहपुराणे। "तापनी पाचिका चैव शोषणी च प्रकाशनी। नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य सा" इति च पाद्मे। "यदादित्यगतं तेजो जगद् भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम्" इति च।

नच विष्णोरन्याधीनत्वं श्रुतिसूक्तं कुत्रचित्। उत्पत्तिस्तु प्रादुर्भावापेक्षया—

"एको नारायण आसीन्न ब्रह्मा नच शङ्करः" इति महाप्रलये तस्यैवावस्थानश्रुतेः। "यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्" इति ब्रह्मशिवादीनां देव्यधीनपदप्राप्तिमुक्त्वा तस्या अपि भगवदधीनत्वम्—"मम योनिरप्स्वान्तः[3] समुद्रे। ततो वितिष्ठे भुवना नु विश्वा", "परो दिवा पर एना पृथिव्या" इत्याह। "अहं रुद्राय

---

१ "नारायणो देवः" २ "एतसे कः" ३ "अप्स्वऽन्तः" इति प्र. पाठाः।

भवन्ति तं यच्छतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तम् ॥१॥ स इदं सर्वं मध्यतो दधे यदिदं किञ्च स इदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मान्मध्यमास्तस्मान्मध्यमा इत्याचक्षत एतमेव सन्तम् ॥ २ ॥ प्राणो वै गृत्सोऽपानो मदः स यत् प्राणो गृत्सोऽपानो मदस्तस्माद् गृत्समदस्तस्माद् गृत्समद इत्याचक्षत एतमेव सन्तम् ॥३॥ तस्येदं विश्वं मित्रमासीद् यदिदं किञ्च तद् यदस्येदं विश्वं मित्रमासीद् यदिदं किञ्च तस्माद् विश्वामित्रस्तस्माद् विश्वामित्र इत्याचक्षत एतमेव सन्तम् ॥४॥ तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तं यद् देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद् वामदेवस्तस्माद् वामदेव इत्याचक्षत एतमेव सन्तम् ॥५॥ स इदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च स यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च तस्मादत्रयस्तस्मादत्रय इत्याचक्षत एतमेव सन्तम् ॥६॥*॥ इति प्रथमं ब्राह्मणम् ॥*॥

---

धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ", "अहं सुवे पितरमस्य मूर्धन्" इति ब्रह्मरुद्रयोर्देव्याः सकाशात् सृष्टिसंहारौ चोक्तौ। "अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः। विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्" इत्यादिना विष्णोः प्रसादादेव शिवादीनां पदप्राप्तिकथनाच्च। "तमेताः सप्ताक्षितय उपतिष्ठन्ते तद् या इमा अक्षन् लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्तः" इत्यादिना शिवादिसर्वदेवोपास्यस्य वायोः "अयं वाव शिशुर्योऽयं मध्यमः प्राणः" इति मध्यमप्राणशब्दोक्तस्य "प्राणः स्थूणा" इति प्राणशब्दोदितो नारायण आश्रय उक्तः। तस्मात् सर्वोत्तमो भगवान् नारायणः प्राणशब्दोदित आदित्यमण्डलस्थस्तपतीत्यादि सिद्धम्। "क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः। आजानजाः कर्मदेवास्तात्त्विका दक्ष एव च। शक्रश्चोमा च रुद्रश्च भारती वायुरेव च। मुक्ता उक्ताः शतगुणा बलज्ञानसुखादिभिः। विष्णुभक्त्यादिभिश्चैव गुणैः सर्वैः क्रमाधिकाः। तस्माद् रमा ततो विष्णुरनन्तगुणतोऽधिकः। नित्यमुक्तः स्वतन्त्रश्च नचान्यस्तादृशः क्वचित्। कुत एवाधिकोऽन्यः स्याद् यन्मुक्ता अपि तद्वशाः। रमाऽपि तद्वशा नित्यं स नान्यस्य वशे प्रभुः। न भेदः शेषशिवयोः सुपर्णः शेषसम्मितः। कामः शक्रसमो नित्यं प्रतिबिम्बाश्च ते क्रमात्" इत्यादि च महासंहितायाम् ॥*॥

स पुरुषेषु शतवर्षं गत इति शतर्चिनामा। बहुरूपत्वाद् बहुवचनम्। एतमेव तथा सन्तं मुख्यत आचक्षते। ऋषींस्तूपचारतः। आत्मन उदरे धृतवान् मध्ये स्थित्वा धृतवांश्च।

"प्राणस्थः प्राणनामाऽसावपानेऽपाननामकः। नेतृत्वाच्चापनेतृत्वाद् भगवान् पुरुषोत्तमः" इति च।

एष उ एव बिभ्रद्वाजः प्रजा वै वाजस्ता एष बिभर्ति यद् बिभर्ति तस्माद् भारद्वाजस्तस्माद् भारद्वाज इत्याचक्षत एतमेव सन्तम् ॥१॥ तं देवा अब्रुवन्नयं वै नः सर्वेषां वशिष्ठ इति तं यद् देवा अब्रुवन्नयं वै नः सर्वेषां वशिष्ठ इति तस्माद् वसिष्ठस्तस्माद् वसिष्ठ इत्याचक्षत एतमेव सन्तम् ॥२॥ स इदं सर्वमभि प्रागाद् यदिदं किञ्च स यदिदं सर्वमभि प्रागाद् यदिदं किञ्च तस्मात् प्रगाथास्तस्मात् प्रगाथा इत्याचक्षत एतमेव सन्तम् ॥३॥ स इदं सर्वमभ्यपवयत यदिदं किञ्च स यदिदं सर्वमभ्यपवयत यदिदं किञ्च तस्मात् पावमान्यस्तस्मात् पावमान्य इत्याचक्षत एतमेव सन्तम् ॥४॥ सोऽब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ॥५॥ ते क्षुद्रसूक्ताश्चाभवन् महासूक्ताश्च तस्मात् क्षुद्रसूक्तास्तस्मात् क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तम् ॥६॥ सूक्तं बतावोचतेति तत् सूक्तमभवत् तस्मात् सूक्तं तस्मात् सूक्तमित्याचक्षत एतमेव सन्तम् ॥७॥ एष वा ऋगेष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्मादृक् तस्मादृगित्याचक्षत एतमेव सन्तम् ॥८॥ एष वा अर्धर्च एष ह्येभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत स यदेभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत तस्मादर्धर्चस्तस्मादर्धर्च इत्याचक्षत एतमेव सन्तम् ॥९॥ एष वै पदमेष हीमानि सर्वाणि भूतानि पादि स यदिमानि सर्वाणि भूतानि पादि तस्मात् पदं तस्मात् पदमित्याचक्षत एतमेव सन्तम् ॥१०॥ एष वा अक्षरमेष

---

वामो भद्रः। वसिष्ठो वसतामुत्तमः। अभ्यपवयत पावयामास संसारात्। तद् विष्ण्वाख्यं ब्रह्म सूक्तान्यवोचतेति सूक्तनामकमभवत्। बतेत्यास्वादने। स्वात्मनैव स्वयं सुष्ठूक्तमिति वा। इदं सर्वं परिपूर्णं सन्नहमल्पप्राणिषु प्रविश्य सूक्ष्मरूपो महाप्राणिषु महारूपश्च भवानीति स भगवानब्रवीत्। तस्मात् क्षुद्रोऽसानीत्युक्तत्वात् क्षुद्रसूक्तास्ते क्षुद्रप्राणिषु स्थिता भगवत्स्वरूपसङ्घाः। महानसानीत्युक्तत्वान्महासूक्ता महाप्राणिस्थिताः[1]। सूक्ष्मरूपत्वादेव क्षुद्रनाम भगवतः। नतु सामर्थ्याल्पत्वात्। नहि सामर्थ्यादिगुणेषु कश्चिद् विशेषो भगवद्रूपेषु। एभ्यः प्राणिभ्यो गतवानित्यृक्। गच्छति हि मरणकाले।

"ब्रह्मणा सम्परित्यक्तो मृत इत्युच्यते बुधैः" इति हि भारते। "म्रियमाणमिमं जीवं वासुदेवादिदेवताः। त्यक्त्वा भागेन गच्छन्ति भागतोऽनुव्रजन्ति तम्। गतैर्भागैरपि पुनर्विशेयुर्भोगसिद्धये। भोग्यलोकमनुप्राप्तं तस्मात् स्वप्नवदन्तरा" इति च। "अर्च गतिपूजनयोः" इति च[2]। "ऋ गतौ" इति धातोः।

---

१ "महाप्राणिषु स्थिताः" २ "अर्च गतिपूजनयोः, ऋ गतौ इति धातोः" इति प्र. पाठौ।

ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति नचैनमति क्षरन्ति स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति नचैनमति क्षरन्ति तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव तथा

---

सर्वेभ्योऽर्द्धेभ्यः स्थानेभ्यः शरीरेभ्यो गतवानित्यर्द्धर्चः[1]। अधिकं क्षरतीत्यक्षरम्। क्षरणं नाम सन्ततदानम्। "क्षर विनाशसन्ततदानयोः" इति धातोः। एवमृषिषु शब्देषु च व्यवह्रियमाणानि सर्वाणि नामानि विष्णोरेव मुख्यतः। किमु देवतानामानि ?

"यो देवानां नामधा एक एव तं सम्प्रदनं भुवना यन्त्यन्या", "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्", "यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः। नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति" इत्यादिश्रुतिभ्यः।

न केवलमृष्यादीनां नाम भगवतः। सर्वे वेदा अपि तस्यैव नाम। किमुच वेदाः ? समुद्रघोषवृक्षपतनभेरीताडनादिसर्वघोषा अपि तस्यैव नामानि यथायोग्यं योजनीयानि। एकमेव व्याहरणम्। एकप्रकारमेव नाम। निर्दोषगुणपूर्तिवाचकत्वादेकप्रकारता। प्राणे नारायण एव। नारायणविषय एव व्यवहारः। ऋचस्तु विशेषत इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयन्तीति प्राणे नारायण एवेति विद्यात्। उक्तं च बृहत्संहितायाम्—

"हुङ्कारेण सदैवाब्धिः सर्वाभिभवशक्तिताम्। विष्णोर्वक्ति यतो हुं हि पराभिभववाचकः। ओमिति स्वरते नित्यं वायुर्मेघेषु संस्थितः। बलवन्नादसंयुक्तो ह्यधिकोच्चत्वमस्य च। ओङ्कारस्यार्थ उद्दिष्ट उक्तार्थाधिक्यमेवच। नादो वली प्रवदति तथा भेरीध्वनिः प्रभोः। अनुदात्तस्वरूपत्वादौदार्यं वदतीशितुः। तदपेक्षयाऽन्यनीचत्वं घण्टाद्याः स्वरितात्मकाः। उच्चस्थितिमुदात्तस्तु स्वर्णचञ्च्वादिकस्वरः। विष्णोर्वक्ति तथा मन्द्रः श्वासादिः प्रचयात्मकः। एकप्रकारतां विष्णोः सदाऽचाल्यां वदत्यपि। इत्यादयः सर्वघोषा विष्णोरेव गुणोन्नतिम्। वदन्ति किमु वेदाद्या मार्जाराद्यभिधास्तथा। मारयित्वा प्रभक्ष्यैव जरयत्यखिलं जगत्। तेन मार्जार उद्दिष्टो मोषणान्मूषिको हरिः। वर्षणाद् वृष उद्दिष्टो वलनाद् वह्निनामकः। तारणात् तृणनामाऽसावित्याद्येकोऽभिधीयते। सर्वनामाऽपि भगवान् सर्वशक्तिश्च सर्ववित्। ब्रह्मरुद्रादिजीवेभ्यो जडेभ्यः श्रिय एवच। व्यतिरिक्तः सदाऽनन्तः सान्द्रानन्दैकरूपकः। तस्यैव मुख्यनामानि समाकृष्येतरेष्वपि। उपचारात् प्रवर्तन्ते व्यवहारप्रसिद्धये। तथैव सर्वनामानि प्रवर्तन्ते च मारुते। न तावन्मुख्यवृत्त्यैव मुख्यतोऽन्यव्यपेक्षया। मुख्यतः सर्वनामा तु विष्णुरेको नचापरः। तस्मात् प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः। अन्यव्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते। वायुश्च सूर्यसंस्थः संस्तपत्येतज्जगत्त्रयम्। आज्ञयैव हरेर्वायोः शक्त्या सूर्यस्तपत्ययम्" इत्यादि।

---

१ अत्र " सर्वाणि भूतान्यपादि। पद गतौ। तस्मात्पदं नाम" इत्यधिकः प्र. पाठः।

सन्तम् ॥११॥ ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात् ॥१२॥ विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषसाद स हान्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ॥१३॥ ऋषे प्रियं वै मे धामोपागाः स वा ऋषे द्वितीयं शंसेति स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे तृतीयं शंसेति सहान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय

---

न प्रसिद्धसूर्यस्येयं तापशक्तिरिति ज्ञापयितुम् "प्राणो ह्येष य एष तपति" इत्युक्तम्। "प्राणाद् वा एष उदेति प्राणेऽस्तमेति" इति च श्रुतिः। प्राणशब्दश्च मुख्यतो विष्णौ वर्तमानोऽपि वायावपि वर्तते। अतः सर्ववेदाद्यभिधेयत्वं वायोरप्यस्ति। "प्राणस्य प्राणः" इति श्रुतेरुभयोरपि प्राणशब्दः सिद्ध एव। "अयं वाव शिशुर्योऽयं मध्यमः प्राणः" इति वायोर्विशेषणादुत्तमः प्राणो विष्णुरिति च सिद्धम्।

"द्वावात्मानौ हि वेदेषु द्वौ प्राणौ द्वौ च चेतनौ। अज्ञानाभिभवास्पृष्टौ वायुर्नारायणश्च तौ। तदन्ये चेतनाः सर्वे प्राणाश्चाऽत्मान एवच। अज्ञानाभिभवस्पृष्टास्तस्मात् ते ह्यधमाः श्रुताः। मध्यमो वायुरेवैक उत्तमः केवलो हरिः। सर्वशब्दोदितौ तस्मादेतौ द्वावेव नापरः। अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः क्वचित्। श्रीरप्यखिलशब्दोक्ता विष्णुवन्नतु मुख्यतः। तस्मादमितनामानावपि तौ मितनामवत्। श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः। अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः। पृथङ्नामानि यस्मात् तद्गुणानेव प्रचक्षते" इत्यादि ब्रह्माण्डे।

अन्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो भगवद्विषया एव मुख्यतः। तदनन्तरं वायुविषयाश्च। तस्माद् बृहतीसहस्रं सर्वं मुख्यतो नारायणस्यान्नम्। तदाश्रया वायोश्च। तस्मात् तच्छंसनेन भगवान् वायुश्चातिप्रीत[1] इति दर्शयति— विश्वामित्रं ह्येतदहरित्यादिना[2]।

"वृत्रं हत्वा पुरेन्द्रस्तु महेन्द्रत्वाभिपत्तये। महाव्रतं कर्म चक्रे हौत्रं चक्रेऽत्र कौशिकः। भृगुरध्वर्युरभवद् ब्रह्मा ब्रह्माऽभवत् स्वयम्। उद्गाता वायुरभवत् स्वयं नारायणः प्रभुः। सादस्यमकरोत् तत्र तदन्येऽन्येऽपिचर्त्विजः। बृहतीसहस्रं शंसिष्यन् यदा सस्मार केशवम्। वायुना सह देवेशस्तदा वासवमाविशत्। आविष्टो विष्णुनाऽथेन्द्रो वायुना सह कौशिकम्। शंसेत्युक्त्वा निषण्णोऽभूदिदमन्नं तवेति सः। ऋक्साहस्रं शशंसात्र[3] यज्ञाङ्गत्वेन भक्तितः। तच्छ्रुत्वा तुष्टिमगमत् केशवो वायुसंयुतः। द्वितीयवारं शंसेति प्राह तं च जनार्दनः। प्रीत्यैव शक्रमाविष्टो विश्वामित्रः शशंस तत्। अतिप्रियत्वाद् भगवान् पुनरप्याह कौशिकम्। तृतीयं च शशंसासौ विष्णोरन्नं प्रकल्प्य तत्।

---

१ "अतिप्रीयेते" २ "ह्येतदहः शंसिष्यन्तमित्यादिना" ३ "शशंसाथ" इति प्र. पाठाः।

तमिन्द्र उवाच ॥१४॥ ऋषे प्रियं वै मे धामोपागा वरं ते ददामीति स होवाच त्वामेव जानीयामिति तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि ॥१५॥ तस्य मेऽन्नं मित्रं दक्षिणं तद् वैश्वामित्रमेष तपन्नेवास्मीति होवाच ॥१६॥*॥ इति द्वितीयं ब्राह्मणम् ॥*॥

---

ततोऽतितुष्टो भगवान् ददानि वरमित्यमुम्। ऊचे स प्रथमे त्वेव निजसालोक्यमीश्वरः। प्रादाद् द्वितीये सामीप्यं तृतीये पुनरेव च। वरं ददानीत्युक्तः सन् मुनिः प्राह जनार्दनम्। सम्यक् त्वामेव जानीयामिति मोक्षे सुखोच्चताम्। इच्छंस्तं प्राह भगवानिन्द्रस्थो वायुसंयुतः। सर्वनामाऽहमस्म्येक इति ज्ञानं ममोत्तमम्। यस्मात् सर्वगुणत्वं स्यात् सर्वनामत्व एव तु। नहि दोषाभिधायीनि विष्णोर्नामानि कानिचित्। अदोषत्वान्महाविष्णोर्न सामान्यवचांस्यपि। सर्वोत्तमगुणात्मत्वात् सदा नारायणस्य हि। सर्वोत्तमगुणानेव नामान्याचक्षते हरेः। यावज्ज्ञानेन मोक्षः स्यात् तावज्ज्ञात्वाऽपि कौशिकः। अधिकज्ञानलब्ध्यर्थं मोक्षेऽधिकसुखाप्तये। जानीयां त्वामिति प्राह तस्मा आह स केशवः। इन्द्राविष्टः प्राणनाम तथाऽन्याश्चाभिधाः प्रभुः। प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते। अहेयत्वादहंनामाऽस्म्यसनान्मिनुतेरपि। ततो वेत्तेति च त्वं स पूर्णत्वात् सर्वनामकः। सर्वाणि बहुरूपत्वात् सर्वरूपेषु पूर्तितः। प्रभूतत्वाद् भूतनामा सर्वरूपप्रभूततः। बहुरूपः स भूतानीत्युक्तो विष्णुः सनातनः। सर्वैश्वर्यस्वरूपत्वादेष इत्यभिधीयते। स एव सूर्यसंस्थः सन् लोकं तपति केशवः। सर्वनामवतस्तस्य ममान्नं मित्रमुच्यते। अन्नाभिमानिनी साक्षाच्छ्रीरेव प्रमदोत्तमा। साऽन्नमित्युच्यते विष्णोर्भोग्यत्वान्मित्रमेव च। दक्षभागस्थितेनत्वाद् दक्षिणं नाम सोच्यते। तस्या इनो हि विष्णुः स दक्षभागे स्थितः सदा। यस्याभिमानिन्यन्नस्य लक्ष्मीः सा देवतोत्तमा। वैश्वामित्रं तदन्नं तु ऋक्सहस्रात्मकं मतम्। विश्वामित्रेण दृष्टत्वाद् वैश्वामित्रं तदीर्यते। इन्द्राविष्टः कोऽयमिति शङ्कां परिहरन् हरिः। आदित्यसंस्थितो विणुस्तपन्नस्मीति चोचिवान्। त्वां जानीयामिति प्रश्नं विश्वामित्रस्य कुर्वतः। अभिप्रायद्वयं ह्यस्ति शक्राविष्टो न चापरः। हरेरिति तु मे तर्कस्तेजोबाहुल्यतोऽजनि। तस्य तर्कस्य सत्यत्वं ज्ञातव्यं प्रथमं मम। द्वितीयं यदि विष्णुः स्याज्ज्ञातव्यो मे विशेषतः। इत्यभिप्रायमस्यैव ज्ञात्वा विष्णुः सनातनः। अभिप्रायद्वयस्यापि परिहारं हरिर्ददौ। प्राणो वाऽहमित्यादि नामसन्दर्भमुक्तवान्। विशेषज्ञानसिद्ध्यर्थं नाम्नामुक्तिः परात्मनः। इन्द्राविष्टः कोऽयमिति शङ्कानुत्त्यर्थमेव च। तपन्नेवास्मीत्यवदत् तपन्तं वेद सोऽपि हि। नारायणं सूर्यगतं गायत्र्योपासको हि सः" इत्यादि ब्रह्माण्डे।

उपनिषण्णमिन्द्रं दृष्ट्वाऽपि त्वामेव जानीयामिति वरस्वीकारादिन्द्रादेव चेन्द्राविष्टो भगवानत्रोक्त इति ज्ञायते। इन्द्रं तु जानात्येव हि विश्वामित्रः। भगवन्तमपि स्वरूपत आगतं जानात्येव।

विशेषज्ञानप्रार्थने "प्राणो वा अहमस्म्यृषे" इत्यादिकमेव पूर्यते। "एष तपन्नेवास्मि" इति व्यर्थम्। "प्राणो ह्येष य एष तपति" इत्युक्तत्वात्। "स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि" इत्यादिनाऽप्याविष्टस्य विष्णुत्वं किञ्चिज्ज्ञायते। तथाऽप्येतेनेति तृतीयात्वात् करणत्वाशङ्का भवति। "तस्य मे" इति वैयधिकरण्यमिति च। अतो भगवन्नामानि पृथगुक्त्वाऽहं विष्णुरिति "एष तपन्नेवास्मि" इत्युवाचेन्द्रशरीरमेव पश्यतो विश्वामित्रस्य तर्कमात्रतो भगवानिति किञ्चिज्जानत इति ज्ञायते। नचेन्द्रस्य प्राणशब्दाभिधेयत्वं[1] च विद्यते। "अजस्य नाभावध्येकमर्पितम्" इत्युक्तस्य पद्मनाभस्य हि "यो देवानां नामधा एक एव" इति सर्वदेवाभिधानत्वमुक्तम्। इन्द्रे हीन्द्रशब्दोऽपि न मुख्यतो वर्तते। परमैश्वर्याभावात्। इन्द्रशब्दोऽपि विष्णावेव वर्तते। स हि परमेश्वरः।

"यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः" इति श्रुतेश्च। "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्" इत्यादेश्च। "सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि" इत्यादिना हि विष्णुरेव हि तत्र प्रस्तुतः। "नामानि विश्वाऽभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम्। नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति" इति च श्रुतिः। "यो देवानां नामधा एक एव" इत्यवधारणान्नान्यस्य सर्वनामवत्त्वम्।

स च विष्णोर्नान्यः। पद्मनाभत्वादेव। श्रियो वायोरपि न नारायणादिनामवत्त्वम्।

"एको वासुदेवस्तत्सदृशपरौ न स्तः" इति हि श्रुतिः। "एको नारायणस्तत्समोऽधिको वा नास्ति" इति च। "येनाऽवृतं खं च दिवं महीं च येनाऽदित्यस्तपति तेजसा भ्राजसा च", "यमन्तः समुद्रे कवयोऽवयन्ति तदक्षरे[2] परमे प्रजाः" इत्युक्तस्य समुद्रशायिन एव नारायणस्य "तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्" इति परमब्रह्मत्वावधारणाच्च विष्णोः परं सदृशं वा नास्त्येव; अतस्तदत्रोच्यत इत्यपि न वक्तव्यम्। "परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति", "न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप" इत्यादेश्च। "नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन्। नकिरेवा यथा त्वम्" इत्याद्यपि सर्वनामकत्वात् तस्यैव। "किमेकं दैवतं लोके किंवाऽप्येकं परायणम्" इत्यादिप्रश्नस्यापि—"परमं यो महत् तेजः परमं यो महत् तपः। परमं यो महद् ब्रह्म परमं यः परायणम्। पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्। दैवतं देवतानां च भूतानां योऽव्ययः पिता। यतः सर्वाणि भूतानि भवन्त्यादियुगागमे। यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये। तस्य लोकप्रधानस्य जगन्नाथस्य भूपते। विष्णोर्नामसहस्रम्" इत्येव भारतेषु परिहाराच्च।

"मेऽन्नं दक्षिणम्" इत्युक्तत्वाच्च विष्णुरेवेति ज्ञायते। स हि विष्णुर्दक्षिणामित्र उक्तो हरिवंशेषु धन्याश्चर्याध्याये—

"दक्षिणाभिः सहैवैतन्मदधस्ताज्जगत् सदा। धन्याश्चर्योऽहमेवैको मित्रं मे दक्षिणा

---

१ "प्राणशब्दः सर्वशब्दाभिधेयत्वं च" २ "यदक्षरे" इति प्र. पाठौ।

रमा। इत्यवादीद्धरिर्भूपा धन्योऽसीत्युदितो मया'' इति नारदवचनम्।
नच बृहतीसहस्राभिमानिनीं देवीं विना चेतनमात्रस्य मुख्यमित्रत्वं युज्यते—

"मिनोति त्रायते चेति मित्रमित्यभिधीयते। तस्माद् यो यं विजानाति स मित्रं तस्य नान्यथा'' इति हि भारते।

उक्थायुत्वाच्च विष्णुरेवात्रोक्त इत्यवगम्यते। बृहतीसहस्रं ह्युक्थनामकं मुख्यतः—

"महाव्रतनियुक्तं यदृक्सहस्रं हरेः प्रियम्। तदुक्थमिति सम्प्रोक्तं तेने यो विष्णुरेव हि। तस्मादुक्थायुरित्युक्त ऐश्वर्यादिन्द्र उच्यते । तस्मादुक्थायुरिन्द्रेति विष्णुर्यज्ञेषु पूज्यते'' इति हि गारुडे।

विष्णुर्ह्युक्थायुरिन्द्र इत्युच्यते यज्ञेषु। अन्य इन्द्रः पृथक् चोच्यते। "यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः'' इत्युक्त्वा "तस्मै त्वा तेभ्यः'' त्विति भेदवचनाच्च। सत्य इति वायुः—

"सदिति प्राणः'' इति श्रुतेः। "सदेव सत्यमित्युक्तं सत्यो वायुरुदाहृतः। साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः'' इति शब्दनिर्णये।

प्रियधाम्नः उप समीपे गमनं नाम तद्धामप्राप्तिकारणभगवत्प्रसादप्राप्तिः। अन्यथोपशब्दो व्यर्थः स्यात्। नच तदैव भगवतः प्रियं धाम विश्वामित्रेण प्राप्तम्।

"बृहतीसहस्रे प्रथमे सालोक्यं प्रददौ हरिः। द्वितीये स्वपुरप्राप्तिं तृतीयेऽन्तःपुरस्य च। तथा स्वविषयं ज्ञानं विश्वामित्रे ददौ प्रभुः'' इति च गारुडे।

नचेन्द्रादिभिरैक्यमत्रोच्यते। "प्राणस्तथाऽनुगमात्'' इति च विष्णोरेव प्राणशब्दाभिधेयत्वमुक्त्वा "न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्'' इति च बृहतीसहस्रशंसितुर्विश्वामित्रस्येन्द्रेण स्वात्मोपदेशः क्रियत इति पक्षो निराकृतो भगवता सूत्रेषु। अध्यात्मसम्बन्धशब्देनाऽवेशो हि विष्णोरिन्द्रे विवक्षितो भगवता। अन्येष्वप्यन्तर्यामिरूपेण सम्बन्धोऽस्त्येव। अस्मिन्निन्द्रे तु विशेषावेशस्तात्कालिकः। अधिकात्मनः परमात्मनः सम्बन्धोऽध्यात्मसम्बन्धः। नहि स्वात्मना स्वस्य सम्बन्धो भवति। यद्यध्यात्ममत्रोच्यत इति विवक्षितं तर्ह्यध्यात्मभूमेत्येव स्यात्। सम्बन्धशब्दो व्यर्थः। तस्मादिन्द्रादिजीवेभ्यो विष्णोर्भेद एवात्र भगवतो विवक्षितः। "शास्त्रदृष्ट्या तूपदेशो वामदेववत्'' इति शास्तुरन्तर्यामिणो विष्णोः सर्वशरीरे स्थितत्वात् सर्वनामाभिधेयत्वं चोक्तम्— "अहं मनुरभवं सूर्यश्च'' इत्यादिवत्। नहि मनुसूर्यादिर्भवति वामदेवस्तेषां पक्षेऽपि। सर्वप्रवृत्तिहीनतां हि ते मोक्षं वदन्ति। अत्र च "अहं भूमिमददामार्याय'' इत्यादिना प्रवृत्तिरेवोच्यते। नच वामदेवेन मन्वादिकर्म क्रियते कदाऽपि। अतीतार्थश्चायं दृश्यते भूमिमददामित्यादिना। नहि पूर्वं वामदेवेन तानि कर्माणि कृतानि। भगवान् विष्णुर्हीन्द्राय भूमिमददात्। स एव च सर्वेष्वन्तर्यामित्वेन स्थित्वा नामप्रवृत्तिनिमित्तानि सर्वकर्माणि कुर्वन्नवबोधसूरिनियमनादिभिर्मनुसूर्यादिसर्वनामा भवति। यदि भेदस्य पूर्वमपि मिथ्यात्वमङ्गीक्रियते तर्हि भूमिदानादिसर्वकर्मणां मन्वादित्वस्यापि मिथ्यात्वात् "अहं मनुरभवम्'' इत्यादि सर्वमनर्थकमेव भवति।

"जीवेश्वरभिदा चैव जीवभेदः परस्परम्। जडेश्वरभिदा चैव जडभेदस्तथैव च।

ऽगतमहमिति तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति। तावन्ति पुरुषायुषोऽह्नां

---

उभयोः पक्षयोः स्थित्वा वहतोऽश्वात्मकौ तयोः। उद्धारणार्थमेतेषामुमा वाचि समास्थिता। नागाकारैव रश्मित्वमगमद् वैष्णवे रथे। मनसि स्थितः[1] शिवश्चात्र मनोनामा महाबलः। अभवत् सारथिर्विष्णोर्विष्णुर्वायुश्च तं रथम्। प्रकृष्टानन्दरूपत्वात् प्राणाख्यावधितिष्ठतः। तावेव चाश्विनामानौ हयास्यौ जगदीश्वरौ" इत्यादि गारुडे। "तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति च श्रुतिः। "सर्वसाधुगुणत्वात्तु वायुः सत्य इतीर्यते। तस्यापि सत्यतादाता साधुपूर्णगुणो हरिः। सत्यस्य सत्य एतस्मात् स्त्रीपुंरूपः स केशवः। यस्मिन् स्वात्मनि युक्तः स रमते स्त्रीपुमात्मना। मुनिगन्धर्वपित्राद्यैर्न तत् प्राप्यं कथञ्चन। प्राप्नुवन्ति[2] सुराः सर्वे तद्रूपं जाज्वलत् सदा। अर्धनारीपुमाकारं तस्य वामस्थितानि च। स्त्रीरूपाणि तु सर्वाणि विष्णोरत्यद्भुतानि च। विष्णोर्यानि तु पुंरूपाण्यास्थितान्यस्य दक्षिणे। तान्यस्यैव तु रूपाणि युज्यन्तेऽत्र परस्परम्। एष नारायणो देवो ह्यर्धनारीपुमात्मकः। सर्वे देवाः सभार्याश्च तं प्राप्य पुरुषोत्तमम्। एकीभावं स्वभार्याभिरर्धनारीनरात्मना[3]। प्राप्यैवोपासते विष्णुं मुक्ताः संसारसागरात्। मोदन्ते च रमन्ते च विभागं चेच्छयाऽऽप्नुयुः। बहुधा च भवन्त्येते स्त्रीपुमात्मपृथक्त्वतः। प्रसादाद् वासुदेवस्य भागः स्त्रीपुंस्वरूपिणः। तेनैव नियता नित्यं तद्वशास्तत्परायणाः। रमन्तेऽनन्यगम्योऽसौ देशो विष्णोः परात्मनः। स्त्रीपुंरूपेण युक्तं तद् यद् विष्णवाख्यं पराक्षरम्[4]। अक्षरादेव परमात् पुंसो नारायणाभिधात्। आगच्छति तदेते[5] च देवा भार्यासमन्विताः। वहन्त्यश्वादिरूपेण रथस्थं परमं वपुः। तत् सर्वदेवैः प्राप्यं च नान्यैः कथमपि क्वचित्। मितादिपञ्चरूपं यद् वाक्यं लोकेऽथवा श्रुतौ। नारायणस्य नामैतदिति जानन्ति देवताः। मनोवाक्कर्मभिस्तस्माद् योगमाप्स्यन्ति तत्र ते। सर्वशब्दान् हरौ नेतुं कस्य देवानृते बलम्। वाय्वन्तास्तारतम्येन विष्णुनामार्थवेदिनः। सम्यग् वेत्ता मारुतोऽत्र तस्मान्मुक्तेभ्य एव च। सुरेभ्योऽधिकमानन्दं नित्यं भुङ्क्ते हरेरनु" इत्याद्यर्धनारीनारायणतन्त्रे।

एवं सर्वे शब्दा भगवद्वाचका इत्युक्त्वा अकारो विशेषतो नारायणवाचक इत्याह–अः इति ब्रह्मेति।

"इतिशब्दोऽभिधानान्ते यत्र वैशेषिकं हि तत्। नाम स्यादिति मे साक्षान्निर्णयः समुदाहृतः" इति शब्दनिर्णये।

तत्राऽगतमहमिति। यस्माद् इत्ययं शब्दः प्रस्तुतस्याभावं विरोधिनमन्यं च वदति तस्मात् प्रत्यक्षत्वाज्जीवजडात्मकस्य जगत एवानुक्तावपि प्रस्तुतरूपत्वात् तदन्यस्तद्विरोधी तत्र दृश्यमान-

---

[1] "मनस्थितः" [2] "आप्नुवन्ति" [3] "अर्धनारीपुमात्मना" [4] "तद् विष्णवाख्यं परमक्षरम्" [5] "तदैते" इति प्र. पाठाः।

दोषवर्जितश्चाकारशब्दार्थ इति सिद्ध्यति । मनसि प्रस्तुतत्वादवचनेऽपि प्रस्तुतमेवेदं सर्वम् । दृष्टसम्बन्धित्वाददृष्टं सर्वमपि प्रस्तुतं भवति । भगवांस्त्व इति पृथग् विवक्षितत्वादेव न प्रस्तुतसमुदाये । नच शून्यस्याशब्दार्थता । शून्याङ्गीकारे ह्यकारस्याभावताख्य एक एवार्थ इति सिद्ध्यति । विष्णोरङ्गीकारे त्वभावताऽन्यता विरोधितेति त्रयोऽप्यर्थाः सम्यगेव सिद्ध्यन्ति । तस्मादकारस्य भगवानेव मुख्यार्थः । न शून्यम् । एकदेशार्थत्वात् । तस्मादमुख्यार्थत्वादन्ययुक्तेनैवाकारेणाभाव इत्येव तदुच्यते[1] । नत्व इत्येव केनचित् क्वचित् । नच तथा प्रयोगोऽस्ति । तस्मात् पारतन्त्र्याल्पगुणत्वादिसर्ववस्तुस्वभावविरुद्धस्वभावं स्वतन्त्रं पूर्णगुणं सर्वजीवजडेभ्योऽन्यदज्ञानदुःखाल्पत्वपारतन्त्र्योत्पत्तिनाशादिसर्वदोषवर्जितं ब्रह्मैवाशब्दार्थः । पूर्णं हि ब्रह्मशब्दस्यार्थः । नच दोषयुक्तस्य पूर्णता । नच जीवजडाद्यपूर्णवस्त्वभिन्नस्य पूर्णत्वं भवति । तस्मादकारशब्दार्थ एव ब्रह्मशब्दार्थः । तदेतदुक्तम् —"अः इति ब्रह्म" इति । अः इति पृथक्त्वेन वचनं तत्सममधिकं वा किमपि नास्तीति दर्शयितुम् ।

"विवृत्तावपि सर्गः स्यात् संहितायां च यत्र हि । समानोत्तमहीनत्वमुच्यते वस्तुनोऽञ्जसा" इति शब्दनिर्णये ।

अः इति ब्रह्म पूर्णं वस्तूच्यते । तत्राऽगतमहमिति । तत्राकारस्य पूर्णवाचित्वेऽहमेव सोऽकारवाच्य इत्याह महिदासरूपो भगवान् नारायणः । अहमेक एव हि परिपूर्णः[3] । अन्येषां सर्वेषां मदधीनत्वादल्पत्वादिति । मुक्तेभ्यः प्रळये[4] लीनेभ्यश्च वस्तुभ्यः सर्वदा[5] विभिन्न एव भगवानिति दर्शयितुं च अः इति पृथग् वचनम् । तच्चोक्तं वाक्यनिर्णये—

"मुक्ता अपि न विष्णुत्वं यान्ति तत्समतामपि । आधिक्यं कुत एव स्यान्मुक्तानां मुक्तिदातृतः । कुत एव प्रलीनानां प्रळये[4] तु तदात्मता । ब्रह्मशर्वेन्द्रपूर्वाणां मुक्तावपि न विष्णुता । यदा तदातु संसारे क्व तद्रूपत्वमिष्यते । अन्योऽसौ सर्वतो विष्णुः स्वातन्त्र्याद् गुणपूर्तितः । सर्ववस्तुस्वभावस्य विरुद्धोरुस्वभावतः[6] । पारतन्त्र्याल्पताऽज्ञानजनिनाशादिवर्जितः । अकारेण ततो विष्णुः संहितायां पदात्मना । बह्वृचोपनिषत्प्रोक्तस्तेनैव परमात्मना । महिदासावतारेण सोऽहमेवंविधस्त्विति । मत्तोऽन्यो नहि पूर्णोऽस्ति यतोऽकारश्च पूर्णताम् । वक्ति तस्मादकारोऽयं मामेव वदति स्फुटम् । नाभाववाच्यकारः स्यादर्थत्रययुतो यतः । एकार्थात्मा ह्यभावः स्यान्निषेधैकस्वरूपतः । अन्यता च निषेधश्च विरुद्धत्वमिति त्रयः । अकारार्था ह्यभावस्तु निषेधैकस्वरूपकः[7] । एकदेशस्वरूपत्वान्नाकारेणैव भण्यते । किन्त्वभाव इति त्वेव तेनाकारोदितो हरिः" इति च ।

नच निषेधरूपे[8] विरुद्धता चान्यता चास्तीत्येतावता पूर्णार्थता भवति । तदाऽर्थत्रयकथनस्य[9] वैयर्थ्यात् । उक्तं हि शब्दनिर्णये—

"विरुद्धतानिषेधान्यभावयुक्तो[10] हि केवलः । अकारो वर्तते तेषामेकार्थात्मन्यभावके । वर्ततेऽभाव इत्येव नत्व इत्येव केवलः" इति ।

---

१ " इति तदुच्यते " २ "विवर्जितम्" ३ " एव परिपूर्णः " ४ " प्रलये " ५ " सर्ववस्तुभ्यश्च सदा " ६ " स्वभावकः " ७ " स्वरूपतः " ८ " निषेधस्वरूपे " ९ " कल्पनस्य " १० " भावयुक्ते " इति प्र. पाठाः ।

सहस्राणि भवन्ति ॥५॥ जीवाक्षरेणैव जीवाहराप्नोति जीवाह्वा जीवाक्षरमित्यन-
काममारोऽथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्ग्रहीता

---

तस्मान्नारायण एवाकारवाच्य इति सिद्धम् ।

"यतोऽकारः सदा विष्णोर्वाचकत्वेन संस्थितः । तस्माद् वर्णत्रयात्माऽयं प्रणवोऽपि त्रयात्मकम् । हरिमेव सदा वक्ति नैवान्यं कञ्चन क्वचित् । सृष्टिकर्ता ब्रह्मनामा योऽसृजच्चतुराननम् । अन्तर्यामी विरिञ्चस्य सोऽकारार्थो जनार्दनः । वैकुण्ठलोक आस्ते स द्वितीयवपुषा हरिः । उकारवाच्यः स विभुर्नृसिंहो रुद्रनामकः । रौद्रत्वात् स शिवस्यापि स्रष्टा संहारकारकः । अन्तर्यामी शिवस्यापि मकारार्थः प्रकीर्तितः । एवं त्र्यात्मकं[1] विष्णुं प्रणवोऽयं त्रियात्मकः । एकं पृथगिवाऽचष्टे बिन्दुर्वक्त्यनिरुद्धकम् । प्रद्युम्नाद्यान् नादपूर्वाः सर्वान् नारायणात्मकान् । पद्मनाभादिका एव मूर्तीर्नारायणोत्तराः । प्रणवोऽयं वदत्यष्टौ तस्मान्नान्याभिधायकः" इति तत्त्वसारे । "षट्त्रिंशतिसहस्राणि बृहत्युक्थार्णगानि तु । स्त्रीरूपाणि हरेस्तावदह्नामप्यभिमानिषु । सूर्यरूपेषु रूपाणि पुमाकाराणि सर्वशः । एतैः पुरुषगै रूपैर्बृहदुक्थव्यवस्थितैः[2] । कदाचिद् भगवान् विष्णुः पुमाकाराणि तानि च । कृत्वा सूर्यगतान्येव स्त्रीरूपाणि विधाय च । तान्याप्नोति च पुंरूपैस्तैरेवाक्षरगानि च । स्त्रीरूपाणि जगन्नाथः प्राप्नोत्यात्मेच्छया प्रभुः । पुंरूपः प्रमदारूपः स्वरूपै रमते स्वयम् । एकीकृत्य च तान्येव द्विरूपो रमते तथा । स एव रमते मायास्थितात्मस्त्रीतनौ[3] हरिः । प्राणस्योत्पत्तिकामः सन्ननेच्छामारनामकः" इत्याद्यर्धनारीनारायणतन्त्रे[4] ।

वायोरुत्पत्तिकामो मायायां रमायां[5] रमत इत्यनकाममारः । जीवे स्थितेनाक्षरगेनाक्षरनाम्ना[6] स्वरूपेण जीवाख्यसूर्यस्थितमहराख्यं स्वरूपमाप्नोति तेन चाक्षराख्यं स्वरूपमाप्नोति । "यदक्षरादक्षरमेति युक्तम्" इत्यस्य व्याख्यानरूपत्वाच्चैतदवसीयते । पुमांसं स्त्रियं च वदन्नेव न वदतीत्युक्तत्वादुभयात्मकं रूपं प्रतीयते । अस्त्रीपुमानिति ब्रुवन्नपि न वदतीत्युक्तत्वाच्च स्त्रीत्वं पुंस्त्वं च प्रतीयते विष्णोः । नच नपुंसकरूपं भगवतः कुत्रचिदुक्तम् । प्रसिद्धमेव च रूपद्वयम् । अतो नपुंसके वदन्नपि न वदतीति न तद्वदनुषज्जते । नपुंसकरूपे प्रमाणाभावादेव । लौकिकस्त्रीपुंविलक्षणत्वादस्त्रीपुमानित्यपि वदन्निति भवति ।

"स्त्रीपुंरूपद्वयी विष्णोर्न तृतीयं कथञ्चन । साक्षान्नपुंसकस्तस्मान्मुक्तिभागी नतु क्वचित्"

इति च ब्रह्माण्डे ।

नच रक्ष इति नपुंसकशब्दमात्रेण रावणादयो नपुंसका भवन्ति । भवतीति पदाभावादनकाममार इति भगवन्नामैवेति ज्ञायते ।

---

१ "त्रियात्मकम्" २ "बृहत्युक्थव्यवस्थितैः" ३ "मायां स्थितात्मस्त्रीतनौ" ४ "इत्यर्धनारीनारायण" ५ "मायां रमायां" ६ "जीवस्थितेन" ७ "अनुषज्यते" ८ "रूपद्वयम्" ९ "इति ब्रह्माण्डे" इति प्र. पाठाः ।

तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा ॥६॥ आ तेन यातं मनसो जवीयसा निमिषश्चिज्जवीयसेति जवीयसेति ॥७॥*॥ इति सप्तमं ब्राह्मणम् ॥*॥

इति श्रीमहैतरेयोपनिषदि द्वितीयप्रघट्टके द्वितीयोऽध्यायः

---

"ऋष ज्ञान इति ह्यद्वा[1] धातोः सर्वज्ञ एकराट् । वेदद्रष्टा परमर्षि[2]र्हयास्यः पुरुषोत्तमः । मन्त्राणां प्रथमो द्रष्टा सर्वेषां योऽत एव तु[3] । ऋषिणोक्तमिति प्राहुर्मन्त्रोक्तं ब्राह्मणान्यतः । तत्प्रसादाद्धि तपसा पश्चान्मन्त्रान् प्रपेदिरे । ब्रह्माद्या ब्राह्मणं पश्चात् तैर्दृष्टमृषिभिः पृथक् । मन्त्राश्चोपनिषच्चैव नाकृत्वा सुमहत् तपः । प्रथमं तद्धयास्येन दृष्टं केनचिदीक्ष्यते । विना पृथक्तपो दृश्येद् ब्राह्मणं मुनिभिर्यतः । मन्त्राश्चोपनिषच्चैव ब्राह्मणादुत्तमास्ततः। तत्राप्युपनिषच्छ्रेष्ठा युक्तावस्थाधिगम्यतः"इत्यादि प्रमाणविवेके।

तेन रथेनाध्यात्मं शरीराख्येनाधिदैवतं[4] रथरूपेण । ऋभव इत्यत्र देवानां साधारणनाम[5] ।

"आदित्या वसवो रुद्रा विश्वे ऋभव इत्यपि । सर्वदेवसमाख्या च द्वादशाष्टादिकेष्वपि" इति शब्दनिर्णये । "निर्मितो दैवतैः सर्वैर्विष्णुना वायुना सह । अधिष्ठितो रथो दिव्यः सोऽध्यात्मं देहनामकः । सम्यग्योगो यदा तस्य मनोवाक्कर्मभिर्भवेत् । देहाख्यस्य रथस्यैव तदा नारायणात् प्रभोः । विविधं वासवत्त्वात्तु विवस्वन्नामकाच्छुभम् । संसारवारकं ज्ञानं दिवोदुहितृनामकम् । विष्णुतत्त्वापरोक्षाख्यमहनी द्वे च शोभने । ज्ञानावस्था मुक्त्यवस्थेत्युभे एवाहनी परे । जायन्ते देवतास्त्वेषां भारती वायुरेव च । जीवन्मुक्तेश्च मुक्तेश्च दाता रूपद्वयी विभुः[6] । सर्वस्त्रीणामुत्तमत्वाद् द्यौर्नाम[7] श्रीरुदाहृता । अहराख्या[8] भारती तु नित्याहेयस्वरूपतः । अहरित्युच्यते वायुर्ज्ञानात्मत्वात् तथैव च । अधिदैवरथे[9]ऽप्येते विष्णोर्लक्ष्म्यां प्रजज्ञिरे । रथेन तेन देवेशौ विष्णुवायू जगत्पती । आयातमिति हैवैतौ प्रार्थयेद् यज्ञकर्मणि । अन्यदा[10]ऽप्यर्थयेदेतौ ज्ञानेच्छुः पुरुषः सदा । जपन्[11] मन्त्रद्वयं नित्यमा तेन निमिषस्तथा । रक्षणं वा समीपे स्यान्ममेत्यध्यात्ममेव च हयास्यत्वादश्विनौ[12] तावित्याह परमा श्रुतिः । ऐन्द्राग्नेयादिकाश्चैवं[13] सर्वे मन्त्रा हरिं परम् । वदन्ति मुख्यतो नान्यं सर्वनामानमच्युतम् । अथवा वायुदेहस्थं[14] पृथक्संस्थं च केशवम् । मन्त्रो द्विवचनो वक्ति तथा बहुवचस्स्वपि" इत्याद्यैतरेयसंहितायाम् ।

सुखं ददत इति सुदिने । विवस्वतो विष्णोः सकाशात् दिवोदुहिता अहनी च जायन्ते । अहनी इति द्विवचनेन द्वित्वे सिद्धेऽप्युभे इति वचनमध्यात्माधिदैवयो[15]रुभयोरपि वचनार्थम् । नच सूर्यरथोऽत्र वर्ण्यते । नचाहोरात्रे अहनी इत्युच्येते । सूर्यस्याश्विनामाभावात् । सप्ताश्वत्वाच्च तद्रथस्य ।

---

१ "ह्यस्मात्" २ "परमऋषिः" ३ "यत एव तु" ४ "अधिदैवम्" ५ "साधारणं नाम" ६ "प्रभुः" ७ "द्यौर्नामा" ८ "दुहिताऽस्याः" ९ "अधिदैवे रथे" १० "अन्यथा" ११ "जपेत्" १२ "त्वाचाश्विनौ" १३ "काश्चैवम्" १४ "वायुदेवस्थम्" १५ "अध्यात्माधिदैवतयोः" इति प्र. पाठाः ।

ॐ॥ आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत् स ईक्षतेमान् लोकान्नु सृजा इति स इमान् लोकानसृजताम्भो मरीचीर्मरमापोऽदोऽम्भः परेणदिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात् ता आपः स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति ॥१॥ सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत् तमभ्यतपत् तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डं मुखाद् वाग्

---

चतुरश्वत्वं चात्रोच्यते। "श्रोत्रे पक्षसी चक्षुषी युक्ते" इत्यध्यात्मसम्बन्धाच्च। नच रात्रौ सुदिनमिति प्रयोगो दृष्टः। असुदिनस्यापि तत एव जातत्वाद् व्यर्थविशेषणता च। अस्मिन् पक्षे तु लौकिकाहर्व्यावृत्त्यर्थं सुदिने इति युज्यते। जीवन्मुक्तिर्मुक्तिश्च[1] हि मुख्ये सुदिने। "स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽत्मनो यद्यत् कामयते तत्तत् सृजते" इति ज्ञान्यवस्थायां[2] मुक्तौ भोगबाहुल्यकारणत्वात् साऽपि मुक्तिवत् सुदिनम्। नहि मुक्तावाधिक्यार्जनमस्ति। "न हीयते यत्र गत्वा यत्र गत्वा न वर्धते" इति वचनात्। अतो ज्ञानोत्पत्तिसमनन्तरेव मुक्तौ न पुनरार्जनमस्तीति किञ्चित्कालं ज्ञानित्वेनावस्थानमपि सुदिनमेव। ज्ञानात् पूर्वं तु पतनसंशयादेव न सुदिनम्। नचाश्विरथो वर्ण्यते। नह्यश्विरथयोगादहनी जायेते। एकरासभयुक्तो हि तद्रथः। "तद्रासभो नासत्या सहस्रम्" इत्यादिवचनात्[3]। नच विवस्वच्छब्दोऽश्विनोर्विद्यते। "यो देवानां नामधा एक एव" इति विष्णोः सर्वनामानि प्रसिद्धानि च। "युजो युक्ता अभि यत् संवहन्ति" इत्यादिना तस्यैव प्रस्तावाच्च। अतो विष्णुरेव मुख्यतः सर्वनामोक्त इति सिद्धम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमहैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके
द्वितीयोऽध्यायः

---

ॐ॥ "एको नारायणस्त्वासीत् प्रळये[4] रमया सह। नित्याततगुणत्वात् स आत्मेति श्रुतिषूदितः। इदं सर्वमपेक्ष्यासौ कालतो गुणतस्तथा। अग्र्य एव समस्तेशास्तद्वशत्वाद् रमाऽपि सा। विद्यमानाऽपि नाग्रस्था गुणैरूना ततो यतः। न ब्रह्मा न शिवश्चाऽसीन्नैवान्यच्च मिषत् क्वचित्। सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः। असुप्ता श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात्। अनुन्मेषा एव तेऽपि स्वतन्त्रोन्मेष एकराट्। नारायणो नचान्योऽस्ति पूर्णोन्मीलद्गुणात्मकः। पराधीनेन वित्तेन भुञ्जन्नपि हि भिक्षुकः। वित्तवानिति नैवोक्तस्तथा श्रीर्मुक्तिगा अपि। मिषन्तोऽप्यन्यतन्त्रत्वान्न मिषन्तः कथञ्चन। सर्वदाऽप्येक एवायं स्वतन्त्रो नापरः क्वचित्। कालाग्र्यत्वं वक्तुमस्य प्रळये[4] स्थितिरुच्यते। स ऐच्छद् भगवान् विष्णुः स्रष्टुं लोकाभिमानिनः। लोकाभिधानवद्देवान् जडलोकांश्च शाश्वतः। स लोकेभ्यः पूर्वतनानबाख्यान् महदादिकान्। ब्रह्मशर्वादिकान् सृष्ट्वा जडैः सह जनार्दनः। दिवमाकाशमुर्वीं च ससृजेऽथ द्विसप्तकान्।

---

१ "जीवन्मुक्तिश्च मुक्तिश्च हि" २ "ज्ञानावस्थायाम्" ३ "इति वचनात्" ४ "प्रलये" इति प्र. पाठाः ॥

वाचोऽग्निर्नासिके निरभिद्येताम् ॥२॥ नासिकाभ्यां प्राणः प्राणाद् वायुरक्षिणी निरभिद्येतामक्षिभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद् दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद् रेतो रेतस आपः ॥३॥*॥ इति प्रथमं ब्राह्मणम् ॥*॥

ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतंस्तमशनापिपासाभ्यामन्ववार्जत् ता एनमब्रुवन्नायतनं नः प्रजानीहि ॥१॥ यस्मिन् प्रतिष्ठिता अन्नमदामेति ताभ्यो गामानयत् ता अब्रुवन् नवै नोऽयमलमिति ताभ्योऽश्वमानयत् ता अब्रुवन् नवै नोऽयमलमिति ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतं ता अब्रवीद् यथायतनं प्रविशतेत्यग्निर्वाग् भूत्वा मुखं प्राविशद् वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्

इति सृष्ट्वा स लोकांस्तु पुनस्तानेव लोकपान्। अण्डान्तः स्रष्टुमैच्छच्च तेषां पूज्यत्वसिद्धये। अन्नामकेभ्यस्तेभ्यः स पूर्वसृष्टेभ्य एव तु। सर्वजीवाधिकत्वात्तु ब्रह्माणं पुरुषाभिधम्। अंशेनोद्धृत्य रुद्राद्यैः सह चैनमयोजयत्। तथैवाचेतनानां च भागानुद्धृत्य पिण्डवत्। चेतनाचेतनं राशिमेकस्थं विदधे प्रभुः। पुनरैच्छज्जगन्नाथस्तस्याङ्गोत्पत्तिमच्युतः। अण्डवन्मुखमस्याऽसीत् प्रथमं तु शिरोऽभिधम्। भिन्नमास्यं पुनस्तस्य विष्णोरेवेच्छया प्रभोः। तत्र वाङ्नामकं रूपं वह्नेरासीत् पुरातनम्। तस्यैवाथ द्वितीयं च यदग्निरिति गीयते। तथैव नासिकातोऽभून्मुख्यवायोः सुतो मरुत्। प्राणो वायुरिति द्वेधा चक्षुषोऽभूत् तथा रविः। द्विरूप एव कर्णाभ्यां मित्रधर्माप्पवित्तपाः[1]। दिग्देवता द्विरूपेण बभूवुः सर्व एवच। हृदयाद् गरुडानन्तशिवचन्द्राः पृथक् पृथक्। मनोबुद्ध्यभिमानास्ते[2] तन्नामानश्च जज्ञिरे। त्वचश्च रोमनामानो वृक्षनामान एवच। द्विविधाः पारिजाताद्या बभूवुर्ब्रह्मदेहतः। हस्ताभ्यां द्विविधः शक्रः पद्भ्यां तत्सूनुरेव च। यज्ञस्त्वजनि पायोश्च यमो निर्ऋतिरेवच। रेतोऽम्नामा द्विरूपस्तु शिव एवच गुह्यतः। अपानो मृत्युरिति च मुख्यो नाभेश्च[3] मारुतः॥*॥एवं रूपद्वयेनापि स्तुवन्तो विष्णुमच्युतम्। दिव्याम्बराः कुण्डलिनः प्राविशन्नुदकार्णवम्। तदाऽशनापिपासाख्यं द्विरूपं मारुतं पुनः। तस्मिन् देवसमूहे तु विष्णुः प्रावेशयत् प्रभुः। तेऽब्रुवन् देहि नो वासं यत्र चान्नमदामहे। गोरूपमेभ्यो ब्रह्माणं ददौ नारायणः प्रभुः। तत्र प्रविश्य ते देवा नालमित्यब्रुवन् पुनः। अश्वरूपं विरिञ्चं च पुनरेवाददात् प्रभुः। तद्रूपेऽपि प्रविश्यैव नालमित्यब्रुवन् पुनः।

१ "धर्माप्यवित्तपाः" २ "मानाश्च" ३ "नाभेस्तु" इति प्र. पाठाः।

दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशं-श्चन्द्रमा मनो भूत्वा हृदयं प्राविशत् ॥२॥ मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशंस्तमशनापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति ॥३॥ तस्माद् यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः ॥४॥*॥ इति द्वितीयं ब्राह्मणम् ॥*॥

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति ॥१॥ सोऽपोऽभ्यतपत् ताभ्योऽभितप्ताभ्यो मूर्तिरजायत या वै सा मूर्तिरजायतान्नं वै तत् तदेतत् पराङत्यजिघांसत् तद् वाचाऽजिघृक्षत् तन्नाशक्नोद् वाचा ग्रहीतुं स यद्धैनद् वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् तत् प्राणेनाजिघृक्षत् तन्नाशक्नोत्

---

पूर्वसृष्टं पुमाकारं ब्रह्मणोऽदात् पुनर्हरिः। तद् दृष्ट्वैवालमित्यूचुर्विशतेति स चाब्रवीत्। विविशुश्च यथोत्पन्नाः सर्वे देवाश्चतुर्मुखम्। अशनापिपासामानी तु द्विरूपो मारुतोऽवदत्। कुर्वाज्ञामावयोश्चैव यथा त्वच्छासनानुगौ। नित्यं भवावेति हरिः सर्वत्र प्रविशेत्यमुम्। आह तस्माद् देवतानां सर्वासां भागभुङ् मरुत्। एक एव प्राणनामा नाभिस्थोऽपि स एव हि[1]। अशनापिपासाऽपानश्च मृत्युश्चेति चतुर्विधः। एक एव महान् वायुः सर्वदेवेषु संस्थितः॥*॥ पुनरैच्छत् केशवोऽसावन्नमेभ्यः सृजा इति। आवाख्या देवताः पूर्वसृष्टा[2] ब्रह्मादिकाः पुनः। ददर्शाऽशु[3] विशालाभ्यां नेत्राभ्यां पुष्करेक्षणः। तद्दर्शनात् तदिच्छातस्तासां देहोऽभवत् पृथक्। सर्वासामपि देहैकदेशेभ्यो मिळितं[4] शुभम्। सर्वैरधिष्ठितं चैव विरिञ्चेन विशेषतः। दिव्यावयवसम्पन्नमेकमेव सुलोचनम्। भोग्यभोक्त्रात्मना नास्ति तस्य दुःखं कथञ्चन। ते हि देवाः स्वयं भोग्याः स्वयं भोक्तार एव च। क्रीडन्ते मोदिनो नित्यं तथाऽप्यन्नात्मकस्त्वसौ। क्रीडयाऽपाक्रमत् किञ्चित् तं तदाऽसौ चतुर्मुखः। अत्तुं वागादिभिः सर्वैरैच्छन्नाप्यशकत् तदा। जानन्नपि क्रीडयैव तारतम्यं प्रकाशयन्। एवं चकार ब्रह्मा स क्वाज्ञानं लोककर्तरि। क्षुत्पिपासादयश्चैव देवानां भोगसाधकाः। नतु पीडाकरास्तेषामैश्वर्यादिगुणोन्नतेः। अन्नमूर्तिं ततो ब्रह्मा प्रधानेनैव वायुना। अपानाख्येनात्तुमैच्छत् तदैवाशकदाशु सः। तस्माद् भोक्तृक एवासौ सर्वस्यान्नस्य मारुतः। तत्प्रसादात् परेऽश्नन्ति किञ्चित् किञ्चिन्नचाखिलम्। आयूरूपोऽखिलानां च देवानां वायुरेव हि। अन्नदेवस्य चाऽयुः स तस्माद् देवोत्तमो मरुत्। आयुःशब्दो ज्ञानवाची गतिवाची च यत् ततः। चेष्टामोक्षज्ञानदाता सुराणां मारुतस्ततः। अन्योन्यगुणदातृत्वात् समानौ

---

१ "स एव तु" २ "पूर्वं सृष्टाः" ३ "ददर्श सुविशालाभ्याम्" ४ "मिलितं" इति प्र. पाठः।

प्राणेन ग्रहीतुं स यद्धैनत् प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् तच्चक्षुषाऽजिघृक्षत् तन्नाशक्नोच्चक्षुषा ग्रहीतुम् ॥२॥ स यद्धैनच्चक्षुषाऽग्रहैष्यद् दृष्ट्वा हैवान्नमत्रप्स्यत् तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम् ॥३॥ स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् तत् त्वचाऽजिघृक्षत् तन्नाशक्नोत् त्वचा ग्रहीतुम् ॥४॥ स यद्धैनत् त्वचाऽग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत् तन्मनसाऽजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुम् ॥५॥ स यद्धैनन्मनसाऽग्रहैष्यद् ध्यात्वा हैवान्नमत्रप्स्यत् तच्छिश्नेनाजिघृक्षत् तन्नाशक्नोच्छिश्नेन ग्रहीतुं स यद्धैनच्छिश्नेनाग्रहैष्यद् विसृज्य हैवान्नमत्रप्स्यत् तदपानेनाजिघृक्षत् तदावयत् सैषोऽन्नस्य ग्रहो यद् वायुरन्नायुर्वा एष यद् वायुः ॥६॥ स ईक्षत कथं न्विदं मदृते स्यादिति ईक्षत कतरेण प्रपद्या इति ॥७॥ स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा

---

ब्रह्ममारुतौ । तस्मान्मोक्षसुखे[1] ज्ञाने विष्णुभक्त्यादिकेषु च[2] । सर्वेभ्यश्चाधिकौ तौ हि तयोर्विष्णुः परः सदा । देवतानां प्रवेशात्तु पूर्वमेव जनार्दनः । इत्थमैक्षत देवेशो ब्रह्माद्या यदि मां विना । क्रियादिषु समर्थाः स्युर्न मे विष्णवभिधा भवेत् । सर्वचेष्टयितृत्वाच्च विशिष्टबलतस्तथा । विष्णुरित्यभिधा मह्यं सा न युक्ता दिवौकसाम् । स्वतन्त्रत्वे ततः सर्वे मद्वशा एव नान्यथा । तस्मादेषां प्रवृत्त्यर्थं प्रवेक्ष्ये सह वायुना । इति मत्वा विरिञ्चस्य शरीरं प्रविवेश सः । मूर्धन्यनाड्या प्रथमं ब्रह्मवायुसमन्वितः । अग्न्यादयस्ततः पश्चात् प्रविष्टास्तन्नियोजिताः । प्रपदाभ्यां तथाऽन्येन रूपेण प्रविवेश सः । बिभर्ति देहं तेनैव मूर्ध्नाविष्टेन[3] चेष्टयन् । नारायणो वासुदेव इति द्वेधा व्यवस्थितः । मूर्ध्नाविष्टो[4] वासुदेवस्तस्य चावसथास्त्रयः । अक्षिकण्ठहृदित्येवं[5] त एव स्वप्ननामकाः । आप्नोत्यत्र स्वयं विष्णुरतः स्वप्नाः प्रकीर्तिताः । अनिरुद्धादिरूपेण त्रिधा तेषु व्यवस्थितः । दाताऽवस्थात्रयस्यास्य जीवस्य क्रमशो विभुः । सुषुम्नायां वासुदेवो मूर्धन्येव व्यवस्थितः । तस्यामेव ब्रह्मनाड्यां स्थितो नारायणः प्रभुः । स एव भगवान् विष्णुः प्रादुर्भावात्मना पुनः । जातो मत्स्यादिरूपेण सर्वभूतेषु चाऽविशत् । असुराणां निहन्तारं ज्ञानादिगुणदं तथा । चेष्टाप्रदं च देहेषु[6] न मदन्यं वदत्यपि । इति मत्वा जगन्नाथो दैत्यनिग्रहणेच्छया । ज्ञानदानार्थमपितु प्रादुर्भूतो भुवि प्रभुः । तथा जीवेषु सर्वेषु प्रविष्टः प्रेरणेच्छया । को ह्यन्यस्तमृते विष्णुमेतत् कर्म करिष्यति । स सर्वगुणसम्पूर्णं सर्वगं नित्यमव्ययम् । एतदेव स्वरूपं स त्वपश्यदवतारगम् । तस्मात्

---

१ "मोक्षे सुखे" २ "भक्त्यादिकेष्वपि" ३ "मूर्धाविष्टेन" ४ "मूर्धाविष्टो" ५ "अक्षि कण्ठो हृदित्येव" ६ "भूतेषु" इति प्र. पाठाः ।

ध्यातं यद्यपानेनाभ्यपानितम् ॥८॥ यदि शिश्नेन विसृष्टमथ कोऽहमिति स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत सैषा विद्दतिर्नाम द्वास्तदेतन्नान्दनं तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति ॥९॥ स जातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिषदिति स एतमेव पुरुषं ब्रह्म ततमम-पश्यदिदमदर्शमितीँ३ ॥१०॥ तस्मादिदन्द्रो नामेदन्द्रो हवै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥११॥*॥ इति तृतीयं ब्राह्मणम् ॥*॥

इति श्रीमहैतरयोपनिषदि द्वितीयप्रपट्ठके तृतीयोऽध्यायः

---

सर्वावताराश्च सर्वजीवेषु च स्थिताः[1]। प्रादुर्भावाः सर्वगुणैः पूर्णा एव सदा स्थिताः। पश्यन्ति च तथा नित्यनिर्[2]दोषोरुस्वसंविदा। गुणपूर्णस्वरूपस्य त्वापरोक्ष्येण दर्शनात्। सर्वदैव ह्यसौ विष्णुरिदन्द्रो नामतो मतः। ब्रह्मादीनां हि सर्वेषां तत्प्रसादेन जायते। जानन्ति न स्वतस्तेन नेदन्द्रास्ते प्रकीर्तिताः। रमाऽपि तत्प्रसादेन जानाति किमुता-परे। अल्पज्ञाना अल्पगुणा अल्पानन्दाश्च तेऽखिलाः। रमाजशर्वशक्राद्यास्[3]तेनानिन्द्राः क्रमेण ते। पापैरज्ञाततां देवा मानयन्ति सदाऽऽत्मनः। हर्षेण तेन विष्णुः स इन्द्र इत्यभिशब्द्यते। नेदन्द्रताऽसुरादीनां ज्ञायेतेति श्रुतिर्हरिम्। इन्द्र इत्येव वदति पारोक्ष्येणोरुसद्गुणम्" इत्याद्यैतरेयसंहितायाम् ॥*॥

आततगुणत्वादात्मा नारायणः। "ब्रह्म पन्थाः सत्यं कर्म" इति तस्यैव पञ्चरात्रप्रसिद्धैरेव नामभि-रारब्धत्वाच्च।

"मुख्यतः कर्मनामा तु प्रादुर्भावात्मको हरिः। अनिरुद्धतनुश्चैव तत्र ह्यमितचेष्टतो[4]। कर्माभासा जीवसङ्घाः सत्यं प्रद्युम्ननामकः। सङ्कर्षणो हरिः पन्था ब्रह्मोक्तो वासुदेवकः" इत्यादि हि नामनिर्णये[5]।

"मर्त्सीन्द्र[6]मिन्दो पवमान विष्णुम्" इत्यादिश्रुतौ तस्मिन्नेव प्रसिद्धस्येन्द्रशब्दस्यात्र बहुशो[7]ऽभ्या-साच्च। अकारस्य च विष्णावेव प्रसिद्धस्यात्राभ्यासात्[8]। "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इति सूर्यमण्डले पुण्डरीकाक्षत्वेन निर्दिष्टस्यात्रापि "य एष तपति" इत्यादिना बहुशोऽनुसन्धा-नाच्च[9]। सूर्यो हि "हिरण्याक्षः सविता देव आगात्" इति पिङ्गाक्षैः[10] प्रसिद्धः।

"विरूपाक्षः शिवः सूर्यः सुराचार्यो विनायकः। पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिपः" इति च स्कान्दे। "यो देवानां नामधा एक एव", "नामानि सर्वाणि यमा विशन्ति तं वै विष्णुं परममुदाहरन्ति", "यमिन्द्रमाहुर्वरुणं यमाहुः", "इन्द्रसूर्याद[11]यः

---

१ "संस्थिताः" २ "नित्यम्" ३ "रमाजशङ्करेन्द्राद्याः" ४ "चेष्टितः" ५ "इत्यादि नामनिर्णये" ६ "मत्सीन्द्रमिन्दो" ७ "इन्द्रशब्दस्य बहुशः" ८ "अत्राप्यभ्यासात्" ९ "बहुशोऽभ्यासाच्च" १० "पिङ्गलाक्षः" ११ "चन्द्रसूर्यादयः" इति प्र. पाठाः।

शब्दा विष्णावेव हि मुख्यतः। उपचारात् तदन्येषां विष्णुनैव कृताः पुरा" इत्यादिना तस्यैव सर्वनामवत्त्वाच्च। "णकारो बलं षकारः प्राण आत्मा" इत्यादिनाऽन्ते[१] विष्णुशब्दव्याख्यानेनोपसंहाराच्च। "आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम्। न वर्तन्ते तदन्यत्र शृङ्गिबेरेऽग्निशब्दवत्" इति च पाद्मे। "एको नारायण आसीन्न ब्रह्मा नच शङ्करः", "एको नारायण आसीन्न ब्रह्मा नेशानः", "वासुदेवो वा इदमग्र आसीन्न ब्रह्मा नच शङ्करः" इत्यादिश्रुतिभ्यश्च।

अग्रशब्दो गुणाधिक्यवाची। इदं रमाब्रह्मशिवादिकं सर्वं जगदपेक्ष्य आत्मैवाग्रे विष्णुरेवाग्र्यः सर्वगुणैरित्यर्थः। तत्र हेतुस्तदन्यत् किञ्चिन्न मिषदासीत्। सर्वस्याप्युन्मेषणं नाऽसीदित्यर्थः। स्वत उन्मेषणं कस्यापि नास्ति। अस्तिशब्दवदासीच्छब्दोऽपि सर्वकालसाधारणः। भगवत्प्रसादादेव सर्वदा सर्वं किञ्चिदुन्मिषति। स्वातन्त्र्येण पूर्णोन्मेषो विष्णुरेव।

"उन्मेषो गुणसम्पूर्तेरुद्रिक्तानुभवः स्मृतः। तदेव मिषणं नाम सद्रूपं मिनुते यतः। मिषच्च नान्यद् विष्णोर्हि किमुतोन्मिषदिष्यते। उच्चैर्मिषन् हि भगवान् सर्वदैव जनार्दनः" इति च सत्तत्त्वे। "नास्ति नारायणसमं न भूतं न भविष्यति" इति च भारते।

सर्वजीवानां रमायाश्च प्रळये[२] विद्यमानत्वादेव नाग्र इति कालापेक्षया। तदधीनमिषत्त्वादन्येषामग्र्यः स एवेत्याशयः। तदधीनत्वमेव तेषां सृष्ट्यादिना दर्शयति। स्थूलशरीरस्य पूर्वाभावस्तत एवार्थतः सिद्ध्यति।

"प्रळयेऽप्यखिलं[३] देवी रमा विष्णुप्रसादतः। जानाति नित्यज्ञानेन मुक्ता ध्यानस्थिता लये" इति च सत्तत्त्वे।

ब्रह्मादीनां शरीरान्तरस्यापि प्रळये[४]ऽनुक्तेरेवाभावः सिद्ध्यति।

"आत्मा ब्रह्माऽग्र इत्यादि गुणाग्र्यत्वं हरेर्वदेत्। कालज्यैष्ठ्यं न यस्मात् तत् सृष्ट्युक्तेरेव सिद्ध्यति" इति वाक्यनिर्णये।

गुणाग्र्यतायामेव कालज्यैष्ठ्यस्याप्यन्तर्भावाच्च। अं विष्णुं बिभर्तीति विष्णुलोको दिवः परः[५]। महरादयश्च। दिव्यपि भगवान् प्रतितिष्ठतीति प्रतिष्ठा। तेषु हि सर्वेषु[६] प्रत्यक्षतश्चरति विष्णुस्तस्मादम्भ इत्युच्यन्ते[७]। दिवः परे द्यौश्चाम्भोनामका इत्यर्थः। सूर्यमरीचीनां तत्र विशेषेण विततत्वादन्तरिक्षं मरीचयः। मरीचीनामयनात्। पृथिव्यां क्षिप्रं मरन्तीति पृथिवी मरः।

"भूतेभ्योऽनन्तरं त्वण्डं सृष्ट्वा विष्णुः पुरा प्रभुः। लोकभेदांश्च चक्रेऽत्र पश्चाद् ब्रह्मा विशेषतः। सम्यक् चकार लोकांस्तान् लोककर्ता ततः स च" इति ब्रह्मवैवर्ते।

या अधस्तात् पूर्वमेव सृष्टा देवतास्ता आप इत्युच्यन्ते। "आपा इत्याप इति" इति पूर्वं भगवदङ्गसृष्टानामेवाप्छब्देनोक्तेः। "अयं पितैते पुत्राः" इति च। "आहं मां देवेभ्यो वेदा ओ मद् देवान् वेद" इति च।

"ब्रह्मवायू च तद्भार्ये वीन्द्रशेषौ च तत्स्त्रियौ। शिवस्तद्दयिता शक्रकामौ तद्दयि-

१ "अन्तेऽपि" २ "प्रलयेऽपि" ३ "प्रलयेऽप्यखिलम्" ४ "प्रलये" ५ "दिवः परे" ६ "तेषु सर्वेषु" ७ "इत्युच्यते" इति प्र. पाठाः।

तादयः । सर्वे सुराः क्रमेणैव विष्णोर्जाता आबाल्यकाः । ज्ञानानन्दबलाद्येषु विष्णुभक्तौ च सर्वशः । हीनाः शतगुणेनैव क्रमेणानेन ते मताः । तेभ्यश्च ऋषयो मर्त्या हीना एव क्रमेण च । विशेषतस्तु मुक्तानां सर्वसंसारबन्धनात् । क्रमोऽयं सम्यगुद्दिष्टो नित्यानन्दैकभोगिनाम् । न विशेषो ब्रह्मवाय्वोरधिकारा-विभेदतः । न शेषशिवयोश्चैव तत्पत्नीनां च सर्वशः । सुपर्णशेषयोश्चैव साम्यं सर्वगुणेष्वपि । साम्यमेवैतयोः पत्न्योः साम्यं शक्रमनोजयोः । एते तु महदा-दीनां सर्वेऽपि ह्यभिमानिनः[१] । पूर्वस्य प्रतिबिम्बश्च चरमस्तत्सुतस्तथा । तद्वशाश्चा-खिला विष्णोर्न विष्णुः कस्यचिद् वशे । महदादिमानिनश्चैते जातास्तैः सह सर्वशः । एते लोका इति प्रोक्ता लोकानामभिमानतः । त एव लोकपालाश्च यदा पश्चात् प्रजज्ञिरे । पश्चाज्जातैर्हि रूपैस्ते[२] लोकस्थान् पालयन्त्यलम्" इत्यादि तत्त्वसारे ।

अमूर्छयत् मूर्तमकरोत् । "अग्निर्वाग् भूत्वा" इत्यादिना पश्चादैक्यप्रतीतेरेकस्यैव रूपद्वयं तदिति प्रतीयते । प्रजानीहि प्रकर्षेणानुजानीहि । अन्नदेवता च सर्वदेवतायुक्तो विरिञ्च एव । ग्रसनं चैत-स्मिन् प्रवेश एव । नतु पीडा तस्य । एक एव हि ब्रह्मा भोक्तृभोज्यत्वेन स्थितो भोज्यरूपेणैकी-भूयातितरां मुमोदेत्यर्थः । देवानामुपद्रवाभावाद् भोक्तृत्वशक्तियोजनमेवाशनापिपासाभ्यामन्ववा-र्जनम् । वायुरेवच भोक्तृत्वशक्तिरूपः । यदि वागादीनामेवाभिव्याहरणादिशक्तिः स्यान्मां विना तर्हि न विष्णुत्वं मम[३] स्यात् । तस्मात् कोऽहं भवानीत्याक्षेपः । विशेषेण प्राणयति सर्वान् सर्वेभ्यो विशिष्टबलश्चेति[४] हि विष्णुः । "णकारो बलं षकारः प्राण आत्मा" इति व्याख्यानात् । तस्मा-न्मत्प्रेरिता एवैतेऽभिव्याहारादिशक्ता इत्यभिप्रायः । पूर्णानन्दस्वरूपत्वान्नन्दनो भगवान् । प्रादु-र्भावरूपेण जातोऽपि भगवान् सर्वभूतान्यभितः सर्वकालेषु विशेषेण पश्यत्येव । इह भूतेषु मत्तो-ऽन्यं प्रवर्तकं वदेत् किमित्याक्षेपः । अहमेव स्वतन्त्रः परिपूर्णगुण इति कृष्णराघवादिसर्वावता-ररूपोऽपि सर्वदाऽनुभवत्येव ।

"नायं दशरथाज्जातो नचापि वसुदेवतः । क्वास्याज्ञानं कुतो दुःखं प्रादुर्भावेष्वपि प्रभोः । प्रादुर्भूतश्चिदानन्दशरीरो राघवः स्वयम् । स्तम्भाद् वा नरदेहाद् वा नैवास्य प्राकृता[५] तनुः । दैत्यानां मोहनार्थाय सोऽज्ञानाद्यं प्रकाशयेत् । पूर्णचित्सुखरूपोऽपि सदा सर्वावतारगः" इत्यादि स्कान्दे ।

एतमेव पुरुषं व्यासकृष्णकपिलराघवादिरूपं ततममपश्यत् । ततमं[६] परिपूर्णतमं ब्रह्मापश्यत् । इदं मे स्वरूपमदर्शमेवाहमिति । रङ्गस्त्ववधारणे— "रङ्गोऽवधारणे चैव संवादे च प्रयुज्यते" इति पदविवेके । अपश्यदित्यत्र नातीतकालत्वं विवक्षितम्, अभिव्यैख्यदित्यभिशब्दस्यानुषङ्गात् । अपश्यत् पश्यतीति वैकं[७]कालसम्बन्धं विना वक्तुमशक्यत्वात् तथा प्रयोगः ।

"प्रयोग एककालीनः सर्वकालेऽनुषज्यते । ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः" इत्यादि सत्तत्त्वे ।

१ "अभिमानिनः" २ "रूपैस्तैः" ३ "तर्हि विष्णुत्वं न मम" ४ "विशिष्टश्चेति" ५ "प्राकृती" ६ "ततमम्" ७ "पश्यतीति चैक-" इति प्र. पाठः ।

ॐ॥ [अपक्रामन्तु गर्भिण्यः] पुरुषो ह्वा अयमादितो गर्भो भवति यदेतद्
रेतस्तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवाऽत्मानं बिभर्ति तद् यदा
स्त्रियां सिञ्चत्यथैनज्जनयति ॥१॥ तदस्य प्रथमं जन्म तत् स्त्रिया आत्मभूयं
गच्छति ॥२॥ यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति साऽस्यैतमात्मानमत्र-
गतं भावयति सा भावयित्री सा भावयितव्या भवति ॥३॥ तं स्त्रीगर्भं बिभर्ति
सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति स यत् कुमारं जन्मनोऽग्रेऽधिभावय-
त्यात्मानमेव तद् भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य
द्वितीयं जन्म ॥४॥ सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रति धीयते तथाऽस्याय-
मितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं
जन्म॥५॥ तदुक्तमृषिणा। गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा॥६॥

"परोक्षप्रिया इव" इत्यसुराणां सम्यगदर्शनेन पतनं देवानां प्रियं तथाऽप्यपरोक्षदर्शिन्येव प्रीतिं कुर्वन्तीतीवशब्दः ॥ * ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमदैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके
तृतीयोऽध्यायः

ॐ॥ "अयं नारायणो देवः पुरुषे प्रथमं विशेत्। अन्नस्थोऽन्नेन सहितस्तस्मिन् रेतस्त्वमागते। तस्मिन् स्थितस्स्वरूपं स पुरुषस्थो बिभर्त्यजः। तद्रूपं रेतसा साकं स्वयं पुंसि स्थितो हरिः। स्त्रियां सिञ्चति तस्यैव स्थानान्तरगतेः प्रभोः। प्रथमं जन्म विष्णोस्तत् स तस्या अङ्गवत् प्रभुः। नैनां हिनस्त्यानुकूल्यात् सा पुत्रं भावयत्यथ। पुत्रस्य भावना सैव तद्गत्वाद्धरिभावना। सम्भावितव्या सा चैव भर्त्रा पुत्रश्च सादरम्। सम्भावनं कुमारस्य जानतः केशवे भवेत्। तस्येत्यर्पणमात्रेण पूजितो हि भवेद्धरिः। पुत्रस्थस्य हरेः पूजां कुर्वतः पृथिवीस्थितिः। स्वर्गस्थस्यापि भवति पुत्रपुण्यं यतोऽखिलम्। अत्यल्पपुण्यभाक् स स्यान्नार्चयेत् केशवं यदि। पृथिव्यां जन्म पुत्रस्य द्वितीयं विष्णुजन्म हि। एतद्रूपं निधायैव जीवार्थे धर्मकर्तवे। पितृस्थेन तु रूपेण गच्छत्यन्यत्र केशवः। पितुरन्यत्र जननं तृतीयं जन्म तद्धरेः। अन्तर्यामितयैवं हि सर्वजीवेषु संस्थितम्। सर्वदोषोज्झितं विष्णुं कर्तारं सर्वकर्मणाम्। नित्यानन्दं स्वतन्त्रं च सर्वज्ञं सर्वतोऽधिकम्। यो वेद देहबन्धात् स विमुक्तो नित्यमुत्तमान्। भोगान् भुङ्क्ते यथायोगमिति वेदानुशासनम्" इत्यैतरेयसंहितायाम् ॥*॥

१ "सम्यग् दर्शनेन" २ "स्थितं स्वरूपं" ३ "विष्णोस्तु" ४ "यथायोग्यमिति" इति प्र. पाठः।

शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति ॥७॥ गर्भे एवैतच्छयानो वामदेव एवमुवाच स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥८॥*॥ इति प्रथमं ब्राह्मणम् ॥*॥ [ यथास्थानं गर्भिण्यः । ]

इति श्रीमहैतरेयोपनिषदि द्वितीयप्रघट्टके चतुर्थोऽध्यायः

---

नात्र जीवोत्पत्तिमात्रमुच्यते। नहि जीवोत्पत्तिमात्रपरिज्ञानादमृतत्वं भवति । ज्ञातमेव सर्वैः पितापुत्रसम्बन्धमात्रं श्वादिभिरपि[1]। "गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा" इत्युक्तार्थ उदाहृते मन्त्रे[2] देवजन्मकथनाच्च । विष्णुर्हि परमो देवः । तेनैव सह सर्वेऽपि देवा जीवदेहजनने जायन्त इव । शरीरप्राप्तिरेव हि जन्मान्येषामपि । अयमेव विशेषो देवानां दुःखाभोगः । स्वातन्त्र्यं च विष्णोः । "आत्मन्येवाऽऽत्मानं बिभर्ति", "आत्मानमेव तद् भावयति" इत्याद्यात्मशब्दश्च मुख्यतो विष्णावेव युज्यते। "णकारो बलं षकारः प्राण आत्मा" इति विष्णुशब्दार्थैकदेशवाचित्वाच्चाऽऽत्मशब्दस्य। "एतया द्वारा प्रापद्यत" इति तस्यैव शरीरप्रवेशस्य प्रस्तुतत्वाच्च। जीवशरीरं परित्यज्यान्यत्र गमनमात्रं विष्णोरप्यस्तीति प्रतीत्युक्तेऽप्यविरोधः। कृष्णराघवादिस्वरूपमेव ह्यसौ न परित्यजति।

"कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहवदेव च । लोकानां दर्शयामास स्वरूपसदृशाकृतिम्। येन रूपेण कंसादीन् जघ्ने तद्रूप एव हि[3]। पूज्यतेऽद्यापि शर्वाद्यैर्निर्मिताऽन्या शवाकृतिः । स्वर्गारोहणकाले हि[4] जनास्तेनैव मोहिताः । यत्तद् रूपं निजं विष्णोर्दृष्टं सर्वनरैर्भुवि[5]। अद्यापि तद् देवलोके पूज्यते सर्वदैवतैः" इत्यादि स्कान्दे। "प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम्। आदायान्तरधाद् यस्तु स्वबिम्बं लोकलोचनम्" इति च भागवते।

"प्रेतां यज्ञस्य शम्भुवा" इत्यादिवत् प्रकृष्टगतिवाच्येवायं शब्दः। प्रकृष्टगतित्वादेव[6] मरणेऽपि प्रयुज्यते। "एषामवेदमहम्" इत्यत्रापि जीवभेद एवोक्तः। अन्यथा मम जनिमानीत्येवोच्येत। व्यर्थता चैषामित्यादिविशेषणानाम् । अवेदमित्यनेनैव स्वस्य सिद्धत्वादहमित्यप्यहेयत्वेनेति क्रियाविशेषणम्। जन्म जानन्नपि देवानां दुःखादिहेयरहितत्वेन व्यजानामित्यर्थः। तस्माद् "अहं मनुरभवम्" इत्यादावहेयगुणं[7] भगवन्तमेवाहंशब्दो वक्ति। सर्वान्तरत्वात् तस्मिन्नेवाभवमित्युत्तमपुरुषब्दोऽपि सर्वो वर्तते।

"अहेयत्वादहं विष्णुः स तु सर्वान्तरत्वतः। अस्यस्मीत्यादिभिः शब्दैरुच्यतेऽन्योऽपि जीवतः" इति ब्रह्मवैवर्ते।

नच मूढव्यवहार एव वेदनिर्णयाय भवति। किन्तु सर्वेषामनुभवो युक्तयश्च वाक्यान्तरं च निर्णयकारणम्। तस्मात् सर्वजीवादिभ्योऽन्यः सर्वोत्तमो विष्णुरेवात्रोक्तः।

---

१ "पश्वादिभिरपि" २ "उदाहृतमन्त्रे" ३ "तद्रूपमेव हि" ४ "काले तु" ५ "जनैर्भुवि" ६ "गतित्वादेव च" ७ अहं मनुरित्यादावप्यहेयगुणम्" इति प्र. पाठाः।

ॐ॥ कोऽयमात्मेति वयमुपास्महे ॥१॥ कतरः स आत्मा येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति यदेतद्धृदयं मनश्चैतत् संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा

"न वेदेषु पदं किञ्चिद् वर्णो वा व्यर्थ इष्यते। यथायोगं[1] चार्थभेद ऊह्यः सर्वत्र वेदिभिः" इति शब्दनिर्णये। "शब्दा रेतोऽन्नमित्याद्या अपि तत्र गतं हरिम्। वदन्त्यविष्णुवाची च न शब्दः क्वचिदिष्यते" इति च।

भावयति सम्भावयति। सोऽग्र एव अग्र्यो[2] विष्णुरेव। पुत्रसम्भावनमपि तत्रस्थं विष्णुं सम्भावयामीति तत् तस्यैव भवति। एवं भावयतामेव "एष पन्था उरुगायः" इत्याद्यपि। "तं पश्यन्ति पशवः" इत्याद्यपि दिव्यपश्वादीनामेव। अन्येषां स्वभावप्रवृत्तिः। ता एव देवताः शतं पुर आयसीर्ह्यानिन्यो विशेषतः। "अय पय गतौ" इति धातोः। मानुषानपेक्ष्य पूर्णत्वात् पुरः। विष्णुर्मुख्यत एव पूर्णः। नच शरीरैर्जीवो रक्षितः। मुख्ये युज्यमाने च नामुख्यार्थः कल्प्यः। शमस्य विद्यत इति शी विष्णुः। पूर्णानन्दत्वात्। स एव ज्ञानत्वाद् यश्चेति श्यः। सोऽस्य जीवस्येन इति श्येनः। विष्णुं स्वामिनं ज्ञात्वेत्यर्थः। निरदीयम्, निष्क्रम्यातीतोऽस्मि गर्भवासम्। स्वरानन्दो विष्णुरत्रग इति स्वर्गलोको विष्णुलोकः। अमृतः सन् सर्वान् कामानाप्त्वा तानेव सर्वान् कामान् समभवदनुभवति। अपेक्षितवस्तुस्वीकार आप्तिः। सम्भवो भोगः। "तां समभवत् ततो मनुष्या अजायन्त" इत्यादिवत्। मुक्त्यनन्तरमेव ह्यनुपचरितसर्वकामावाप्तिः। मुख्य एव चार्थः स्वीकार्यः। अमुक्तानां विष्णुलोकगानामपि न सर्वकामावाप्तिः। जयविजयादीनामप्रियदर्शनात्। अतोऽमृतः सन् सर्वकामानाप्त्वेत्यर्थः[3]।

"मुक्तः कामानवाप्नोति भुङ्क्ते चैव यथेष्टतः। सर्वानपि निरातङ्कः सर्वदा च हरेर्वशे" इति च ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमदैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके
चतुर्थोऽध्यायः

---

ॐ॥ "अयं विष्णुर्हि किंरूप उपास्योऽस्माभिरच्युतः। इत्यपृच्छद् रमा देवी महिदासं जनार्दनम्। आह तां महिदासोऽथ पूर्णानन्दतमस्त्विति। उपास्यस्तादृशो ह्यस्य स्वभावः परमात्मनः। येन जीवो दर्शनादीन् प्रेरितः कुरुते सदा। यो विष्णुर्हृदयमिति हृद्गतत्वात् प्रकीर्तितः। मन्तृत्वान्मन इत्येव यच्च ज्ञातृस्वरूपतः[4]। एतत् सन्निहितत्वाच्च पूर्णत्वादेति कीर्तितम्[5]। इतत्वाच्च ततत्वाच्च स इतन्नाम केशवः। गुणानामुच्चयो यस्मात् स च इत्येव शब्दितः। सम्यग्ज्ञानस्वरूपत्वात् संज्ञानमिति कीर्तितः। आततज्ञानरूपत्वादाज्ञानं भगवान् हरिः। विविधज्ञानरूपत्वाद् विज्ञानमिति कीर्तितः।

---

१ "यथायोग्यम्" २ "सोऽग्र्यो" ३ "सर्वान् कामानाप्त्वेत्यर्थः" ४ "ज्ञानस्वरूपतः" ५ "कीर्तितः" इति प्र. पाठाः। कीर्तितमिति पाठे पूर्णत्वात् आ इति सन्निहितत्वात् एतत् इति च भगवन्नाम कीर्तितम् इत्यर्थः।

दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामोऽवश इति सर्वाण्ये-वैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥२॥ एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येता-नीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिजानि चाश्वा गावः पुरुषा हस्तिनो यत् किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रोऽ-

प्रकृष्टात्मगुणज्ञानरूपः प्रज्ञानमुच्यते। अविस्मृतित्वान्मेधा स दृष्टिर्दर्शनरूपतः। धृतिर्धा-रणरूपत्वान्मतिर्मासु ततत्वतः। मनुनाम्नामजादीनां मनीषेशो यतो हरिः। सर्वप्रेरकरूप-त्वाज्जूतिरित्यभिधीयते। सर्वदेशेषु कालेषु स्वरूपेषु च सर्वशः। समं रमत इत्येव स्मृतिर्नाम जनार्दनः। सर्वस्य क्लृतिकर्तृत्वात् सङ्कल्प इति गीयते। क्रतुः स सर्वकर्तृ-त्वादसुरप्यसनाद्धरिः। अमेयानन्दरूपत्वात् काम इत्यभिधीयते। अवशः स स्वतन्त्र-त्वात् त्रयोविंशतिनामकम्। यो वेदैवं हरिं सम्यङ् मुच्यतेऽखिलसंसृतेः। ब्रह्मा शिवश्च शक्रश्च देवाश्चान्ये समस्तशः। तथैव पञ्चभूतानि पुण्यपापविमिश्रिताः। क्षुद्रात्मानस्तु ये मर्त्या इतरे असुरा अपि। सर्वं जगदिदं विष्णोर्वशे तिष्ठति सर्वदा। तेनैव नीयते नित्यं तस्मिन्नेव प्रतिष्ठतम्। मुक्ता येऽलोकनामानो नीयन्ते तेऽपि विष्णुना। स्वयं चानन्यनिष्ठत्वात् प्रतिष्ठेत्यभिधीयते। देशतः कालतश्चैव गुणतश्चातिपूर्तितः। विष्णोर्ब्रह्मेति नामैतन्मुख्यतोऽन्यत्र न क्वचित्। सोऽलोकनामा मुक्तस्तु चितिमात्रस्वरूपतः। प्रकृष्टज्ञानरूपस्य प्रसादात् परमात्मनः। अस्माद् देहात् समुत्क्रम्य गत्वोर्ध्वं लोकमुत्तमम्। अमृतः सन् विष्णुलोके भोगान् सम्प्राप्य पुष्कळान्[1]। भुङ्क्ते यथेष्टतो नित्यमिति वेदानुशासनम्" इत्याद्यैतरेयसंहि-तायाम् ॥ * ॥

जानत्याऽपि[2] देव्या लोकानुग्रहार्थं विशेषज्ञानार्थं च "कोऽयमात्मा" इति पृष्टः सन्[3] भगवानाह–कतरः स आत्मेति। कतरः आनन्दतमः। "यत्रोभयोः प्रयोगो न तत्रैकार्थौ तरप्तमौ" इति शब्दनिर्णये। यत्प्रेरणादयं जीवो दर्शनादीन् करोति[4]। रमाब्रह्मादीनामपि तत्प्रेरितत्वात्। सर्वेषां दर्शनादिका-रणत्वमेकैकमपि तस्य लक्षणं भवतीति वाशब्दः सर्वत्रानुषज्यते। प्रजापतिः शिवः। लिङ्गा-भिमानित्वात्।

"प्रजापतिः शिवः शेपो[5] लिङ्गमित्यभिधीयते। लिङ्गाभिमानी लोकस्य स्रष्टा गिरिश एव हि" इति शैवपुराणे। "सममस्त्वनयोर्युद्धमिति प्राह प्रजापतिः। वाक्यं शिवस्य तच्छ्रुत्वा शक्रो नेत्याह सत्वरः" इति च भारते[6]।

क्षुद्रमिश्राणीव बीजानि शाल्यादिबीजवद् भिन्नस्वभावा ब्रह्मादयः सर्वजीवाः।

१ "पुष्कलान्" २ "जानन्त्याऽपि" ३ "पृष्टः सः" ४ "करोति च" ५ "शिवः शेषो–" ६ "इति भारते" इति प्र. पाठाः।

लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥३॥ स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्याऽमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥४॥*॥

इति प्रथमं ब्राह्मणम् ॥*॥

इति श्रीमदैतरेयोपनिषदि द्वितीयप्रघट्टके पञ्चमोऽध्यायः

---

"ब्रह्माद्याः सर्व एवैते जीवा भिन्नस्वभावकाः। यथा शाल्यादिबीजानि भिन्नवीर्याणि सर्वशः" इति सत्तत्त्वे।

प्रथमेतराणीतिशब्दो मानुषाणाम्। द्वितीयोऽसुरादीनाम्। "प्रज्ञानेत्रोऽलोकः" इति अलोकशब्देन मुक्तसमुदाय उच्यते। ब्रह्मादिस्थावरान्तस्य लोकस्य "सर्वं तत् प्रज्ञानेत्रम्" इति विष्णवधीत्वस्य पूर्वमेवोक्तत्वात् पुनः "प्रज्ञानेत्रोऽलोकः" इति मुक्तविषयमेव। मुक्तो ह्यलौक्यत्वादलोकः।[1] "अण्डजानि च" इत्याद्युक्त्वा पुनः "अश्वा गावः" इत्यादि देवादीनां मन आदेरेव जातानामपि स्वीकारार्थम्। अण्डजत्वाद्युत्पत्तिप्रकारोऽपि विष्णवधीन इति ज्ञापयितुं तत्कथनम्। "तथाऽश्मानस्तृणकाष्ठाश्च सर्वे दिष्टक्षये स्वां प्रकृतिं भजन्ते" इति भारतवचनादश्मादीनामपि प्राणित्वात् तत्स्वीकारार्थं प्राणीति। गमनपतनस्थिरत्वाद्योऽपि भावा विष्णवधीना इति ज्ञापयितुं जङ्गममित्यादिवचनम्। स एतेनेत्यलोकशब्दोक्तो मुक्तः परामृश्यते। सकलकर्मबन्धमुक्त्यनन्तरं हि शरीरादुत्क्रामति। प्रकृष्टज्ञानरूपेण विष्णुना प्रेरितः प्राज्ञेना[2]ऽत्मनैवोत्क्रम्य तेनैव सर्वान् कामानाप्त्वा तेनैव सर्वान् सम्भुङ्क्त इति सर्वत्रानुषज्ज्यते।[3] "प्रज्ञानेत्रोऽलोकः" इत्युक्ते कथं प्रज्ञानेत्रो मुक्त इत्याकाङ्क्षायां तस्यैव व्याख्यानं "स एतेन प्रज्ञेनाऽत्मना" इत्यादि। अनुक्तविशेषाणाम[4]पि भगवदधीनत्वज्ञापनार्थं प्रज्ञानेत्रोऽलोक इति सामान्यवचनम्।

"अनारब्धफलानां च प्रारब्धानां च सर्वशः। कर्मणां दाह एवायं मुक्तिरित्यभिधीयते। स तु मुक्तस्ततो देहादुद्गच्छति परात्मना। प्रेरितो विष्णुलोकं च प्राप्य भोगानवाप्य च। भुङ्क्ते विष्णुप्रसादेन न विष्णोरवशः क्वचित्। विष्णुतन्त्रा इमे सर्वे मुक्ता अपि यतोऽखिलाः" इति ब्रह्माण्डे।

ब्रह्मेन्द्रादिशब्दा विष्णावेव मुख्यत इति तद्व्यावृत्त्या जीवानां स्वीकारार्थमेष इत्यादिशब्दः। स हि भगवान् स्वनेतृकोऽपि नानुग्राह्यः। अनुग्राह्यत्वं हि ब्रह्मादीनामत्र विवक्षितम्। "नेयताऽनुग्राह्यताऽपि न सा विष्णोः स्वतोऽपितु" इति शब्दतत्त्वे ॥ * ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमदैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके
पञ्चमोऽध्यायः

---

१ "अलोक्यत्वादलोकः" इति प्र. पाठः। लोकसम्बन्धि लोकस्येदमिति लौक्यम्। तन्न भवति अलौक्यं लोकविलक्षणम्। २ "प्रज्ञेन" ३ "सर्वान् कामान् स भुङ्क्त इति सर्वत्रानुषज्यते" ४ "विशेषणानामपि" इति प्र. पाठः।

ॐ॥ वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थ श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान् सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद् वक्तारमवतु। अवतु माम् अवतु वक्तारम् ॥१॥*॥ इति प्रथमं ब्राह्मणम् ॥*॥

इति श्रीमहैतरेयोपनिषदि द्वितीयप्रघट्टके षष्ठोऽध्यायः

---

ॐ॥ अथातः संहिताया उपनिषत् ॥१॥ पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेय आकाशः संहितेत्यस्य माक्षव्यो वेदयाञ्चक्रे ॥२॥ स हा

---

ॐ॥ "वाङ् मे मनसि प्रतिष्ठिता", अवबोधरूपे विष्णौ प्रतिष्ठिता। स च विष्णुर्मे वाचि स्थितः। "यदेतद्धृदयं मनश्च" इति विष्णुनामधेयेषूक्तत्वात्। "आविरावीर्म एधि", हे विष्णो ममाऽविराविर्भव। आणीस्थित आण्यां स्थित विष्णविति सम्बोधनं[1]।

"आधारः सर्ववेदानां वेदाणी प्राण उच्यते। तस्मिन् स्थितो हरिर्नित्यमाणीस्थ इति गीयते" इति शब्दतत्त्वे।

आविरावीरिति दैर्घ्यमतिशयार्थे। "आधिक्येऽधिकम्" इति सूत्रात्। अणशब्दस्य गतिवाचित्वाच्चलमाणमुच्यते। तस्य धारणेन तद्वानाणी। स्थापक इत्यर्थः। मे श्रुतं मा प्रहासीः मम विद्यागोचर एव सर्वदा भव। विस्मृतो मा भव। हे विष्णो, अनेन त्वद्विषयेणैवाधीतेनाहोरात्रान् सन्दधामि। सर्वाहोरात्रेष्वपि त्वद्विषयाध्ययनमेव करोमीत्यर्थः। ऋतं यथावदवगतं त्वां वदिष्यामि। सत्यं साधुगुणैस्ततं सर्वनियन्तारं च। तद् विष्णवाख्यं ब्रह्म मामवत्विति तस्यैव विष्णोः परोक्षत्वेनैव प्रार्थनम्।

"वाङ् म इत्यादिकं खण्डं विष्णुप्रार्थनरूपकम्। अविघ्नत्वमभीप्सूनां शिष्याणां दृष्टवान् हरिः" इति च ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमहैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके
षष्ठोऽध्यायः

---

ॐ॥ "विष्णुनाम्नि षकारस्य णकारस्य च संहिताम्। विष्णोस्तु बहुरूपाणां वाचकामृषयो[2] विदुः। तौ च वर्णौ हरेः सम्यक् स्वरूपप्रतिपादकौ। बहुधेवं[3] स्थितस्यास्य सदैवैकस्वरूपिणः। विष्णुनामार्थरूपत्वाद् वेदानामपि सर्वशः। अन्येषामपि शब्दानां संहिता विष्णुवाचकाः[4]। तद्वाचकास्तथा वर्णाः सर्वे वैदिकलौकिकाः[5]। पृथिवीनामकं

---

१ "सम्बोधनम्" २ "वाचिकामृषयः" ३ "बहुधैव" ४ "विष्णुवाचिकाः" ५ "लौकिकवैदिकाः" इति प्र. पाठाः।

विपरिहृतो मेने न मेऽस्य पुत्रेण समगादिति समाने वै तत्परिहृतो मेन इत्यागस्त्यः ॥३॥ समानं ह्येतद् भवति वायुश्चाऽऽकाशश्चेत्यधिदैवतमथाध्यात्मम् ॥४॥ वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयोऽथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपं मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति समानमेनयोरत्र पितुश्च पुत्रस्य च ॥५॥ स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः ॥६॥

---

रूपं पृथुत्वात् पृथिवीस्थितम्। देवतापूर्ववर्णस्य पूर्वरूपं तदुच्यते। देवतोत्तरवर्णस्य क्रीडनाच्च द्युनामकम्। दिवि स्थितं हरे रूपमुत्तरं रूपमुच्यते। वेदकत्वाच्चायनत्वाद् रूपं यद् वायुनामकम्। विष्णोस्तद्वर्णयोर्मध्यदेवतेति प्रकीर्तितम्। संहितानामकं तच्च रूपद्वयसहस्थितेः। वर्णद्वयं विकारं च षकारं केचिदब्रुवन्। षकारं मध्यमत्रैव णकारं केचिदुत्तरम्। पृथक् करणमेवैषां वर्णयोर्मध्यमुच्यते। उपसर्गमात्रं वीत्याहुः केचिन्नाम ष्णुमात्रकम्। षकारं च णकारं च वर्णौ पूर्वोत्तरावपि। व्यक्तिरेवोष्मणस्तत्र मध्यमित्यभिधीयते। सर्वेऽप्येत उपादेयाः पक्षा निर्दोषका यतः" इत्याद्यैतरेयसंहितायाम्।

आकाशस्थ आकाशनामा भगवान् वर्णयोर्मध्यदेवतेति माक्षव्यः। उभयरूपसहितत्वात्[1] संहितानामकम्[2]। स माण्डूकेयस्तेन माक्षव्येणा[3]परिहृतः स्वपक्ष इति मेने। मदीयेन[4] मदुपासितेनास्याऽऽकाशस्य पुत्रेण वायुना न समागादसौ माक्षव्यः। वायुस्थविष्ण्वनुपासनात्। यद्यप्याकाशस्थो भगवान् संहितानामको भवति। तथाऽपि न वायुस्थस्यासंहितात्वं भवतीत्यपरिहृतत्वम्। परिहृतो माण्डूकेयपक्ष इत्यहं मेन इत्यागस्त्यः। आकाशे विष्णूपासनस्याधिकफलत्वात्। पिता ह्याकाशो वायोः। भगवतस्तु पक्षः समत्वमेव वाय्वाकाशयोरिति। आकाशस्य पितृत्वाद् वायोर्बलाधिकत्वाच्चोभयोरुपासनास्थानत्वे साम्यम्। तस्मादुभावपि ग्राह्यौ। त्वगिन्द्रियदेवतात्वेनाऽऽकाशात् पूर्वमेव वायोः सात्त्विकाहङ्कारजत्वाद् वायोराकाशाद् गुणाधिक्यम्[5]। तथाऽप्यत्राऽऽकाशस्य पितृत्वं प्याप्तिश्चाधिकेत्युपासनायां साम्यम्। अत्र प्राणाख्यस्य प्राणे स्थितस्य विष्णोः संहितानामत्वे पितापुत्रयोः साम्यमेव। अन्यत्र तु पुत्रपक्ष एव बलीयान्। युक्तिमत्त्वात्।

"मनोवाक्प्राणनामाऽसौ मनआदिषु संस्थितः। विष्णुस्तस्य रथो देह इन्द्रियाश्वः प्रकीर्तितः" इति च। "प्रष्टिः स पृच्छनीयत्वात् परमात्मा जनार्दनः। वक्तृत्वाच्चैव वाङ्नामा मनो मन्तृत्वहेतुतः" इति च। "प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव" इति च श्रुतिः। मुक्तिरेव स्वर्गलोकः—"अमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वा" इति प्रस्तुतत्वात्।

---

१ "संहितत्वात्" २ "नामकः" ३ "माक्षव्येण" ४ "मे मदीयेन" ५ "गुणाधिकत्वम्" इति प्र. पाठाः।

स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन ॥७॥ सर्वमायुरेतीति नु माण्डूकेयानाम् ॥८॥*॥ इति प्रथमं ब्राह्मणम् ॥*॥

अथ शाकल्यस्य पृथिवी पूर्वरूपं द्यौरुत्तररूपं वृष्टिः सन्धिः पर्जन्यः सन्धाता तदुतापि यत्रैतद् बलवदनूद्गृह्णन् सन्दधदहोरात्रे वर्षति ॥१॥ द्यावापृथिव्यौ समधातामित्युताप्याहुरिती न्वधिदैवतमथाध्यात्मम् ॥२॥ पुरुषो हवा अयं सर्व आनन्दं द्वे विदले भवत इत्याहुस्तस्येदमेव पृथिव्या रूपमिदं दिवस्तत्रायमन्तरेणाऽऽकाशो यथाऽसौ द्यावापृथिव्यावन्तरेणाऽऽकाशस्तस्मिन् हास्मिन्नाकाशे प्राण आयत्तो यथाऽमुष्मिन्नाकाशे वायुरायत्तो यथाऽमूनि त्रीणि ज्योतींषीत्येवमिमानि पुरुषे त्रीणि ज्योतींषि यथाऽसौ दिव्यादित्य एवमिदं शिरसि चक्षुर्यथाऽसावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयं यथाऽयमग्निः ॥३॥ पृथिव्यामेवमिदमुपस्थे रेत एवमु हस्म सर्वलोकमात्मानमनु विधायाऽहेदमेव पृथिव्या

---

"मुक्तः प्रकृष्टज्ञानैश्च वेदैर्विष्णूत्थतेजसा। नित्यायुषा च युक्तः स्यात् संहितारूपविद्धरेः" इति च।

प्रकृष्टत्वेन जननात् प्रजेति ज्ञानम्। पान्ति शंसाधनाश्चेति पशवो वेदाः। परब्रह्मणो विष्णोर्वरणादेव सम्यक् चायितं स्वरूपतेजः[1]। लौकिकप्रजादिकमपि तदिच्छूनां[2] यथायोग्यं भवति। माण्डूकेयैर्ऋषिभिरुपाश्रिता एता विद्याः ॥ * ॥

"वराहो वामनः सिंह इति रूपत्रयं हरेः। पूर्वोत्तरार्णमध्येषु स्थितमुक्तं सनातनम्। माण्डूकेयैर्हि शाकल्यो वासुदेवादिरूपिणम्। तेषु चोच्चारके चैव स्थितमाह चतुर्विधम्। भूमिद्युवृष्टिपर्जन्यनाम्नोर्व्यादिषु संस्थितम्। उर्व्यादीनां चतुर्णां च देह एव स्थितिं पुनः। अधरार्धस्य चोर्व्याश्च साम्यमन्यस्य वै दिवा। वाचो वृष्ट्यैव साम्यं च पर्जन्येनैव चाऽऽत्मनः। तेषां तेषु स्थितिं चैव विष्णोश्च चतुरात्मनः। आकाशस्यान्तराकाशे नृसिंहस्यात्र संस्थितिम्। वायोः प्राणात्मतां चैव तत्र दाशरथेः स्थितिम्। सूर्यविद्युद्धुताशानां दृग्घृद्रेतःसु च स्थितिम्। कपिलस्य च हंसस्य जामदग्न्यस्य तेषु च। स्थितिं वदति विद्येयमपि मोक्षप्रदायिनी" इत्यादि च।

वर्षणाद् वृष्टिः। परं जनयतीति पर्जन्यनामा विष्णुः। सन्धिनोतीति सन्धिः। "धिनु पुष्टौ" इति धातुः। सम्यग् धारणात् सन्धाता। वर्षणमेव द्यावापृथिव्योः सन्धानम्। पर्जन्यस्थो भगवांस्तत्कर्ता[3] ॥ * ॥

---

१ "स्वरूपं तेजः ब्रह्मवर्चसम्" २ "तदिच्छताम्" ३ "भगवांस्तु तत्कर्ता" इति प्र. पाठाः।

रूपमिदं दिवः स य एवमेतां संहितां वेद ।।४।। सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।।५।।*।। इति द्वितीयं ब्राह्मणम् ।।*।। अथातो निर्भुजप्रवादाः ।।१।। पृथिव्यायतनं निर्भुजं दिव्यायतनं प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेणाथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेद्च्योष्ठा अवराभ्यां स्थानाभ्यामित्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेद्च्योष्ठा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयाद् यस्त्वेवोभयमन्तरेणाऽह तस्य नास्त्युपवादो यद्धि सन्धिं विवर्तयति तन्निर्भुजस्य रूपमथ यच्छुद्धे अक्षरे अभिव्याहरति तत् प्रतृण्णस्याग्र उ एवोभयमन्तरेणोभयं व्याप्तं भवत्यन्नाद्यकामो निर्भुजं ब्रूयात् स्वर्गकामः प्रतृण्णमुभयकाम उभयमन्तरेणाथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत् पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तं पर उपवदेद् दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उपवदेदन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयाद् यथातुकथाच ब्रुवन् वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत् तथा स्यान्न त्वेवान्यत्

---

"पृथिवीस्थो वराहस्तु संहितादेवतोदिता। दिविष्ठो वामनश्चैव सम्प्रोक्तः पददेवता। नृसिंहस्त्वन्तरिक्षस्थो भगवान् क्रमदेवता। स्वाध्यायमेवं ध्यात्वा यः करोत्यपवदेन्न[1] तम्। तस्यापवदिता याति त्रैलोक्यादध एव हि। नाशमाप्नोति निरये तस्मादपवदेन्न तम्। गच्छस्यध इति ब्रूयादन्यं ब्राह्मणतस्तथा। ब्रह्मप्राप्तेर्हि योग्यो यो ब्राह्मणः स नचेतरः" इति च।

भञ्जनवर्जितत्वान्निर्भुजं संहिता। "तृणु च्छेदने[2]" इति धातोः प्रतृण्णं पदम्। उभयमन्तरेण क्रमः। निर्भुजमूलत्वात् पदादीनां तद्विषयप्रवादा अपि निर्भुजप्रवादा इत्येवोच्यन्ते। पृथिवीस्थितपृथिवीनामकविष्ण्वायतनं पृथिव्यायतनमित्यादि। अवराभ्यां पृथिव्यन्तरिक्षाभ्यां च्युतोऽसीति। उत्तराभ्यामन्तरिक्षद्युभ्याम्।

"क्रमस्वाध्यायकृद् यस्तं विशेषेण न निन्दयेत्। लोकत्रयादपि भ्रष्टो यस्मात् तन्निन्दको भवेत्" इति च।

तस्मादतिदुष्टत्वात् तन्निन्दको नास्त्येवेत्युक्तम्— "तस्य नास्त्युपवादः" इति। "तं कृष्णं पुण्डरीकाक्षं को नु युद्ध्येत बुद्धिमान्" इत्यादिवत्। उपवदेदित्युक्तो मनुष्यमात्रः। पर उपवदेदित्यसुरः। सर्वशत्रुत्वात्।

"अमुक्तियोग्यैस्तु नरैर्विदुषां निन्दने कृते। ब्रूयाल्लोकच्युतोऽसीति निन्दितोऽसुरसर्गगैः।

---

१ "करोत्युपवदेन्न तम्" २ "तृण च्छेदने" इति प्र. पाठौ।

कुशलाद् ब्राह्मणं ब्रूयादतिद्युम्न एव ब्राह्मणं ब्रूयान्नातिद्युम्ने चन ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माऽह शूरवीरो माण्डूकेयः ॥ * ॥ इति तृतीयं ब्राह्मणम् ॥ * ॥

अथातोऽनुव्याहाराः । प्राणो वंश इति विद्यात् स य एनं प्राणं वंशमुपवदेच्छ-क्नुवन्तं चेन्मन्येत प्राणं वंशं समधाः३ ॥१॥ प्राणं मां वंशं सन्दधतं न शक्नोषी-त्याह प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयादथ चेदशक्नुवन्तं मन्येत प्राणं वंशं समधित्सिषन्तं नाशकः सन्धातुं प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयाद् यथातु-कथाच ब्रुवन् वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत् तथा स्यान्नत्वेवान्यत्कुशलाद् ब्राह्मणं ब्रूयादतिद्युम्न एव ब्राह्मणं ब्रूयान्नातिद्युम्ने चन ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माऽह शूरवीरो माण्डूकेयः ॥२॥*॥ इति चतुर्थं ब्राह्मणम् ॥*॥

---

नाशयिष्यति विष्णुस्त्वामन्धे तमसि पातयेत् । इति ब्रूयान्नतु ब्रूयाद् देवसर्गा-त्मकं क्वचित्" इति च । "षणयोः सन्धिकरणात् संहिताध्ययनं भवेत् । विषणु-स्त्विति यो ब्रूयात् पदाध्यायी भवेत सः । सन्ध्युक्तिश्च विभागश्च द्वयं व्यासं क्रमेण तु । तस्माद् द्विधाऽपि वचनात् क्रमाध्यायी भवेत सः । भोगवृद्धिं[1] तु यो मोक्ष इच्छेद् विष्णव इत्यसौ । मोक्षकामो विषणवे द्वयकामो द्वयं वदेत् । विष्णुनामात्मकत्वाच्चाथ संहितपदक्रमाः । सर्ववेदस्थिता मोक्षतद्भोगद्वयसाधकाः । तज्ज्ञानामेव नान्येषामिति वेदानुशासनम् । संहिताद्या ब्रुवन् वाऽपि य एवंविन्नवा ब्रुवन् । परिवादं ब्रुवन्तं वा न ब्रुवन्तमथापि वा । यद् वदेत् तत् तथैव स्यात् क्षिप्रमेव न संशयः" इति च ।

अग्रे एव[2] । अद्वयमेवोभयमन्तरेण ।

"द्युम्नो द्युतिस्वरूपत्वाद् विष्णुरेव प्रकीर्तितः । योऽतिक्रामति तस्याऽज्ञामतिद्युम्नः स कीर्तितः[3] । मोक्षायोग्योऽपि[4] यस्त्वेवमतिद्युम्नो भवेत् पुमान् । लोकच्युतोऽसीत्येवं तं ब्रूयान्नाऽज्ञास्थितं क्वचित् । लोकच्युतो भवेत्येनमपि नैव वदेत् क्वचित् । च्युतोऽ-सीति तु शिक्षार्थं ब्रूयान्नैवान्यथा क्वचित्" इति च ॥ * ॥

भगवदुपासकस्य यस्मिन् कस्मिंश्चिद् दोष उक्ते तं प्रत्युक्तिप्रकारः पूर्वं दर्शितः । अनुव्याहारशब्देन भगवदुपासनाविषय एवास्याशक्त्यादिदोषं वदतः प्रत्युक्तिरुच्यते । निर्भुजं वदन्तमित्यादि त्वव-स्थामात्रदर्शनम् । आत्मनो ज्ञानसामर्थ्यानुसारेण वक्तव्यत्वादनुव्याहारः ।

"सर्वाधारत्वतो वंश इत्युपासीत यो हरिम् । वायुं च मुक्तिमाप्नोति य एवं तदुपास-कम् । निन्देत विष्णुविज्ञानविषये तं वदेत सः । विष्णुना वंशभूतेन सहितं वायुना[5]

---

१ "भोगवृद्धिं च" २ "अग्र एव" ३ "प्रकीर्तितः" ४ "मोक्षयोग्योऽपि" ५ "वायुना सहितम्" इति प्र. पाठाः ।

अथ खल्वाहुर्निर्भुजवक्त्राः पूर्वमक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति ॥१॥ स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेत्यथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माऽह ह्रस्वो माण्डूकेयः ॥ २ ॥ पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण येन सन्धिं विवर्तयति येन स्वरास्वरं विजानाति येन मात्रामात्रां विभजते सा संहितेति ॥ ३ ॥ स य एवमेतां

तथा। न शक्नोषीति मामात्थ हास्यतस्त्वामतो हि तौ। ज्ञानसामर्थ्यवानित्थं ब्रूयाद् देवादिरुत्तमः। अन्यो गन्धर्वपित्रादिरल्पज्ञानबलो हि यः। स ब्रूयाद् विष्णुवायुभ्यां सन्धिमिच्छन्तमेव मा[1]। सन्धातुं नाशको यस्माद्धास्यतस्त्वामतो हि तौ" इति च।

"स य एनं प्राणं वशमुपवदेत्", प्राणं प्रत्येनमुपासकमुपवदेत्। प्राणस्य विष्णोः प्रियत्वं तव न प्राप्स्यतीति। "नाशकः सन्धातुम्", मया सह सन्धानं कर्तुं नाशकः। मम प्रीतिं कर्तुं नाशकः।

"तद्भक्तभक्तेष्वपि यो न कुर्यात् प्रीतिमञ्जसा। विष्णुर्जहाति तं पापमिह चामुत्र च प्रभुः" इति च भारते ॥ * ॥ "पूर्ववर्णस्थितं यत्तद् रूपं पूर्वाक्षराभिधम्। वराहाख्यं हरेरन्यवर्णगं वामनाभिधम्। उत्तराक्षरसंज्ञं च वर्णयोरन्तरस्थितम्। अवनात् काशनाच्चैतदवकाशाभिधं हरेः। नृसिंहरूपमित्याहुर्निर्भुजास्यास्तथाऽवदन्[2]। ह्रस्वो येनाक्षरोच्चारो मात्रासन्धिस्वरात्मकः। व्यासरूपो हरिः साक्षात् संहितानामकस्त्विति। तत्पुत्रो मध्यमः प्राह समोच्चारणकारणः। सामनामा वासुदेवः संहितानामवानिति" इति च।

मापयति त्रायति चेति मात्रा भगवान्। यथोच्चारितवर्णयोर्मध्यस्थितश्च।

"मा नः स्तेनेभ्यो अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः। येषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते[3] ब्रूहि तेभ्यः कदाचित्। अथो शमेनोपरता मनुष्या ये धर्मिणो ब्रूहि तेभ्यः सदा नः। आ देवानामोहते वि व्रयो[4] हृदि बृहस्पते न परः साम्नो विदुः"।

अभिद्रुहस्पदे अभितो द्रोहस्य नित्यनिरतिशयदुःखस्यान्धतमसो योग्याः।

"ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः। शास्त्रतत्त्वमविज्ञाय तथावादबला जनाः। कामक्रोधाभिभूतत्वादहङ्कारवशं गताः। याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः। ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः। वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते। तेषां तमःशरीराणां तम एव परायणम्" इति मोक्षधर्मे भगवद्वचनादेवंविधा एव स्तेना अभिद्रुहस्पदस्थाश्च।

निरामिणः रामस्य रमणरूपस्य पूर्णानन्दस्वरूपस्य विष्णोर्जीवस्वरूपतादिज्ञानेन[5] नीचताविदः। तत एव[6] रिपवश्च तस्य।

---

१ "माम्" २ "तथाऽवदत्" ३ "बृहस्पते" ४ "विव्रयो" ५ "स्वरूपताज्ञानेन" ६ "त एव" इति प्र. पाठाः।

संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेत्यथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रोऽक्षरे खल्विमे अविकर्षन्ननेकीकुर्वन् यथावर्णमाह ॥४॥ तद् याऽसौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण सन्धिविज्ञपनी साम तद् भवति सामैवाहं संहितां मन्य इति ॥५॥ तदप्येतदृषिणोक्तं बृहस्पते न परः साम्नो विदुरिति ॥६॥ स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥७॥ ॥*॥ इति पञ्चमं ब्राह्मणम् ॥*॥

बृहद्रथन्तरयो रूपेण संहिता सन्धीयत इति तार्क्ष्यो वाग् वै रथन्तरस्य रूपं

---

"अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो मम भूतमहेश्वरम्। मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं[1] श्रिताः"

इत्यादिवचनादसुरादयः।

अन्नेषु जागृधुः भोगमात्रगृध्नवः। येषामेतत् सर्वोत्तमं वासुदेवाख्यं परं ब्रह्म नास्तीति पक्षः। ईशितव्ये विद्यमाने हीश्वरो भवतीति। नचापरं किञ्चित्। परमापेक्षया ह्यपरमिति। किं तर्हि ? किञ्चनैकम्। किमप्येकमेव वस्त्वस्ति न परमपरं वेति[2] तेषां पक्षः।

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। अपरस्परसम्भूतं किमन्यत् कामहैतुकम्। एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः। प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः। ईश्वरोऽहमहं भोगी"[3] इत्यादिवचनात्।

ब्रह्मणस्पते ब्रह्मणो वेदस्य पते वायो। "अथ हेममासन्यं प्राणमूचुः। एष उ एव ब्रह्मणस्पतिः। वाग्घि बृहती"[4] इत्यादिश्रुतेः। एतादृशेभ्यो मा ब्रूहि। शमेन विष्णुनिष्ठया उप समीपे तस्मिन्नेव रताः साम्नो विष्णोः परं किमपि न विदुः। तदेव देवानां त्रयः। सर्वदेवानां परतमं विष्णवाख्यं ब्रह्म हृदा व्योहते। वासुदेवादिरूपेण वरं नियामकं चेति त्रयः। तेभ्यो ब्रूहि।

"वायुं विद्याः समासाद्य सर्वासां पतिमूचिरे। स्तेनेभ्यो मैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु च" इति च। सामनाम्ना श्रुतिर्यस्माद् विष्णुमाह ततः प्रियम्। तन्नाम विष्णोरिह तु संहितार्थं वदेद् यतः" इति च।

सामनाम्नः संहिताशब्दार्थत्वाद् विष्णोः, तस्य नाम्नः श्रुतिसिद्धत्वाच्च सामनाम्नो वासुदेवरूपसमाख्यासु पञ्चरात्रे पठितत्वाच्च तद् रूपं संहितानामकमिति युक्तमित्यभिप्रायः ॥ * ॥

"देवता पूर्ववर्णस्य लक्ष्मीरेव प्रकीर्तिता। नारायणस्तूत्तरस्य तौ वाक्प्राणाभिधौ मतौ। मध्यस्थः संहितानामा सोऽर्धनारीपुमात्मकः। वेदात्मकत्वाद् वाङ्नाम्नी लक्ष्मीरेव प्रकीर्तिता। प्राणनामा प्रणेतृत्वात् साक्षान्नारायणः स्वयम्। रमि-

---

१ "मोहिनीं" २ "चेति" इति प्र. पाठौ। ३ इतः परं प्र. पाठे "सिद्धोऽहं बलवान् सुखी" इत्यर्धमधिकम्। ४ "वाग् वै ब्रह्म। तस्या एष पतिस्तस्मादु बृहस्पतिः" इति प्र. पाठः।

प्राणो बृहत उभाभ्यामु खलु संहिता सन्धीयते वाचा च प्राणेन चैतस्यां हस्मोपनिषदि संवत्सरं गा रक्षयते तार्क्ष्य एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते तार्क्ष्य ॥१॥ तदप्येतदृषिणोक्तं रथन्तरमाजभारा वसिष्ठः। भरद्वाजो बृहदा चक्रे अग्नेरिति स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेत स्वर्गेण लोकेन सर्वमायुरेति वाक् प्राणेन संहितेति कौण्ठरव्यः ॥२॥ प्राणः पवमानेन पवमानो विश्वैर्देवैर्विश्वे देवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषाऽवरपरा संहिता स यो हैतामवरपरां संहितां वेदैवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सन्धीयते ॥३॥ यथैषा संहिता स यदि परेण वोपसृतः स्वेन वाऽर्थेनाभिव्याहरेदभिव्याहार्षन्नेव विद्याद् दिवं संहिताऽगमद् विदुषां देवानामेवं भविष्यतीति शश्वत् तथा स्यात् स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति वाक् संहितेति पञ्चालचण्डो वाचा वै वेदाः सन्धीयन्ते वाचा च्छन्दांसि वाचा मित्राणि सन्दधति ॥४॥

---

त्यानन्द उद्दिष्टः सम्भोग्यस्थमुदाहृतम्[१]। विष्णुभोग्या रतितरा लक्ष्मीरेव रथन्तरम्। नारायणो बृहत्त्वात्तु बृहन्नामा प्रकीर्तितः। रथन्तरस्य बृहतो देवते चैव तावुभौ। वाक्प्राणसंस्थितौ चैव ताभ्यामेव हि सन्धितम्[२]। लक्ष्मीनारायणं रूपं संहितानामकं शुभम्। एतां विद्यामवाप्तुं हि वत्सरं गा अरक्षत। तारुक्ष्य एतन्मात्रं[३] चै समुद्दिश्य नचापरम्। संहितादेवता बह्वय इति कुण्ठरवात्मजः। द्वयं द्वयं देवतानां मिळितं[४] हरिशर्ववत्। संहितानामकं तत्र वर्णमध्यस्य देवता। तयोरेकं देवतयोः परमन्यत् तथाऽवरम्। अवरस्य परस्यापि संयोगात् संहिता तु सा। प्रोक्ताऽवरपरेत्येव वाक्प्राणाख्यौ रमाच्युतौ। संहितैका तथैवान्या केशवो वायुसंयुतः। वायुः स पवमानाख्यो देवताश्चाखिला अपि। तृतीया संहिता प्रोक्ता देवतास्ताः सशङ्कराः। चतुर्थी संहिता प्रोक्ता शङ्करो ब्रह्मणा सह। पञ्चमी संहिता चैव संहिता मोक्षदा इमाः। प्रथमायां द्वितीयायां विष्णुरेव परो मतः। तृतीयायां वायुरेव चतुर्थ्यां सर्वदेवताः। विरिञ्च एव पञ्चम्यामवरा इतरे ततः। प्रथमायां संहितायामवरो वामभागगः। द्वितीयायां तु परमस्तृतीयायां तथाऽवरः। चतुर्थ्यां परमश्चैव पञ्चम्यां वामगोऽवरः। अवराद्याः परान्ता यदेताः सर्वाश्च संहिताः। ततोऽवरपराः प्रोक्ता नैवोक्तास्ताः परावराः। अभिमानी द्युलोकस्य शिवः सर्वस्य लोकनात्। द्योतनाच्च यदि ब्रूयान्मन्त्रमेतमथापि वा। आत्मार्थेऽथ परार्थे वा चिन्तयेदेवमञ्जसा। विद्वांसो देवता यस्मात् सम्यक् तेन महत् फलम्। तेषामेव हरिश्चैव संहितारूपकः प्रभुः। अगमद् देवलोकं हि कर्तुं देवेष्वनुग्रहम्। इति चिन्तयतस्तेषां प्रसादात् फलमञ्जसा। पञ्चालचण्डो वाचं तु ब्रह्माणीं हि सरस्वतीम्।

---

१ "सम्भोग्यं थमुदाहृतम्" २ "संहितम्" ३ "तार्क्ष्य एतावन्मात्रं च" ४ "मिलितं" इति प्र. पाठाः।

वाचा सर्वाणि भूतान्यथो वागेवेदं सर्वमिति ॥५॥ तद् यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति वाक् तदा प्राणं रेळ्ह्यथ यत्र तूष्णीं वा भवति स्वपिति वा प्राणे तदा वाग् भवति प्राणस्तदा वाचं रेळ्हि तावन्योन्यं रीळ्हो वाग् वै माता प्राणः पुत्रस्तदप्येतदृषिणोक्तम् ॥६॥ एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे । तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरमिति ॥७॥ स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥८॥ अथातः प्रजापतिसंहिता जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः सन्धिः प्रजननं सन्धानं सैषाऽदितिः संहिताऽदितिर्हीदं सर्वं यदिदं किञ्च ॥९॥ पिता च माता च पुत्रश्च प्रजननं च तदप्येतदृषिणोक्तम् ॥१०॥ अदितिर्माता स पिता स पुत्र इति स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति सर्वमायुरेति ॥११॥ ॥*॥ इति षष्ठं ब्राह्मणम् ॥*॥

इति श्रीमहैतरयोपनिषदि द्वितीयप्रघट्टके सप्तमोऽध्यायः

---

मन्यतेऽस्याः पुत्रवच्च देवं नारायणं प्रभुम् । वेदैर्हि व्यज्यते विष्णुः सा च वेदाभिमानिनी । प्राणस्थो भगवान् विष्णुः प्राणनामा प्रणेतृतः। ब्रह्मणोऽपि पिता नित्यं भगवान् पुरुषोत्तमः। उपचर्यते पुत्र इति वेदैर्यद्व्यज्यते प्रभुः[1] । सा देवी संहितानाम्नी वाच्योऽस्या विष्णुरेव हि । प्रजापत्याख्यशर्वेण प्रोक्ताऽन्या संहिताऽपि हि । विष्णुरेवादितिर्नाम सर्वस्यात्ता यतः प्रभुः । स एव पितृसंस्थस्तु पातृत्वात् पितृनामकः । देवतोत्तरवर्णस्य मातृस्थो मातृनामकः । माननात् पूर्ववर्णस्य देवतेति प्रकीर्तितः । पोषकत्वात् सन्धिनामा वर्णयोरन्तरस्थितः । स एव पुत्रसंस्थश्च पुत्रनामा जनार्दनः । त्राणात् पूतित एवासौ वर्णसन्धानकर्मणि । सन्धाननामा सन्धानकर्तृत्वात् पुरुषोत्तमः । प्रजातिकर्मसंस्थश्च स एव प्रजनाभिधः । जनकत्वात् परो विष्णुरेवं विष्णुर्हि संहिता । वासुदेवादिरूपेण चतुर्धैवं व्यवस्थितः । स एव दिवि संस्थश्च द्युनामा क्रीडनात् प्रभुः । अन्तरेवेक्षणाच्चैव सोऽन्तरिक्षोऽन्तररिक्षगः । पृथिवी पृथिवीस्थश्च प्रथितत्वाज्जनार्दनः । मुख्यार्थत्वात् सर्वनाम्नां सर्वदेवाभिधो हरिः । विश्वे देवा इति प्रोक्तो बहुधा तेषु संस्थितः । ज्ञानद्युतेर्देवनामा स्थितो देवेषु केशवः । गां धारयंश्च गन्धर्वो वन्धर्वेषु व्यवस्थितः । माननान्मानुषो नाम मानुषेषु स्थितो हरिः । पालनात् पितृनामासौ पितृष्वेव व्यवस्थितः । रतेः प्राणेऽसुराख्यश्च सोऽसुरेषु व्यवस्थितः ।

---

१ "व्यज्यते हरिः" इति प्र. पाठः ।

एवं पञ्चजनेषुस्थो हरिः पञ्चजनाभिधः । जातनामा जातसंस्थः प्रादुर्भूतगुणत्वतः । जनिक्रियास्थितश्चासौ जनित्वमिति गीयते । जनिं यस्मात् तवयति तवनं हि प्रकाशनम्" इति च । "प्रथश्च सप्रथश्चैव राजानौ मत्स्यदेशजौ । याषयामासतुर्विष्णोर्हविर्नाम्नो हविर्मखे । अनुष्टुब्देवता यस्तु नृसिंहो जगतोऽस्य च । स्वमुखे हवनादेव हविरित्यभिधीयते । तस्मिन् यज्ञे वसिष्ठस्तु चतूरूपाज्जनार्दनात् । आजहार श्रियं देवीं रथन्तरवराभिधाम् । चतुर्मूर्तिः स्तुतस्तेन प्रेषयामास तां श्रियम् । सा चास्मै प्रददौ विद्यां प्रययौ च पुनर्हरिम् । धातेत्युक्तोऽनिरुद्धस्तु प्रद्युम्नस्तु द्युतानकः[1] । वासुदेवः प्रसविता सर्वस्य प्रभवात् प्रभुः[2] । सङ्कर्षणो विष्णुनामा प्रणेतृत्वाद् बलादपि । चतूरूपं परं विष्णुं राजानौ प्रथसप्रथौ । भरद्वाजो वसिष्ठश्च ध्यात्वाऽविन्दन् परात् परम् । यजनीयो यजुर्नामा विष्णुः सङ्कर्षणाभिधः । जीवानां स्कन्दनादेव स्कन्नः प्रद्युम्न उच्यते । प्रथमो वासुदेवस्तु देवयानोऽनिरुद्धकः । प्राप्यो देवैर्यतो नित्यमनिरुद्धाभिधो हरिः । तस्मादेवं चतुर्मूर्तैः स्तुतिसन्तोषिताद्धरेः । आजहार भरद्वाजो रूपं नारायणाभिधम् । तद् बृहन्नामकं विष्णोश्चतुरात्म्यात् समुद्गतम् । भरद्वाजमुपागम्य प्रादान्मोक्षवरं परम् । चतुर्मूर्तिः स भगवानग्निरित्यभिधीयते । अग्र्यत्वात् सर्वभूतानामेवं चत्वार एव ते । अविन्दंस्तं चतुर्मूर्तिं साक्षान्नारायणं प्रभुम् । गुहायां संस्थितमपि ह्यतीव हितमस्य च । सर्वज्ञत्वाद् यज्ञनाम्नो विष्णोस्तेजः परं हि तत् । तस्मादेव चतुर्मूर्तैः सूरिप्राप्यत्वहेतुतः । सूर्यनाम्नोऽहरन् घर्मनामानं तं नृसिंहकम् । घर्षणात् सर्वलोकस्य नृसिंहो घर्म उच्यते । निर्गत्य स चतुर्मूर्तैर्विप्रक्षत्राभिसंस्तुतात् । प्रथादीनां चतुर्णां च पुरुषार्थचतुष्टयम् । दत्वा जगाम भगवान् स्वकीयां तनुमेव च । वसिष्ठाच्च भरद्वाजाद्धोत्रध्वर्य्वोर्नृपौ तु तौ । यथेष्टसिद्धिं सम्प्राप्तौ सम्यगिष्टाज्जनार्दनात्" इत्यादृग्वेदसंहितायाम् ॥ * ॥

यस्य प्रथ इति नाम स च हविर्नाम्नो विष्णोर्हविर्यत् अयत् । अटो लोपेनान्तर्णीतणिच्त्वेन अयातयदित्यर्थः[3] । एवं सप्रथ इति यस्य नामासौ हविर्यदिति पृथक् सम्बन्धः । आचक्रे आह्वयामास[4] । "अविन्दन् ते", "तेऽविन्दन्" इत्यध्यात्माधिदैवयो[5]रुभयत्रापि भगवन्तमविन्दन्नित्यर्थः । देवयानं गुहायदिति वचनात् ।

"चतुःशिखण्डां तु रमां द्विरूपो भगवान् हरिः । परमानन्दरूपत्वात् सुपर्ण इतिनामकः । रमयामास तस्यां च निषण्णः सर्वदैव सः । एक एव च विष्णुः सः प्रविष्टः क्षीरसागरम् । सर्वं पश्यत्यसौ देवः पूर्णाकुण्ठेन चेतसा । परिपक्वेन मनसाऽपश्यमित्याह तं त्वजः । मातेव व्यञ्जकत्वात् तं प्राणस्थं वाक् सरस्वती । लिहते लिह्यत इव

---

१ "द्युनामकः" इति प्र. पाठः । द्युतानकः "धातुर्द्युतानात्" इति श्रुतौ द्युतानशब्दोक्तः । २ "प्रसवाद् विभुः" ३ "अयापयदित्यर्थः" ४ "आकारयामास" ५ "अध्यात्माधिदैवतयोः" इति प्र. पाठः ।

ॐ॥ प्राणो वंश इति स्थविरः शाकल्यस्तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन् प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितस्तस्यैतस्याऽत्मनः प्राण ऊष्मरूपमस्थीनि स्पर्शरूपं मज्जानः स्वररूपं मांसं लोहितमित्येतदन्यच्चतुर्थमन्तस्थारूपमिति ह स्माऽह ह्रस्वो माण्डूकेयः ॥१॥ त्रयं त्वेव न एतत् प्रोक्तं तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति त्रीणीतः षष्टिशतानि त्रीणीतस्तानि सप्तविंशतिशतानि भवन्ति ॥२॥ सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहःसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा स य एवमेतमहःसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं

---

प्राणस्थेन तु सा सदा। स्वयं तु भगवान् विष्णुर्वाक्पतेर्ब्रह्मणोऽपि हि। नित्यः पिता स्वतन्त्रश्च नास्य माता पिताऽपिवा[1]" इत्यादि च ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमहैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके
सप्तमोऽध्यायः

---

ॐ॥ "गृहस्याऽच्छादनादीनां मध्यवंशो यथाऽऽश्रयः। तथेन्द्रियाभिमान्यादिदेवानां वायुराश्रयः। तेषु सर्वेषु भगवान् बहुरूपो हरिः स्थितः। विष्णुनामाक्षरेष्वेवमन्येष्वपि तदर्थतः। प्राणनामा[2] तु भगवान् प्राणस्थश्चोष्मसु स्थितः। ऊष्मनामा समर्थत्वात् स एव भगवान् हरिः। पूर्णत्वादात्मनामाऽसौ प्रतिमात्वादमुष्य तु। सङ्घात आत्मशब्दोक्तो ह्यस्थिरश्चास्थिनामकः। अस्थिस्थितो स्पर्शसंस्थितः स्पर्शनामकः। स्पर्शहेतुत्वतः स्पर्शनामा स भगवान् हरिः। मज्जासुस्थः स मज्जाख्यो मदं जनयतीति ह। स एव स्वरसंस्थश्च स्वराख्यः स्वरतेः प्रभुः। प्रमाणं सारयेद् यस्मान्मांसाख्यो मांससंस्थितः। लोहिताख्यो रक्तवर्णो लोहितस्थो जनार्दनः। अस्थिस्थान्येव रूपाणि पर्वस्वपि हरेर्यतः। तत एव विभक्तानि सङ्ख्या तेषां पृथङ् न तत्। तस्मात् सप्तशतान्येव देहे विंशच्च तस्य हि। रूपाणि विष्णोर्भागे तु षष्ट्युत्तरशतत्रयम्। तान्येव विष्णो रूपाणि वत्सराहःसु सर्वशः। अहर्नामा च भगवानहार्यत्वात् प्रकीर्तितः। अहोभिः समसङ्ख्यानि यस्मादध्यात्मगानि तु। रूपाणि विष्णोस्तेनायमहःसम्मान उच्यते। पूर्णदर्शनशक्तित्वाच्चक्षुर्मय उदीरितः। तादृक्श्रवणशक्तित्वाद् तथा श्रोत्रमयः स्मृतः। छन्दोमयः सत्यकामो मन्तृवक्तृबलात्मकः। एवं विद्वांस्तस्य रूपाण्याप्नोति ज्ञानपुत्रवान्। पीयमानं शमाप्नोति प्राप्याहर्नामकं हरिम् ॥*॥ एवमुक्तप्रकारेण तस्य ह्यक्षरनामकम्। अशीत्युत्तर-

---

१ "पिताऽपिच" २ "प्राणनामाऽपि" इति प्र. पाठौ।

मनोमयं वाङ्मयमात्मानं वेदाह्वां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति ॥३॥*॥ इति प्रथमं ब्राह्मणम् ॥*॥

अथ कौण्ठरव्यस्त्रीणि षष्टिशतान्यक्षराणां त्रीणि षष्टिशतान्यूष्मणां त्रीणि षष्टिशतानि सन्धीनाम् ॥१॥ यान्यक्षराण्यवोचामाहानि तानि यानूष्मणोऽवोचाम रात्रयस्ता यान् सन्धीनवोचामाहोरात्राणां ते सन्धय इत्यधिदैवतमथाध्यात्मम् ॥२॥ यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मम् ॥३॥ यानूष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्ममेष हवै सम्प्रति प्राणो यन्मज्जैतद्रेतो न हवा ऋते प्राणाद् रेतः सिच्यते यद् वा ऋते प्राणाद् रेतः सिच्येत ॥४॥ पूयेन्न सम्भवेद् यान् सन्धीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मम् ॥५॥ तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति ॥६॥ पञ्चेतश्चत्वारिंशच्छतानि पञ्चेतस्तदशीतिसहस्रं भवत्यशीतिसहस्रं वा अर्कलिनो बृहतीरहरभिसम्पादयन्ति ॥७॥ स एषोऽक्षर-

---

साहस्ररूपं वर्णेषु संस्थितम् । विष्णुनाम्नोऽथवाऽन्येषु पञ्चाशत्सङ्ख्यकेष्वपि । तावत्सङ्ख्यानि देहेषु पृथङ् मज्जास्थिपर्वसु । रूपाणि विष्णोस्तावन्ति चेष्टकासु[1] पृथक् पृथक् । अर्कस्थितबृहत्याख्यरूपाण्यह्नां च सर्वशः । सम्पादकानि तान्येव तान्यक्षरमितानि च । अस्थ्यादिस्थितरूपाणि तान्युपास्य विमुच्यते" इति च ।

तस्यैतस्याऽत्मनः तस्य शरीराख्यस्याऽत्मनो यै[2] आदानादिकर्ता तस्य परमात्मन एतस्य । अस्थ्नां मज्ज्ञां पर्वणां च मिळितानाम[3]पि विंशोत्तरशतत्वोक्तेरपि[4] तत्रस्थविष्णुरूपाण्येवोच्यन्त इति सिद्धम् । अस्थ्यादीन्येव चेदशीत्युत्तरसहस्राणि सन्ति हि । षणष्णुरित्येतानि विष्णुनामगतान्यूष्माक्षरसन्धिनामकानि तद्गतभगवद्रूपाणि मुख्यतस्तन्नामकानि ।

"अहार्यत्वादहर्नामा रात्रिनामा रतिप्रदः । सन्धानात् सन्धिनामाऽसौ स्वयं नारायणः प्रभुः । सन्ध्यूष्माक्षरगाण्यस्य विष्णो रूपाणि सर्वशः । सन्ध्यारात्रिदिवास्थानि साशीतिकसहस्रकम् । तान्येवास्थिषु मज्जासु पर्वस्वपि च सर्वशः । परज्ञानात्तु पर्वाणि विष्णो रूपाणि तानि हि । आस्थाना[5]न्मदनाच्चैव ह्यस्थिमज्जाभिधानि च । व्यक्तिर्मज्जासु-तस्यैव प्राणो मज्जासु हि स्थितः[6] । मज्जैव रेतो भवति रेतसिस्थो विशेषतः । प्राणस्तेन हि तद्रेतो युक्तं प्राणेन सर्वदा । यदि प्राणो न तद्रेतो न गर्भत्वं व्रजेत् क्वचित् । विशेषप्राणसम्बन्धवर्जितान्यत एव हि । न मांसादीनि गर्भत्वं यान्त्यतः स हि रेतसि । विशेषेण

---

१ "चेष्टकानि" इति प्र. पाठः। मूलपाठे इष्टकासु च इति च्छेदः। अहःशब्देन यज्ञोऽपि विवक्षित इति वक्ष्यति हि ।

२ "य आत्मा आदानादिकर्ता" ३ "मिलितानामपि" ४ "सप्तशतत्वोक्तेस्तत्स्थ–" ५ "अस्थानात्"

६ "संस्थितः" इति प्र. पाठः ।

सम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा स य एवमेत-मक्षरसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति ॥८॥

॥*॥ इति द्वितीयं ब्राह्मणम् ॥*॥

चत्वारः पुरुषा इति बाध्वः शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति शरीरपुरुष इति ॥१॥ यमवोचाम स एवायं दैहिक आत्मा तस्य योऽयमशरीरः प्रज्ञात्मा स रसश्छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्यैतस्याकारो रसो वेदपुरुष इति यमवोचाम येन वेदान् वेद ॥२॥ ऋग्वेदं यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मा रसस्तस्माद् ब्रह्माणं ब्रह्मिष्ठं कुर्वीत ॥३॥ यो यज्ञस्योल्बणं पश्ये-न्महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्याभावयन्न-न्यानि तस्यैतस्यासावादित्यो रसः ॥४॥ स यश्चायमशरीरः प्रज्ञात्मा यश्चासा-

---

स्थितः प्राणः प्राणे चैव विशेषतः। स्थितो नारायणो देवस्तस्मान्मज्जासु च स्थितः" इति च।

मज्जास्वधिकसन्निधानज्ञापनार्थमिदं वचनम्। अशीत्युत्तरसाहस्र[1]वर्णानामभावाच्च तत्स्थविष्णु-रूपाण्येव तत्सङ्ख्यानीति सिद्धम्। अर्के निलीनत्वेनादृश्यत्वेन स्थिता भगवत्प्रादुर्भावा अर्कलिनः। त एव शरीरे स्थित्वा सहस्रं बृहतीः सम्पादयन्ति। वाक्प्रेरकत्वाद् विष्णुनामार्थ-वत्त्वादेव च बृहतीसहस्रस्य तद्देवताश्चैतान्येवाशीत्युत्तरसहस्ररूपाणि। एतान्येवाहःप्रवर्तकानि च। अहःशब्देन यज्ञो दिवसश्चोभावप्यभिप्रेतौ।

"यज्ञानां दिवसानां च साशीतिकसहस्रकैः। विष्णुः प्रवर्तको रूपैर्बृहत्युक्थस्य चाञ्जसा। बृहत्युक्थेन वाच्यानि रूपाण्येतान्यधीशितुः" इति च॥ * ॥

"संसारबाधितैः प्राप्यो बाध्वो वायुरुदाहृतः। स हि मोक्षप्रदो विष्णोराज्ञया स उवाच ह। सर्वदेहाभिमानी तु शरीरपुरुषः शिवः। सर्ववर्णाभिमानी च शेषोऽसौ च्छान्दसः पुमान्। सर्ववेदाभिमान्येव गरुडो वेदपूरुषः। संवत्सराभिमानी तु ब्रह्मैव हि महापुमान्। सारः शिवस्यानिरुद्धनामा देहस्थितो हरिः। अ इत्याक्रियते यस्माद् वासुदेवो ह्यकारकः। शेषस्य सारः स विभुर्ब्रह्माख्यो ज्ञानबृंहणात्। सङ्कर्षणाख्यस्तु हरिः सारः स गरुडस्य च। ब्रह्मर्त्विक्संस्थितश्चासौ तस्माद् ब्रह्मिष्ठमेव हि। कुर्याद् ब्रह्मर्त्विजं तस्मिन् विशेषेण स्थितो हरिः। ब्रह्मणः सारभूतस्तु प्रद्युम्नो भगवान् हरिः। स एवाऽदित्यसंस्थश्च स ह्यादिर्जगतो विभुः।

---

१ "सहस्रवर्णानाम्" इति प्र. पाठः।

वादित्य एकमेतदिति विद्यात् तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति ॥५॥ तदप्येतदृषिणोक्तं चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ॥६॥ आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेत्येतामनुविधां संहितां सन्धीयमानां मन्य इति बाध्व एतां ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते च्छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते ॥७॥ स एष संवत्सरसम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा स य एवमेतं संवत्सरसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति ॥८॥*॥ इति तृतीयं ब्राह्मणम् ॥*॥

दुग्धदोहा अस्य वेदा भवन्ति न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्था-
6 नमिति तदप्येतदृषिणोक्तम् ॥१॥ यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति नहि प्र वेद सुकृतस्य पन्थामिति ॥२॥ न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत् तदुक्तं भवति ॥३॥

---

ततश्च सर्वभूतेषु जीवानां विनियामकः। स एवाऽदित्यगो विष्णुर्यः प्रद्युम्नाभिधो हरिः। स एव सर्वदेहेषु चानिरुद्धतनुः स्थितः। सङ्कर्षणो वासुदेव इत्येकः स चतुर्विधः। प्रतिपूरुषमेतस्मात् स्थितो विष्णुर्नियामकः। आदित्यादिषु च स्थित्वा द्योतकोऽसौ प्रतिप्रति। स चेतनतमत्वाद्धि चित्रमित्यभिधीयते। मुख्यत्वात् सर्वदेवानामनादीशितृत्वतः। कर्तृत्वादप्यनीकं स उदैत् सूर्यस्थितो हरिः। ज्ञानदत्वाच्च देवानां चक्षुरेनेन दर्शनात्। आपूरयन्[1] सर्वलोकान् प्रकाशेन जनार्दनः। आदानात् सर्वजीवानामचृत्वात् प्रळयेऽपिच[2]। आत्मेत्युक्तः स भगवान् जगतः स्थावरस्य च। एवं चतुर्विधो विष्णुः संहितादेवता यदा। ज्ञायते पूर्ववर्णस्य रूपं नारायणाभिधम्। प्रादुर्भावाः समस्ताश्च चरमार्णस्य देवताः। तदा तु संहितां सम्यङ् मन्येऽहं सन्धितामिति। आह वायुरिमं विष्णुं बृहदुकथस्य[3] देवताम्। महाव्रताख्य[4]स्तोत्रस्य चेष्टकानां च देवताम्। एतमेवाखिलजगद्व्याप्तं पूर्णगुणात्मकम्। संवसद्रतिदातृत्वाद् ब्रह्मा संवत्सराभिधः। नियामकः स जीवानां सर्वेषां प्रभुरीश्वरः। अनन्तमूर्तिर्ब्रह्माऽसाव नन्तजगदास्थितः। नियामकस्तस्य विष्णुस्तावद्रूपेषु[5] संस्थितः। तत् संवत्सर-

---

१ "आपूरयत्" २ "प्रालयेऽपिच" ३ "बृहत्युकथस्य" ४ "महाव्रताख्य–" ५ "तावद्रूपेण" इति प्र. पाठाः।

तस्मादेवं विद्वान् न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत् कामं पित्रे वाऽऽचार्याय वा शंसेदात्मन एवास्य तत् कृतं भवति ॥४॥ स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम ॥५॥

---

सम्मानः स विष्णुः परमेश्वरः ॥*॥ य एनं वक्त्ययोग्येभ्यो योऽथवैनं महाब्रते[1] । कर्मण्याचार्यतोऽन्यस्य शंसेत पितृतोऽथवा । महाब्रतेन[2] स्तोत्रेण स्तुवीतैनमथापि वा । महाब्रते[3] चितिं वाऽपि कुर्यान्नास्य फलं श्रुतेः । सुकृतस्य फलं चैव नासौ सम्यगवाप्स्यति । प्रत्यक्षज्ञानिनोऽप्येतदानन्दह्रासकृद् भवेत् । प्रत्यक्षज्ञानिनो मोक्षो न कथञ्चिद्धि हीयते । आचार्यमेव तं विद्याद् गुणैर्यः स्वात्मनोऽधिकः । गुणाधिकस्य तेनैव शंसनादि न दुष्यति । अयोग्यस्योपदेशे तु कृते हौत्रादिकेऽपिवा । प्रायश्चित्तार्थमेतत्तु शंसीत शतवारकम् । अन्यथा मानुषेष्वेव जायते न दिवं व्रजेत् । योग्या अस्यास्तु[4] विद्याया देवा ऋषय एव च । एकदेशज्ञानयोग्या मानुषा उत्तमा यदि । कर्मसञ्चयवेत्तारं त्यजेन्नारायणं हि यः । प्रीत्यैकदेशसंस्थत्वात् सखायमिति चोदितम् । न विद्यायाः फलं तस्य श्रुतं च नरकावहम् । नैव प्राप्नोति सुकृतं सन्त्यागात् परमात्मनः । मुख्यत्यागो हरेरेष यन्नास्तीति वदेदमुम् । तत्समं वाऽधिकं वाऽपि ब्रूयादैक्यमथापि वा ऐश्वर्यादिगुणानां वा ह्रासं नास्तित्वमेव वा । तत्प्रसादं विना मोक्षं ब्रूयाद् वा कस्यचित् क्वचित् । ऐक्यं वा ब्रह्मशर्वादेर्मुक्तावैक्यमथापि वा । व्यत्यासं वाऽवताराणां[5] जीवाभेदममुष्य वा । भेदज्ञानं तद्गुणानां तेन वाऽथ मिथोऽपिवा । तथैव तत्क्रियाणां च तद्रूपाणामथापि वा । असाम्यदर्शनं वाऽपि तद्रूपाणां[6] परस्परम् । देहदेहिविभेदं च तस्मिन्नवयवेषु वा । परस्परं भेददृष्टिं तेन वा कुत्रचित् क्वचित् । दोषसंसर्गमस्यापि स्वतः परत एव वा । अज्ञानतो ज्ञानतो वा निर्देहत्वममुष्य च । तद्देहस्य प्राकृतत्वमचिदानन्ददेहताम् । प्रादुर्भावेष्वपि विभोर्देहत्यागोद्भवादिकम् । अज्ञानदुःखासामर्थ्यपारवश्यादिकं तथा । अतद्वशत्वं कस्यापि कदाचित् क्वचिदप्युत । परिमाणं बलादेर्वा तस्य विष्णोर्महात्मनः । भेदाभेददृशिर्वाऽस्य जीवैर्वा स्वगुणादिभिः । तर्कैस्तस्यापलापो वा तत्र रक्तेन चेतसा । त्यागानामेवमुक्तानां तर्काद्यैः साधनं तथा । अचिन्त्यविभवेऽप्यस्मिन्नसम्भवनिरूपणम् । स एष[7] मुख्यतस्त्यागो वासुदेवस्य कीर्तितः । रमाब्रह्मादिकानां च तारतम्यानभिज्ञता । संशयश्चोक्ततत्त्वेषु जगन्मिथ्यात्वदर्शनम् । अस्मृतिर्वासुदेवस्य तद्भक्तानां विनिन्दर्नम्[8] । द्वितीय एष त्यागस्तु विष्णोरेव प्रकीर्तितः । निषिद्धकर्मकरणं विहितस्य च वर्जनम् । त्यागस्तृतीयो हि हरेश्चतुर्थोऽयोग्यपूरुषे । उपदेशः केशवस्य यथाशास्त्रोदितक्रमात् । आचार्यपित्रोरन्यत्र तथैव च महाव्रते[9] । हौत्रौद्गात्रा-

---

१ "चैनं महाव्रते" २ "महाव्रतेन" ३ "महाव्रते" ४ "अस्याश्च" ५ "चावताराणां" ६ "तद्गुणानां" ७ "स एव" ८ "च निन्दनम्" ९ "महाव्रते" इति प्र. पाठाः ।

तौ यत्र विहीयेते चन्द्रमा इवाऽऽदित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठा व्यस्तः पायुः काककुलायगन्धिकमस्य शिरो वायति ॥६॥ सम्परेतोऽस्याऽऽत्मा न चिरमिव जीविष्यतीति विद्यात् स यत् करणीयं मन्येत तत् कुर्वीत ॥७॥ यदन्ति यच्च दूरक इति सप्त जपेदादित् प्रत्नस्य रेतस इत्येका ॥८॥ यत्र ब्रह्मा पवमानेति षळृद्वयं तमसस्परीत्येकाऽथापि यत्र च्छिद्र

---

ध्वर्यवाणि त्याग एवं चतुर्विधः । त्यागद्वयात्तु प्रथमात् प्राप्यतेऽन्धं तमः क्रमात् । तृतीयान्निरयप्राप्तिश्चतुर्थान्न दिवं व्रजेत् । उपदिष्टेऽपि यस्तत्त्वे संशयं कुरुते पुमान् । सोऽन्धं तमो व्रजेदन्यो निरयायैव गच्छति । स एष[1] भगवान् विष्णुरेतैर्दोषैर्विना यदि । ज्ञायते मुक्तिदः साक्षान्नात्र कार्या विचारणा । यदि ज्ञानं नातिपक्वं सरागं च मनो भवेत् । तदा स्वर्गादिलोकाप्तिः संशयश्चेत् क्वचित् क्वचित् । आवृत्तिरेव संसारे यावन्निःसंशयो भवेत् । पुनरावृत्तिहीनं तु तमोऽन्धं मुक्तिरेवच । पूर्वं तु निःसुखं तत्र निर्दुःखं चापरं मतम् । निश्शेषगुणहीनं च पूर्वं निर्दोषकं परम् । विमिश्रा गतयस्त्वन्याः[2] पुनरावृत्तिसंयुताः । असुरा देवता मर्त्या योग्या एतेषु च क्रमात् । न च तेषां सङ्करोऽस्ति यथायोग्या हि तद्गतिः । मानुषेषूत्तमा मुक्तिमधमा निरयं तथा । प्राप्नुवन्ति[3] मनुष्येषु मध्यमाः सृतिभागिनः । नियमोऽयं नान्यथा स्यादच्छिद्रत्वं यदा भवेत् । दोषेऽथवा गुणे वाऽपि तदा दैत्याः सुरा अपि । स्वां स्वां गतिं समायान्ति तावत् संसारभागिनः । अच्छिद्रत्वं नैव सर्वैः कदाचित् प्राप्यते यतः । सृष्टिस्थितिलयादीनां नोच्छेदस्तेन कुत्रचित् । तस्माद् दोषान् प्रहायैव विष्णुं सर्वोत्तमोत्तमम् । जानीयात् तेन मुक्तिः स्यादपरोक्षदृशेरनु । सूर्यमण्डलगो विष्णुर्देहे चक्षुषि संस्थितः । अनिरुद्धश्च हृदये नच भेदोऽनयोः क्वचित् । अन्येषामपि रूपाणामिति विद्याद् विचक्षणः । द्विरूपः स यदा विष्णुरपगच्छति देहतः । तदैव दुर्निमित्तानि जायन्ते नान्यदा क्वचित् । तस्मात् तेषां दर्शने तु कर्तव्यं पारलौकिकम् । सर्वमेव जपेच्चैव यदन्तीत्यादिका ऋचः । ऋग्भिः षड्भिर्वायुरेव पवमानादिनामकः । स्तूयते सोऽङ्गनेतृत्वादग्निरित्यभिधीयते । परस्य ब्रह्मणो विष्णोर्ज्ञापनाख्यप्रसूतिभिः । वायुः पुनाति यल्लोकान् सविता तेन कथ्यते । पवित्रं नाम साक्षात् तत् परं ब्रह्म जनार्दनः । प्रसादयित्वा तं विष्णुं तेन लोकान् पुनात्यसुः । ज्ञानाख्यप्रसवेनापि स्वयं वायुः पुनात्ययम् । प्राणाग्नेरर्चिषो देहे विततास्तेषु केशवः । अर्चिष्मान् विततो नित्यं वायुस्तेन पुनात्यलम्[5] । यत्र ब्रह्मेति षड्भिश्च प्रार्थनीयः स मारुतः । मोचयित्वैव संसाराद् विष्णोर्लोके कृधीति ह[6] । आदित् प्रत्नस्येति विष्णुः

---

१ "स एव" २ "विमिश्रगतयस्त्वन्याः" ३ "आप्नुवन्ति" ४ "यथा भवेत्" ५ "पुनात्ययम्" ६ "कृधीति च" इति प्र. पाठाः ।

इवाऽदित्यो दृश्यते रथनाभिरिवाभिख्यायेत ।।९।। छिद्रां वा च्छायां पश्येत् तद-

स्तुत्यो वैकुण्ठलोकगः । आदित्यमण्डलस्थश्च साक्षान्नारायणः प्रभुः । उद्वयं त्विति मन्त्रेण स्तुत्यो वायोरपीश्वरः। अपमृत्युभयं तस्य यदन्तीत्यृग्जपाद् व्रजेत् । कालमृत्युर्यदि भवेत् तदा[१] जन्मादिकं भयम् । अन्याभिः कर्मतः पूतो यत्र ब्रह्मेति वैष्णवम् । लोकं व्रजेत् तथान्याभ्यां विष्णुर्मोक्षसुखप्रदः । इष्टप्रदानशीलत्वादिन्दुर्वायुः स एव च । सोमः सौम्यस्वरूपत्वात् पवमानश्च पावनात् । विष्णुः पुरातनत्वात्तु प्रत्नो रेतो महारतिः । देवत्रा देव एवासौ सर्वदेवेश्वरो यतः । सूर्यश्च सूरिभिः प्राप्यो नित्यानन्दो रमापतिः । देशतः कालतश्चैव गुणतश्चातिपूर्तितः[२] । अत इत्युच्यते विष्णुः सन्ततो ह्यत उच्यते । तृतीयवर्णोऽतिशये यतस्तेनातिरेव वा । अत इत्युच्यते विष्णुः सम्यक् श्रुत्याद्यशक्यतः । पूर्णत्वाद् भगवान् विष्णुरश्रुतत्वादिनोदितः । अन्तस्थः सर्वजीवानां पूर्णत्वात् पुरुषाभिधः । समः स सर्वरूपेषु सर्वजीवनियामकः । इति विद्यात् परं विष्णुं मुच्यते तेन संसृतेः" इत्यादि च ॥*॥

शरीरपुरुषादीनां प्राप्यत्वात् तैरुपास्यत्वात्[३] तेषां नियामकत्वेन तेभ्योऽप्यत्युत्तमत्वेन[४] तेषु स्थितत्वाच्च तेषां सार इत्युच्यते भगवान् । यदीं एव । अलकं अरकम् । यत् किञ्चिच्छृणोति तत् सर्वमतिरूपान्धन्तमः[५]प्राप्तिकारणमेव तस्य भवति । तत्र हि सर्वरत्यभावो रतिविरुद्धदुःखं च पूर्णम् । परस्मै शंसनमात्रादरतिरेवेत्यतः प्रस्तुते चतुर्थत्यागे न तस्य वाच्यपि भागोऽस्ति, नहि प्र वेद सुकृतस्य पन्थामिति दोषद्वयमेवेत्यवधारयति— "न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत् तदुक्तं भवति" इति । अलकं शृणोतीति त्यागद्वयस्य मुख्यतः । तृतीयस्यापि नरकं शृणोतीति किञ्चिद् भवति । तौ यदाऽस्माच्छरीराद् विहीयेते तदेव तानि[६] निमित्तानि पश्यतीति[७] नियमः । नतु[८] तदा पश्यत्येवेति । वासेन रमयतीति वासरं विष्णुज्योतिः[९] ।

"यत्र ब्रह्मा वेदवाक्यं व्याचक्षाणो मखैर्यजन् । सोमेन च सुतेनेशमास्ते लोके हरेर्हि सः" इति स्कान्दे ।

ग्राव्णा[१०] सोमविषये सोमेनेष्ट्वा महीयते तेनैव विष्णुप्रीत्या स्वस्याऽनन्दं जनयन् । स्वरानन्दरूपो विष्णुः । दिवो देव्या अवरोधनं तस्याः परिवारभूताः सर्वदेव्यः । द्यौर्नाम वायुपत्नी । "अजनयो मरुतो वक्षणाभ्यो दिव आवक्षणाभ्यः" इत्यादेः । यह्वतीः स्यन्दमानाः ।

"सर्वेष्टद जगत्प्राण मामादाय परिस्रव । यत्रासौ भगवान् विष्णुस्त्वं हि मोक्षप्रदः सदा" इति च । "इन्दुरिष्टप्रदत्वाद् यो वायुरादाय गच्छति । इन्द्रनाम्नः केशवस्य समीपं मुक्तमञ्जसा" इति च । "अनन्यहेतुकं साक्षाद् भगवद्भक्तिरूपकम् । सुखमानन्द इत्युक्तो मोदो भोगनिमित्तकः । प्रमोदस्तद्विशेषोत्थो मुक्तामात्यल्पभोगतः" इत्यृग्वेदसंहितायाम् ।

१ "तथा" २ "गुणतश्चापि पूर्तितः" ३ "तदुपास्यत्वात्" ४ "तेभ्योऽप्युत्तमत्वेन" ५ "अन्धतमः" ६ "तदेवैतानि" ७ "पश्यन्तीति" ८ "नच" ९ "विष्णुर्ज्योतिः" १० "ग्राव्णा" इति प्र. पाठाः ।

प्येवमेव विद्यादथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽऽशिरसं वाऽऽत्मानं पश्येद् विपर्यस्ते वा कन्याके जिह्मे नवा दृश्येयातां तदप्येवमेव विद्यादथाप्यपिधायाक्षिणी उपेक्षेत तद् यथा बटरकाणि सम्पतन्तीव दृश्यन्ते ॥१०॥ तानि यदा न पश्येत् तदप्येवमेव विद्यादथाप्यपिधाय कर्णावुपशृणुयात् स एषोऽग्नेरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा न शृणुयात् तदप्येवमेव विद्यादथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा ॥११॥ मेघे वा विद्युतं पश्येन्मेघे वा विद्युतं न पश्येन्महामेघे वा मरीचीरिव पश्येत तदप्येवमेव विद्यादथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यादिति प्रत्यक्षदर्शनानि अथ स्वप्नाः ॥१२॥ पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वाऽपगिरति मध्वश्नाति बिसानि भक्षयति पुण्डरीकं धारयति ॥१३॥ खरैर्वराहैर्युक्तैर्याति कृष्णां धेनुं कृष्णवत्सां

---

तमसः सकाशात् उद्गता वयमुत्तरं सर्वोत्तमं विष्णवाख्यं ज्योतिः परिपश्यन्तस्तमेव देवत्रा देवविषयेऽपि देवमगन्म[1]। तदेव ज्योतिष्ट्वेनोत्तरत्वेन च पश्यन्त इति दर्शनेत्थम्भावविधानार्थं[2] पूर्वम्। तथैवासौ भगवानुत्तमज्योतिः[3]। न राजादिष्विवाविद्यमानभक्तिमात्रमिदमिति ज्ञापयितुं "अगन्म ज्योतिरुत्तमम्" इति पुनर्वचनम् ॥*॥

"अर्चिषोंऽशा वर्तुलास्तु नाम्ना बटरकाः[4] स्मृताः" इति शब्दनिर्णये। "बृहत्तरं[5] मधु यदि सहापूपं प्रभक्षयेत्। स्वप्ने तस्याचिरान्मृत्यू रक्ताब्जे वा शिरोधृते" इति ब्रह्माण्डे। "रात्र्यास्तु देवता दुर्गा दुःस्वप्ने सा प्रपूजिता। पायसेन हरेन्मृत्युं रात्रिसूक्तादकालिकम्। यदि कालिकमृत्युः स्यात् पदं सा परमं नयेत्। सहैव विष्णुना भक्तं विष्णोस्तद्वेदिनं तथा। रतिदत्वात् परो विष्णुर्मुख्यतो रात्रिरुच्यते। तदाश्रयत्वाद् दुर्गाऽपि रात्रिरित्यभिधीयते। स्त्रीरूपः स परो विष्णुः पायसेष्टो हि मोक्षदः। तस्मादुभौ सहैवेज्यौ भक्त्या दुःस्वप्नदर्शने। बहुभिर्नयनैर्विष्णुर्बहुधेदं ददर्श ह। आयन् सर्वेषु लोकेषु धृतास्तेनैव हि श्रियः। नीचानुच्चांश्च जीवान् स ब्रह्मादीनुर्वपूरयत्। ज्ञानेन बाधतेऽज्ञानं स्वसारं स्वं तथाऽकरोत्। उषआख्यं शुक्लवर्णं प्रमदारूपमेव तु[6]। तमश्चापकरोत्येव सदा[7] सूर्यादिषु स्थितः। स नः स्वामी यदुदरे यमनाद् यामनामके। आविक्ष्म हि वयं सर्वे वृक्षे यद्वत् पतत्रिणः। श्येनाख्यास्तु सुखीनत्वादा समन्तात् सुरोत्तमाः। पद्वन्तो मानुषाश्चैव पादमात्रप्रयायिनः। ग्रामाख्या बहुलत्वात्तु दैत्या एव प्रकीर्तिताः।

---

१ "देवत्रा देवं देवविषयेऽपि देवमगन्म" २ "दर्शने इत्थम्भावविधानार्थम्" ३ "उत्तमं ज्योतिः" ४ "वटरकाः" ५ "बृहत्तमं" ६ "एव च" ७ "अपाकरोत्येव तदा" इति प्र. पाठाः ।

नलदमाली दक्षिणामुखो व्राजयति ॥१४॥ स यद्येतेषां किञ्चित् पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नीयात् स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः ॥१५॥ श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः सम आत्मेति विद्यात् ॥ १६ ॥ ॥ इति चतुर्थं ब्राह्मणम् ॥ ॥

अथ खल्वियं सर्वस्यै वाच उपनिषत् सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषद इमां त्वेवाऽऽचक्षते ॥१॥ पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वरा अग्ने रूपं स्पर्शा वायोरूष्माण आदित्यस्य स्वरा ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः सामवेदस्य स्वराश्चक्षुषो रूपं स्पर्शाः ॥२॥ श्रोत्रस्योष्माणो मनसः स्वराः प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः ॥३॥॥ इति पञ्चमं ब्राह्मणम् ॥॥

---

अर्थिनस्तु कृतार्थत्वान्मुक्ता एव श्रुताः श्रुतौ। ऊरीकृतप्रमाणत्वादूर्म्यः स भगवान् हरिः। वृकास्तेनैव निर्याप्या वृकाः क्रूरत्वतोऽसुराः। तत्स्वभावाश्च वृक्याः स्युः स्तेनास्तत्र महासुराः। ब्रह्मस्तेना यतस्ते हि नित्यमैकात्म्यवेदिनः। विष्णुः सुखतरश्चैव भक्तानां भवति प्रभुः। कृष्णं व्यक्तं तमोऽज्ञानमज्ञानां पेशलं हि तत्। तद् यातयत्यृणमिव भगवान् पुरुषोत्तमः। स एव चोषाः कथितः प्रकाशत्वाज्जनार्दनः। जयिनः स्तोममिव च ब्राह्मणाय यथा च गाः। उपाकरं तथा स्तोमं तवाहं तद् वृणीष्व च[1]। द्यौरिति ज्ञानमुद्दिष्टं तद्व्यङ्ग्यत्वाज्जनार्दनः। दुहिता दिव इत्युक्त एवमर्थेन पूज्यते। रात्रिसूक्तेन[2] भगवान् साक्षान्नारायणः प्रभुः। तत्सन्निधानाद् दुर्गाया एषोऽर्थ उपचारतः। एवं स्तुतस्तथैवेष्टो भगवान् मोक्षदो भवेत्। यदन्तीत्याद्यृचः सर्वा अपि दुःस्वप्नदर्शने। जप्या एव विशेषोऽयं होमो दुःस्वप्नदर्शने। परोक्षज्ञानिनो विष्णोरापरोक्ष्यं व्रजेत्[3] त्वरन्। अपरोक्षदृशः प्रीतः सुखाधिक्यं करोत्यजः। मुक्तस्य द्विविधैस्तस्माज्जपो यागश्च[4] सर्वथा। कर्तव्यो न्यासिभी रात्रीसूक्तं जप्यं त्रिशोऽञ्जसा" इत्याद्यैतरेय[5]संहितायाम् ॥*॥

अथ सर्ववाग्विषया विद्योच्यते। विष्णुशब्दार्थत्वात् सर्ववाचाम्। पूर्वोक्ता अपि सर्ववागुपनिषद एव। तथाऽपि मुखत एव[6] सर्ववाग्विषयत्वाद् वक्ष्यमाणामेव सर्वस्यैा[7] वाच उपनिषदिति सर्वे व्याचक्षते[8]।

---

१ "गृणीष्व च" २ "रात्रीसूक्तेन" ३ "व्रजेत्" ४ "योगश्च" ५ "इत्यैतरेय-" ६ मुख्यत एव" ७ "सर्वस्यै" ८ "सर्वेऽप्याचक्षते" इति प्र. पाठाः।

अथ खल्वियं दैवी वीणा भवति तदनुकृतिरसौ मानुषी वीणा भवति ॥१॥
यथाऽस्याः शिर एवममुष्याः शिरो यथाऽस्या उदरमेवममुष्या अम्भणं यथाऽस्यै
जिह्वैवममुष्यै वादनम् ॥२॥ यथाऽस्यास्तन्त्रय एवममुष्या अङ्गुलयो यथाऽस्या
स्वरा एवममुष्याः स्वरा यथाऽस्याः स्पर्शा एवममुष्याः स्पर्शा यथा ह्येवेयं
शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती ॥३॥ यथा ह्येवेयं लोमशेन चर्मणा
पिहिता भवत्येवमसौ लोमशेन चर्मणा पिहिता लोमशेन ह स्मवै चर्मणा पुरा
वीणा अपिदधति स यो हैतां दैवीं वीणां वेद ॥४॥ श्रुतवदनो भवति भूमिप्राऽस्य
कीर्तिर्भवति यत्र क्व चाऽर्या वाचो भाषन्ते विदुरेनं तत्राथातो वाग् रसो
यस्यां संसद्यधीयानो वा भाषमणो वा न विरुरुचुषेत ॥५॥ तत्रैतामृचं जपेत्
ओष्ठा पिधाना न कुली दन्तैः परि वृता पविः ॥६॥ सर्वस्यै वाच ईशाना
चारु मामिह वादयेत् इति वाग्रसः ॥७॥*॥ इति षष्ठं ब्राह्मणम् ॥*॥
अथ हास्मा एतत् कृष्णहारीतो वाग्ब्राह्मणमिवोपोदाहरति ॥१॥ प्रजापतिः प्रजाः
सृष्ट्वा व्यस्रंसत संवत्सरः स च्छन्दोभिरात्मानं समदधात् यच्छन्दोभिरात्मानं

---

"पृथिव्यादिस्थितो विष्णुः पृथिव्याद्यभिधानवान्। स्पर्शादीनां देवताऽसौ क्रमेणैव प्रकीर्तितः ॥ * ॥ तस्य विष्णोरयं देहो वीणा साक्षात् प्रकीर्तिता। दैवी[1] वीणा ततः सेयं लोकसिद्धा तु मानुषी। ब्रह्मादिदेहान् यो वेद विष्णोर्वीणेति भक्तितः। विद्यापूर्णमुखः स स्याद् भूमिपूरितकीर्तिमान्। विद्याधिक्यार्थमेवैतां वाक्सारामप्यृचं जपेत्। ध्यात्वा नारायणं देवं स्त्रीरूपं वाचि संस्थितम्। ओष्ठा पिधानेत्येषा ह्यृक् सारो वाचः प्रकीर्तितः। विष्णोर्हि वाचि संस्थस्यैवोष्ठावेतौ पिधानवत्। कुलीति चोक्तो भगवान् प्रलीनाशेषकुत्सितः। पाति सर्वं विशिष्टश्च सर्वस्मादित्यतः पविः। सर्ववागीश्वरो विष्णुः स्त्रीरूपो मां सुवादयेत्" इति च।

नेत्युपमार्थे[2]। ओष्ठावपिधानवदस्येति। नच विष्णोरन्या सर्वस्या वाच ईशाना। स हि मुख्यतः सर्वेश्वरः। तस्यैव प्रस्तुतत्वाद् वक्ष्यमाणत्वाच्च।

"श्रियःपतिर्यज्ञपतिर्जगत्पतिर्गिराम्पतिर्लोकपतिर्धरापतिः" इति च भागवते[3]।

"यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ्न वेद" इत्यादिश्रुतिश्च।

स्त्रीलिङ्गत्वं देवतेत्यादिवदपि युज्यते। स्त्रीरूपत्वाच्च ॥ * ॥ संवत्सर इति विशेषणाद् विरिञ्च एवात्र प्रजापतिः।

---

१ मूलकोशेषु बहुशः "देवी वीणा" इत्येव पाठः। इदमभ्यूह्यते यदैकारस्य शृङ्गं स्खलितं सम्भाव्यतयेति।
२ "नेत्युपमानार्थम्" ३ "इति भागवते" इति प्र. पाठः।

समदधात् तस्मात् संहिता ॥२॥ तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा स यो हैतौ णकारषकारावनुसंहितमृचो वेद ॥३॥ सबलां सप्राणां संहितां वेदाऽयुष्यमिति विद्यात् स यदि विचिकित्सेत् सणकारं ब्रवाणी३ँ ॥४॥ अणकारा३ँ इति सणकारमेव ब्रूयात् सषकारं ब्रवाणी३ँ अषकारा३ँ इति ॥५॥ सषकारमेव ब्रूयात् ते यद् वयमनुसंहितमृचोऽधीमहे ॥६॥ यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्ताविति ह स्माऽह ह्रस्वो माण्डूकेयोऽथ यद् वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्ताविति ह स्माऽह स्थविरः शाकल्य एतद्ध स्मवै तद् विद्वांस अहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे ॥७॥ वाचि हि प्राणं

---

"ब्रह्मा विश्वः कतमः स्वयम्भुः[1] प्रजापतिः संवत्सरः" इत्यादिश्रुतेः। "श्रान्तो ब्रह्मा सर्ववेदैः स्तुत्वा नारायणं प्रभुम्। तेनैव सम्यक् सन्धाय दार्ढ्यं देहस्य सोऽकरोत्। सन्धानात् संहितेत्युक्तो विष्णुरेव सनातनः। विष्णुनाम्नि णशब्देन विष्णोर्बलमुदीर्यते। ण इत्याक्रियमाणत्वाण्णकारोऽस्य बलं मतम्। विष्णुनाम्नि षकारेण रमाब्रह्मेशपूर्विणः। प्रणेतृताऽखिलस्यैव विष्णोरुक्ताऽऽत्मता तथा[2]। आततत्वं सर्वगुणैर्देशतः कालतस्तथा। आत्मशब्दोदितं तच्च षशब्देनाभिधीयते। ष इत्याक्रियमाणत्वं प्रणेतृत्वं च पूर्णता। विष्णोः षकार इत्युक्ता वीत्युक्तस्य विशिष्टता। अन्त्यस्थित उकारस्तु ताच्छील्यं हि[3] हरेर्वदेत्। एवं विशिष्टप्राणत्वमाततत्वं च सर्वतः। विशिष्टं च बलं विष्णोः सर्वस्माच्छीलमित्यपि। उदितं विष्णुशब्देन तस्मादृक्संहितामनु। वर्णद्वयसमायोगे ष्णुशब्दस्यार्थमेव तु। विष्णोः प्राणत्वमात्मत्वं बलं चैवात्र वेत्ति यः। स एव विष्णोर्बलवित् तथा प्राणत्वविद् भवेत्। स एव मुक्तः संसारान्नित्यायुष्मान् भविष्यति। संहितासहितत्वेन यदृचोऽधीमहे वयम्। वेदानन्यान् पुराणं वा तेन विष्णुपदोदितः। अवाप्तो भगवान् स्यान्नस्तन्नामार्था यतोऽखिलाः। इत्याहुर् ऋषयः सर्वे किमन्याध्ययनाद् भवेत्। यश्चैवेत्यृषयोऽप्यन्ये कावषेया वदन्ति हि। मौनेन विष्णुशब्दार्थं ध्यायन्तो वाचमेव वा। जुहुमो विष्णुनामाख्यं[4] जपन्तो मन्त्रमेव वा। नमस्कारसमायुक्तं जुहुमः प्राणमत्र हि। किमन्यैर्बहुभिः कार्यैरेतस्यैवाधिकत्वतः। एतदर्थानुसन्धानपूर्वं वेदानथापि वा। अधीमहे यजामो वा नान्यथा तु कथञ्चन। एष एव हि सर्वेषां वेदानामर्थ ईरितः। विष्णुनामोदितो योऽर्थस्तद्व्याख्याऽन्यद् वचोऽखिलम्। एवं विशिष्टप्राणात्मबलाद्यखिलसद्गुणैः। पूर्णस्वभावः सर्वेषां

---

१ "स्वयम्भूः" २ "तथाऽऽत्मता" ३ "ताच्छील्यादि" ४ "विष्णुनामाख्यां" इति प्र. पाठाः।

जुहुमः । प्राणे वाचं यो ह्येव प्रभवः स एवाप्ययस्ता एताः संहिता नानन्ते-वासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्र इत्याचार्या आचार्याः ॥८॥*॥ इति सप्तमं ब्राह्मणम् ॥*॥

इति श्रीमदैतरेयोपनिषदि द्वितीयप्रघट्टकेऽष्टमोऽध्याय ः

इति द्वितीयः प्रघट्टकः समाप्तः

---

वचसामर्थ ईरितः । संहिताख्यानि विष्णोस्तु रूपाण्येतानि सर्वशः । अन्यविद्यास्वशिष्यस्य न ब्रूयात् प्रथमं क्वचित् । व्याख्यानशक्तिहीनाय नैव ब्रूयात् कथञ्चन । वैष्णवाय सुवृत्ताय मेधाश्रद्धायुताय च । गुरोः शुश्रूषकायैव ब्रूयादित्यनुशासनम्" इत्यादि च[1] ।

य एतेन ण इतिशब्देनाऽक्रियमाणं विष्णोः पूर्णबलं षशब्देनाऽक्रियमाणं देशतः कालतो गुणतश्चाऽततत्वं चर्चां सर्वसंहितामनु[2] तदर्थत्वेन वेद, अक्षरद्वयसंयोगरूपया संहितयैतदेव सर्वत्रोच्यत इति स सम्पूर्णबलं सर्वप्रणेतृत्वशक्त्यादियुक्तं च विष्णुं वेद[3] । अथेत्यादिका अपि संहितारूपा एव पदवर्णयोः पृथगनभिव्याहारात् । तस्मात् सर्वशब्दा विष्णुनामव्याख्यानरूपा एव । यद् वयं संहितायुक्तत्वेनर्चोऽधीमहे तेनास्माकं णशब्दषशब्दार्थरूपो विष्णुरुपात्तः । तद्व्याख्यानत्वात् सर्ववाचाम् । वीत्युपसर्गत्वादुकारस्य च ताच्छील्यार्थत्वादुक्तार्थविशेषणरूपत्वेन प्रसिद्धत्वान्न पृथक् तयोर्व्याख्यानमत्र कृतम् । ऋच इति सर्ववाचामुपलक्षणम् । अतः सर्ववेदादिशब्दोदितः सर्वगुणपरिपूर्णो भगवान् नारायण इति सिद्धम् ॥*॥

सर्वैश्च वैदिकपदैरपि लोकशब्दै-
र्मेघाग्निवारिधितलादिरवैश्च सर्वैः[4] ।
एकोऽभिधेयपरिपूर्णगुणः प्रियोऽलं
नारायणो मम सदैव सुतुष्टिमेतु ॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ॥

"हनशब्दो[5] ज्ञानवाची हनुमान् मतिशब्दितः । रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि । भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः । ऋगाद्या इतिहासं च पुराणं पञ्चरात्रकम् । प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः । मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् । मध्व आनन्दतीर्थः स्यात् तृतीया

---

१ "इति च" २ "आततत्वं च सर्वां संहितामनु" ३ "युक्तं विष्णुं वेद" ४ "तलादि-" ५ "हनुशब्दः" इति प्र. पाठाः ।

मारुती तनुः । इति सूक्तगतं रूपत्रयमेतन्महात्मनः । यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः[1]", "साधको रामवाक्यानां तत्समीपगतः सदा । हनूमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः । पृथनाक्षयकारी च द्वितीयस्तु तृतीयकः । पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः । दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते । प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः । आ समन्तात् पतित्वे तु गूढं कलियुगे हरिम् । असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् । वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति । येन विष्णोर्हि वर्णाख्यान् गुणानज्ञासिषुः परान् । ईशानासः सूरयश्च निगूढान् निर्गुणोक्तिभिः । त्रेतायां द्वापरे चैव कलौ चैते क्रमात् त्रयः । एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः । स्वयम्भुब्रह्मसंज्ञोऽसौ परोऽस्मै[2] ब्रह्मणे नमः" इति च ।

पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे ।
अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमहैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके
अष्टमोऽध्यायः

---

## इति श्रीमहैतरेयोपनिषद्भाष्यम्

*

---

१ "प्रसादत इति च" २ "परस्मै" इति प्र. पाठौ ।

# श्रीबृहदारण्यकभाष्यम्

ॐ॥ उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माऽश्वस्य मेध्यस्य द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि

---

भाष्यम्

ॐ॥ प्राणादेरीशितारं परमसुखनिधिं सर्वदोषव्यपेतं
सर्वान्तस्थं सुपूर्णं प्रकृतिपतिमजं सर्वबाह्यं सुनित्यम्।
सर्वज्ञं सर्वशक्तिं सुरमुनिमनुजाद्यैः सदा सेव्यमानं
विष्णुं वन्दे सदाऽहं सकलजगदनाद्यन्तमानन्ददं तम्॥

"यथा तुष्टाव लक्ष्मीशं सर्गादौ चतुराननः। तथा जगाद सूर्याय याज्ञवल्क्याय सोऽब्रवीत्। वाजिरूपेण सूर्येण प्रोक्तं वाजसनेयकम्। कण्वाय याज्ञवल्क्योऽदात् काण्वं तेन प्रकीर्तितम्" इति वाराहे। "अश्वस्वरूपो ब्रह्माऽभूदश्वरूपाज्जनार्दनात्। तत्र सन्निहितो विष्णुरश्वरूपः स्वयं प्रभुः। तयोश्च प्रतिमा मेध्यो यतोऽश्वोऽयं श्रुतौ श्रुतः। सर्वं जगत् तदङ्गेषु तस्मात् सन्निहितं श्रुतम्[1]। तयोरङ्गेष्विदं यस्माज्जगत् सर्वं प्रतिष्ठितम्" इति प्रध्याने। "उच्चैःश्रवाः सन्निहितो मेध्येऽश्वे तत्र केशवः। तस्मिन्निदं जगत् सर्वं ब्रह्मा चोच्चैःश्रवःस्थितः" इति सौपर्णे। "पर्वताः सिकताश्चैव नद्यः कूपाः सरांसि च। हविःकपालयूपाद्या देवता एव सर्वशः। तत्तन्नामैव नामैषां भिन्नानामभिमानतः। नामानि तान्यपि हरेः स हि सर्वगुणाधिकः" इति नारदीये। "उषाः शिरो ब्रह्म नाम तत्त्वमस्यादयोऽखिलाः। सप्तम्यर्थाः समुद्दिष्टाः पञ्चम्यर्थास्तथा श्रुताः। षष्ठ्यर्थाश्च चतुर्थ्यर्थास्तृतीयार्थाश्च सर्वशः। तदैक्यवाचिवच्छब्दा अपि तद्वत्ववाचकाः। ऐक्यार्था नैव ते सर्वे भिन्नरूपा यतः सदा। ईशाङ्गवाचिनो वा स्युस्तेषामेव तदर्थतः। सप्तसु प्रथमा यस्मात् तत्तद्योग्यार्थता भवेत्" इति ब्रह्मतर्के। "अङ्गप्रत्यङ्गशो व्याप्तो विष्णुरेव तुरङ्गमे। अतो विष्ण्वङ्गगं सर्वं मेध्याङ्गस्थमुदीरितम्" इति च।

पुनरप्यश्वस्य मेध्यस्येति वचनं कस्यचिदश्वस्यैवमासीदितीतिहासरूपेण नोच्यते किन्तु सर्वमेध्यानामेवमिति ज्ञापनार्थम्।

---

१ "स्मृतम्" इति प्र. पाठः।

प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसान्यूवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन् पूर्वार्धो निम्लोचन् जघनार्धो यद् विजृम्भते तद् विद्योतते यद् विधूनुते तत् स्तनयति यन्मेहति तद् वर्षति वागेवास्य वाक् ॥१॥ अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः सम्बभूवतुर्हयो भूत्वा देवानवहद् वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान् समुद्र एवास्य बन्धुः समुद्रो योनिः ॥२॥*॥ इति प्रथममश्वब्राह्मणम् ॥*॥

---

"सर्वव्यक्तिष्वपि व्याप्त्यै[२] तात्पर्याधिक्यवित्तये। प्रतीतानुपपत्तेरप्याभासत्वविवक्षया। पुनर्वचनमुद्दिष्टं शतशोऽपि पृथक् पृथक्" इति च। "विष्णोः पुरीषस्थानीया काठिन्यात् पृथिवी श्रुता। तत्स्थत्वात् सिकताः सर्वा ऊवध्यस्थाः[३] प्रकीर्तिताः। उर्व्यास्तु पादगत्वेऽपि नोवध्यत्वं विरुध्यते। यतस्तदभिमानिन्यो देवता अनुकीर्तिताः। तासां च बहुरूपत्वादैश्वर्याच्च परेशितुः" इति च। "अवान्तरदिशो विष्णोरस्थिपुच्छान्युदाहृताः। पूर्वपश्चार्धभेदेन दिशः पार्श्वे प्रकीर्तिते। शिरश्च पादमूलानि पुच्छं षडृतवः स्मृताः। संवत्सराभिमानी च ब्रह्मा सर्वशरीरगः। क्लोमानश्च यकृच्चैव मांसौ गिर्यभिमानिनः। आन्त्रेषु नद्यः सर्वाश्च सोऽयं विष्णुः सनातनः" इति च। "नभोभिमानी विघ्नेशो विष्णोर्मांसाश्रितः सदा। अन्तरिक्षाभिमानी तु[४] तत्सूनुरुदरे स्थितः" इति च॥*॥ "अश्वपूर्वापरौ होम्यौ महिमानौ ग्रहौ स्मृतौ। अहोरात्राभिमन्तारौ तयोरप्यभिमानिनौ। कामश्चाथ रतिश्चैव विष्णुब्रह्मशरीरजौ। समुद्रेकात् समुद्रस्तु विष्णुः पूर्वं उदाहृतः। उपचारेण तूद्रेकादपरश्च चतुर्मुखः। स विष्णुर्हयनामा सन् देववाहेषु संस्थितः। वाजिनामा तु गन्धर्वेष्वर्वनामाऽऽसुरेषु च। मानुषेष्वश्वनामाऽसौ तद्बन्धुः स्वयमेव सः। स्वस्मादेवोत्थितिस्तस्य[६] रूपभेदो न तस्य च। ऐश्वर्यात् स तथाऽपीशो व्यक्तिभावं गमिष्यति। हत्वा याति यतः शत्रून् हयस्तस्माद्धरिः[७] स्मृतः। सर्वदा युद्धकर्तृत्वाद् वाजी चापि प्रकीर्तितः। अर्वाऽतिगमनादुक्त आशुत्वादश्व उच्यते" इति वैहायसे।

तेषां तेषां वाहनेषु स्थित्वा तत्तत्कर्मकर्तृत्वात् तत्तन्नामा।

---

१ "मांसान्युवध्यं" इति प्रचलितः श्रुतिपाठः प्रामादिकः। सर्वत्र वेदेषु वैदिकेषु कोशेषु च ऊवध्यमिति दीर्घादिरेव पाठात्। केचित्तु ऊवध्यमिति बमध्यमिच्छन्ति। परन्तु न क्वापि ह्रस्वादिता। २ "सर्वव्यक्तिष्वभिव्याप्त्यै" ३ "उवध्यस्थाः" ४ "अन्तरिक्षाभिमानी च" ५ "मनुष्येषु" ६ "तस्मादेवोत्थितिः" ७ हरिस्तस्माद्धयः" इति प्र. पाठाः।

नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनाया हि मृत्युस्तन्मनोऽकुरुत आत्मन्वी स्यामिति सोऽर्चन्नचरत् तस्यार्चत आपोऽजायन्तार्चतो हवै मे कमभूदिति तदेवार्कस्यार्कत्वं कं हवा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥१॥ आपो वा अर्कस्तद् यदपां शर आसीत् तत् समहन्यत सा पृथिव्यभवत् तस्यामश्राम्यत् तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तताग्निः ॥२॥ स त्रेधाऽऽत्मानं व्यकुरुताऽदित्यं तृतीयं वायुं तृतीयं स एष प्राणस्त्रेधा विहितस्तस्य प्राची दिक् शिरोऽसौ चासौ चेर्म्यावथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥३॥ सोऽकामयत द्वितीयो म

---

"पतन्ति नियतं हन्तुं देवाश्वाः शत्रुमूर्धसु । वेगाधिका आसुराश्वा वेगमात्रं नृवाहने" इति स्कान्दे । "गन्धर्वास्तु सदा युद्धरता देवानुगा यतः । तद्शक्तौ तु देवानां युद्धं ते स्वामिनो यतः । केचिद् गानरता नित्यं गन्धर्वा नर्तकाः परे । केचिद् वाद्यरता नित्यं चारणा देवचारकाः" इति च ॥*॥ अश्वब्राह्मणम् ॥*॥ "सर्वसंहारकं विष्णुं देवीं जीवांस्तथैव च । कालं त्रिगुणसाम्यं च कर्माणि प्राणमिन्द्रियम् । संस्कारं चैव वेदांश्च नर्ते किञ्चिल्लये त्वभूत्" इति ब्रह्मतर्के ।

लयकाले परमात्मनैवाऽवृतमासीत् ।

"अशनं जगदेतद्यन्नयत्यात्मेच्छया हरिः । अशनाया ततः प्रोक्त उदन्या कर्मनायकः" इति ब्राह्मे ।

अन्यत्र नेतृत्वप्रतीतावपि श्रुतिप्रसिद्धेः[1] स एव नेतेत्याह—अशनाया हि मृत्युरिति । तत् तत एव मनोऽकुरुत यतः स्वयमेवाऽसीन्नान्यत् । आत्मवान् स्यामित्यैच्छत् । शरीरवान् स्यामिति । अप्सृष्ट्यर्थं मनोऽकुरुत ।

"ऐच्छद् विष्णुरदेहः सन् देहवान्स्यामिति प्रभुः । यतो देह इदं सर्वं तस्य विष्णोरदेहिनः । तद्वशत्वात् स्वयं देवश्चिदानन्दशरीरकः । सोत्मानमर्चन्नचरदप्सृष्ट्यर्थं जनार्दनः । यत् कुर्वन् यत् सृजेदीशस्तद् भवेद्धि तदात्मकम् । अतोऽर्चतो यतो जाता आपोऽतोऽर्चनसाधनाः । अन्यथाकर्तुमीशोऽपि क्रीडया तत्तदात्मकम् । कर्तुं तत्तत्प्रवृत्तिः संस्तत् करोति स्वयं प्रभुः" इति ब्रह्माण्डे ।

मे सर्वाहेयस्य विष्णोः ।

"अस्मच्छब्दगतैर्विष्णुर्वाच्यः सप्तविभक्तिभिः । सर्वाहेयत्वतस्त्वेकः सर्वस्य प्रतियोगितः । युष्मच्छब्दाभिधेयश्च तच्छब्दैश्च परोक्षतः । स एव बहुरूपत्वाद् बहुशब्दा-

---

१ "श्रुतिषु प्रसिद्धेः" इति प्र. पाठः ।

भिधानवान्। जीवे स्थितेन[1] रूपेण द्वन्द्वेनापि द्विधोच्यते। भिन्नोऽपि सर्वजीवेभ्यः सर्ववस्तुभ्य एव च। पूर्णानन्दादिरूपस्य कुतोऽल्पसुखिनैकता" इति ब्रह्मतर्के। "उदकं सुखहेतुत्वात् कमित्येवाभिधीयते। तदेव ह्यर्चतो जातमतोऽर्क इति कीर्त्यते" इति व्यासनिरुक्ते।

अर्चतो जातं सुखसाधनं चेत्यर्क इत्यर्थः। कं सुखमस्मै भवति।

"अपां हि सुखहेतूनां वेद विष्णोर्जनिं हि यः। स मुक्तः सुखभागेव स्यात् विष्णोस्तु प्रसादतः" इति माहात्म्ये ॥*॥

अर्कशब्दस्याऽदित्ये प्रसिद्धत्वादप्छब्दोऽपि तत्रेत्याशङ्कां निवर्तयितुमापो वा अर्क इति पुनर्वचनम्। नाऽदित्येऽप्छब्दः[2] किन्त्वप्स्वेवार्कशब्द इत्यर्थः। शरो मण्डः।

"फेनरूपस्तु यो मण्डो जलस्यासौ[3] सुसंहतः। पृथिवीत्वं समापन्नस्तस्यां शिश्ये जनार्दनः। ततः स चिन्तयामास स्यादग्निरिति वेदराट्। तच्चिन्तनात् समुत्पन्नो वायुरग्न्यभिधानवान्। अग्रजत्वादग्रणीत्वाद् वायोरग्नित्वमिष्यते" इति प्रवृत्ते। "शक्तिविस्रंसने चापि शयने चापि कीर्तितः। श्रमशब्दो हरेर्नैव शक्तिविस्रंसनं क्वचित्। अतो हरेः श्रमो नाम शयनं सम्प्रकीर्तितम्" इति ब्रह्मतर्के।

तस्यामश्राम्यदिति साधिकरणत्वाच्च शयनं युक्तम्। नहि पृथिव्यां श्रमो नामान्तःकरणधर्मो युज्यते। अधिकरणाधिकरणपरम्पराकल्पनं व कष्टकल्पनम्[4]।

"सृष्ट्वा स पृथिवीं विष्णुः शेतेऽनन्तेऽब्धिमध्यगः। तस्यां पृथिव्यां श्वेताख्ये द्वीपे मुक्तरुपासितः"[5] इति विमुक्तिसंहितायाम्[6]। "तत आलोचनायुक्तस्तस्मात् कार्यार्थकामना। ततता तु हरेरुक्ता कुतो दुःखं हरेः प्रभोः" इति ब्रह्मतर्के।

तेजोरसः जगतः सामर्थ्यसारभूतः ॥*॥

"वायुरग्निरिति प्रोक्तो ह्यग्रणीत्वादथाङ्गिनाम्। नेतृत्वाददनाद् वाऽपि[7] तस्य स्रष्टा जनार्दनः। स वायुर्वायुरूपेण जगत् पाति शरीरगः। आदित्यस्थेन रूपेण जगद् याति प्रकाशयन्। अग्निस्थेन तु रूपेण हूयते सर्वयष्टृभिः। आदाय यात्यायुरिति स एवाऽदित्य उच्यते। तत्सम्बन्धात्तु तन्नाम सूर्यस्याग्नेस्तथैव च। स एष कूर्मरूपेण वायुरण्डोदके स्थितः। विष्णुना कूर्मरूपेण धारितोऽनन्तधारकः। अस्य[8] पादा हि चत्वारो ह्यण्डोदे कोणसंस्थिताः। उदरं तु भूमिसंश्लिष्टमतिरिच्य[9] भुवं पुनः। पार्श्वतः

१ "जीवस्थितेन" २ "नाऽदित्येऽर्कशब्दः" ३ "जलस्थोऽसौ" ४ "अधिकरणपरम्पराकल्पनं च क्लिष्टकल्पनम्" ५ "मुक्तैरुपास्यते" ६ "मुक्तिसंहितायाम्" ७ "चापि" ८ "अप्सु" इति प्र. पाठाः। ९ "उरस्तु भूमिसंश्लिष्टमतिरिच्य" इति प्र. पाठः। यद्यपि "इयमुरः" इति उरस एव भूमिसंश्लिष्टत्वं वक्तुमुचितम्। तथापि देहाधस्तनो भाग उदरमित्युच्यते। तत्र ऊर्मावच्छेदेन विशिष्योर इति नाम। तदेतदुच्यते- उदरं भूमिसंश्लिष्टं किन्तूरोवच्छेदेनैव। पार्श्वतः पुच्छतश्चैव पुनरतिरिच्य भुवमिति। एतदेव विवरिष्यते "आकाशमुदरे" इति।

आत्मा जायेतेति स मनसा वाचं मिथुनं समभवदशनायां मृत्युस्तद् यद् रेत आसीत् स संवत्सरोऽभवन्न ह पुरा तत संवत्सर आस तमेतावन्तं कालमबिभर्यावान् संवत्सरस्तमेतावतः कालस्य परस्तादसृजत तं जातमभि व्याददात् स भाणमकरोत् सैव वागभवत्॥४॥ स ऐक्षत यदि ह वाव इममभिमंस्ये कनीयोऽन्नं

---

पुच्छतश्चैव[1] शिरश्चोदकसंस्थितम्। आकाशमुदरे तस्य द्यौः पृष्ठे संस्थिता विभोः। एवं विद्वांस्तु यत्रैति तत्रैव[2] प्रतितिष्ठति" इति प्रभञ्जने।

स्थानेच्छा चेत् तत्रै प्रतितिष्ठति।

"उपास्ते कूर्मरूपं यो वायुं संस्थितिमाप्नुयात्। इच्छया विनिवृत्तिं वा लोकं चाऽवृत्तिवर्जितम्" इत्यध्यात्मे।

"स एष प्राणस्त्रेधा विहितः" इति वचनाच्च वायुः।

"बिभर्त्येण्डं हरिः कूर्मस्त्वण्डे चाप्युदकं महत्। उदके कूर्मरूपस्य वायोः पुच्छं समाश्रितम्[3]। वायोः पुच्छं समाश्रित्य शेषस्तु पृथिवीमिमाम्। बिभर्ति तस्यां च जगदिदं सर्वं प्रतिष्ठितम्" इति वैभवे। "वायोस्तु कूर्मरूपस्य पूर्वतश्चोदके मुखम्। आग्नेय्यैशानिगौ[4] बाहू पादौ निर्ऋतिवायुगौ" इति प्रकृष्टे॥*॥

आत्मा ब्रह्मा मे द्वितीयो जायेतेत्यकामयत। वायुरेव ब्रह्मा भवतीति[5] दर्शयितुं वायोः सृष्टिः प्रथममुक्ता।

"वायुरेव यतो ब्रह्मपदं नियमतो व्रजेत्। सहैव जननेऽप्यस्मात् पूर्वं वायोर्जनिं वदेत्। क्वचित्तु ब्रह्मणः पूर्वं प्राधान्यात् तत्पदस्य च" इति ब्रह्मतर्के। "आत्मा विरिञ्चः सुमनाः सुधौतश्चेति कथ्यते। ब्रह्मा चतुर्मुखश्चेति पूर्वजो यः प्रजापतिः" इति शब्दनिर्णये।

स मनसा स्वेच्छया वाचं श्रियं देवीं मिथुनं समभवत्।

"मम द्वितीयो जायेत ब्रह्मेति भगवान् परः। वेदाभिमानिनीं देवीं श्रियं समभवत् प्रभुः। स्वेच्छयैव यतः शक्तिस्तां विनाऽपि हरेः सदा। ततः संवत्सरो नाम ब्रह्मा समभवत् प्रभोः। तं गर्भमुदरेऽबिभ्रद् यावत् संवत्सरं रमा। तं जातमत्तुं स्वमुखं विदार्य पुरुषोत्तमः। श्रुत्वा रावं पुनस्तस्य व्यदधात् सृष्टये प्रभुः" इति कारणविवेके।

बिन्दुलोपेनाशनाया मृत्युरित्यर्थः। "अशनाया हि मृत्युः" इति ह्युक्तम्[6]। सर्वाशननेतेत्यर्थे बिन्दुः। "आधिक्येऽधिकम्" इति सूत्रात्। सम्यगात्मनो वत्सभूतान् देवादीन् रमयतीति संवत्सरः।

"ब्रह्मणो भाणिति वचो निःसृतं भयतो मुखात्। तस्याभिमानिनी देवी तदैवोत्था च तन्मुखात्[7]। वागीश्वरीति तामाहुर्वाचं चापि सरस्वतीम्" इति भावतत्त्वे।

---

१ "पृष्ठतश्चैव" २ "तत्रैव" ३ "वायुः पुच्छं समाश्रितः" ४ "आग्नेयेशानगौ" ५ "पश्चाद् भवतीति" ६ "इत्युक्तम्" ७ "चतुर्मुखात्" इति प्र. पाठः।

द्वितीयमस्ति ततोऽन्यद् विभक्तं यद् रसयेत् ॥२५॥ यद् वै तन्न वदति वदन् वै तन्न वदति नहि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यद् वदेत् ॥२६॥ यद् वै तन्न शृणोति शृण्वन् वै तन्न शृणोति नहि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यच्छृणुयात् ॥२७॥ यद् वै तन्न मनुते मन्वानो वै तन्न मनुते नहि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यन्मन्वीत ॥२८॥ यद् वै तन्न स्पृशति स्पृशन् वै तन्न स्पृशति नहि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् स्पृशेत् ॥२९॥ यद् वै तन्न विजानाति विजानन् वै तन्न विजानाति नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यद् विजानीयात् ॥३०॥ यत्र वा अन्यदिव

---

यत्किञ्चिद् वस्तु भगवता न दृष्टं नास्त्येव[१]। विद्यमानं सर्वं पश्यत्येव। नहि द्वितीयो द्रष्टा यो विभक्तत्वेन जगत् पश्यति। तद्विरोधेन पश्यत्यभ्रान्तः। तद्द्रष्टादन्यद् वा। "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतेः।

"यत्तद् दृष्टं भगवता तदेवास्ति नचापरम्। नह्यन्यो विद्यते द्रष्टा यः पश्येत् तदद-र्शितम्। ब्रह्मादिरपि यो द्रष्टा पश्येत् तस्य प्रसादतः। तद्दृष्टं कुतः पश्येदतः को वा विरोधतः" इति च।

यद्वतारादिकं द्वैतत्वेन न पश्यति नतु तत् ततो द्वितीयम्। नित्यज्ञानत्वाद् भ्रमाभावात्। यद् विभक्तत्वेन विष्णुः पश्यति तत् ततोऽन्यदस्ति चेति च। यस्माद् विष्णुर्विश्वं विभक्तत्वेनैव पश्यति तस्मात् तदन्यदस्त्येव। नच जगदभावोऽत्रोच्यते। अन्यद् विभक्तमिति विशेषणवैयर्थ्यात्। नच भ्रान्तिकल्पितं जगदित्यत्र किञ्चिन्मानम्। "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इत्यादि-निन्दनाच्च ॥*॥ द्रष्ट्रन्तरनिषेधेन तस्यैव सर्वद्रष्ट्रत्वमेव च "यत्र वा अन्यदिव स्यात्" इत्यादिनो पदर्शयते। अन्यथा "अन्योऽन्यत् पश्येत्" इत्यादिकमनर्थकम्। नह्येकस्यान्यत्वेऽन्यस्यानन्यत्वं भवति। अतो द्वितीयान्यशब्दो[२] व्यर्थ एव स्यात्। नच तत्पक्षेऽन्यत्वादिकमात्मनो विद्यते[३]। तस्माद् यत्र किञ्चिदपि स्वातन्त्र्यमन्यस्य भवति तत्रैव भगवतोऽन्यः पुरुषो भगवद्द्रष्टादन्यत् पश्यतीत्यादि युज्यते। तदेव नास्ति। अतः[४] अतो नान्योऽन्यत् पश्येदित्यर्थः। अन्यदिवेतीवशब्दो-ऽल्पस्वातन्त्र्यार्थे। राज्ञः पृथगिव भृत्य इतिवत्।

---

१ "तन्नास्त्येव" २ "द्वितीयोऽन्यशब्दः" ३ "दृश्यत्वादिकमात्मनो विद्यते" इति प्र. पाठाः।
४ "नास्ति स्वतः। अतो नान्योऽन्यत्" इति प्र. पाठः। मूलकोशपाठे तु एकस्मात इत्यस्य तस्मादित्यर्थः। द्वितीयस्य अतोऽन्यद् भगवतोऽन्यदिति।

स्यात् तत्रान्योऽन्यत् पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद् रसयेदन्योऽन्यद् वदेदन्यो-ऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत् स्पृशेदन्योऽन्यद् विजानीयात् ॥३१॥ सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राळिति हैनमनुशशास याज्ञ-वल्क्य एषाऽस्य परमा गतिरेषाऽस्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥३२॥ स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितृणां जितलोकानामानन्दोऽथ ये शतं पितृणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवाना-

---

"उपमार्थे तथाऽल्पत्वेऽपीवशब्दः प्रयुज्यते" इति च शब्दनिर्णये[1]। "स्वरूपभेदे स्वातन्त्र्ये विरोधे च विलक्षणे। अन्यशब्दश्चतुर्ष्वेषु प्रयोक्तव्यो मनीषिभिः" इति च। "अनन्याः सर्व एवैते यौधाः[2] कुन्तीसुतादपि" इति प्रयोगाच्च। "दशरात्रैर्भुक्तमिव न सम्यक् स्वल्पभोजनम्[3]" इति च। "प्रकृतेः पुरुषाणां च नाणुमात्रमपि क्वचित्। स्वातन्त्र्यं विष्णुना सर्वे नियताः सर्वदैव हि। तदृदृष्टं ततः को हि पश्येत् किं वाऽपि तद् भवेत्" इति महामीमांसायाम्। "अभेदेन स्वावतारान् जीवाजीवं तु भेदतः। यदभ्रमो हरिर्वेत्ति स तदन्यच्च तद्द्वयम्" इति च।

अन्यदप्यस्वातन्त्र्येणान्यवत् स्थितं[4] यस्मिन् पक्षेऽस्ति तत्रैवान्यदर्शनादिव्यवहारो युज्यते। सप्तम-रसादिदर्शनाभावादिति च। सर्वेन्द्रियोपभोगोऽपि विष्णोः स्वात्मनि विद्यते। यदि जगदेव न स्यात् तदा कथं मोक्षेऽप्यन्यानि भूतानि मात्रामुपजीवन्तीति युज्यते? मोक्षप्रकरणं चैतत्। "स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि" इति भगवद्वचनम् ॥*॥

"यदा हि सलिलत्वेन प्रकृतिर्व्याप्य तिष्ठति। तदा तस्यां परो विष्णुरेको द्रष्टा व्यव-स्थितः। अविरोधादद्वितीय एकोऽसौ समवर्जनात्। बृहज्ज्ञानो ब्रह्मलोकः सदैव पुरुषोत्तमः। सर्वगत्वादस्य गतिः परा विष्णोः सदैव हि। पूर्णैश्वर्यादस्य सम्पत् परमा सम्प्रकीर्तिता। सार्वज्ञ्यात् परमो लोको विष्णोरानन्द एवच। स्वातन्त्र्यात् परमो ज्ञेयः स हि पूर्णः सदोदितः। प्रतिबिम्बरूपविप्लुट्कांस्तदानन्दस्य चाखिलाः। मुक्ता ब्रह्मादयोऽश्नन्ति तारतम्येन नित्यदा" ॥*॥

सलीलः सलिल इति वा ॥*॥

"अन्येभ्यस्तु विमुक्तेभ्य आनन्दश्चक्रवर्तिनाम्। मुक्तानां हि शतोद्रिक्तः पितॄणां तेभ्य एव च। तेभ्योऽप्यृषीणां मुक्तानां कर्मदेवाभिधायिनाम्। तेभ्यश्च मुक्तदेवानां तेभ्य-

---

१ "इति शब्दनिर्णये" २ "योधाः" ३ "स्वल्पभोजनात्" ४ "अन्यवदवस्थितम्" इति प्र. पाठाः।

मानन्दो ये कर्मणा देवत्वमभि सम्पद्यन्तेऽथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव परम आनन्द एष ब्रह्मलोकः सम्राळिति

---

श्चोमापतेस्तथा। तस्माच्च ब्रह्मणस्त्वेवं मुक्तस्य गरुडादपि। एष एव ततो विष्णुः पूर्णानन्दः प्रकीर्तितः। यस्य ब्रह्माऽपि मुक्तः सन् विप्लुण्मात्रं समश्नुते" इति च॥*॥

राद्धो मुक्तः। मनुष्याणां योग्यतया स्वसमेभ्यः प्रयत्नाधिक्याद्राधिक्यं मुक्तौ प्राप्तुं शक्यत इत्यतः समृद्ध इत्युक्तम्। यावत् साधयितुं शक्यते तावत्साधनैः सम्पूर्णत्वेन मुक्त इत्यर्थः। स्वराष्ट्रे ज्ञानोपदेष्टृत्वान्मुक्तावपि तेषामधिपतिः। ज्ञानपूर्वकत्वेन मनुष्यत्वे दानादिकं कृत्वा तत्फलैरपि भोगैर्मुक्तौ सम्पन्नतमः। "न ह्यस्य कर्म क्षीयते" इति श्रुतेः। अन्यथा राद्ध इति विशेषणं व्यर्थं भवति। "स मनुष्याणां परम आनन्दः" इति स्वरूपानन्दश्चात्रोच्यते। नह्यमुक्तानां स्वरूपानन्दानुभवोऽस्ति[1]। "भुज्यते स्वसुखं मुक्तैराभासोऽन्यैस्ततोऽपरः" इति च। जितलोका इत्यपि मुक्ता एवोच्यन्ते। गन्धर्वलोके गन्धर्वाणां ब्रह्मज्ञाने मुक्तावित्यर्थः। तदा हि ब्रह्मज्ञानं सदोदितमवतिष्ठते। एष ब्रह्मलोकः सम्राळित्यादिषु ज्ञानस्यैव लोकशब्दोदितत्वात्। यश्च श्रोत्रिय इति वचनं तेषामाजानादीनामपि[2] मुक्तानामेवायं नियमेनाऽनन्दशतगुणोद्रेकः; अन्यदा तु कदाचिद् भवति, कदाचिद् व्याकुलतया न भवतीति दर्शयितुम्। चशब्दस्तु श्रोत्रियत्वावृजिनत्वाकामहतत्वानां[3] गुणानां मुक्तौ समुच्चयार्थः। मुक्तस्यैवैते गुणा भवन्तीति मुक्तस्वीकारार्थं य इति विशेषणम्।

"सर्वं श्रुतिफलं मुक्तैः प्राप्यं नान्येन केनचित्। अतस्तु श्रोत्रियो मुक्तो ह्यन्यः श्रोत्रियको भवेत्। अदुःखत्वं च तस्यैव कामैरहतता तथा। यः कामितं न प्राप्नोति स कामहत उच्यते। काम्याप्राप्तेश्च पापाच्च पापात् कामहतः स्मृतः। उभयस्याप्यभावेन मुक्तोऽकामहतो मतः" इति च। "आजानदेवा इन्द्राद्या जातेभ्यस्ते वरा यतः" इति च।

प्रजापतिलोक इत्युक्तेनैव मुक्तप्रजापतिसिद्धावपि मुक्तस्यैव प्रजापतेर्ब्रह्मणश्चायं विशेष इति स्वरूपकथनार्थं यश्च श्रोत्रिय इत्यादि। अनुपचरितश्रोत्रियादित्वमिति ज्ञापयितुमभ्यासः। सर्वेषामपि मुक्तानां नियमेन तदस्तीति ज्ञापयितुं च।

"प्रजास्तु पशुशब्दोक्ताः पशुपस्तु प्रजापतिः" इति च।

अथशब्दादेष ब्रह्मलोक इति विशेषणाच्च द्वितीयब्रह्मलोकशब्देन परब्रह्मैवोच्यते। अन्यथा "एष एव परम आनन्दः" इत्युक्त्वा पुनरेष इति शब्दोऽनर्थकः स्यात्। तस्यैव ब्रह्मलोकशब्देन पूर्वमभ्यासाच्च। नच तैत्तिरीयादिश्रुतिविरोधः। शतशब्दस्यायुते दशलक्षादावपि समत्वात्।

---

१"स्वरूपानन्दाविर्भावोऽस्ति" २"आजानदेवादीनामपि" ३"अकामहतत्वादीनां गुणानाम्" इति प्र.पाठाः।

होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्वेभ्यो मां तेभ्य उदरौत्सीदिति ॥३३॥ स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव ॥३४॥ तद् यथाऽनः सुसमाहितमुत्सर्जद् यायादेवमेवायं शारीर आत्मा प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद् याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥३५॥ स यत्रायमणिमानं न्येति जरया वोपतपता वाऽणिमानं निगच्छति तद् यथाऽऽम्रं वौदुम्बरं वा पिप्पलं वा बन्धनात् प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायं

---

अतश्चक्रवर्तिभ्यो मनुष्यगन्धर्वाः शताधिकाः। देवगन्धर्वा अयुताधिकाः। पितरो दशलक्षाधिका इत्यविरोधः। उत्तमगन्धर्वापेक्षया पितृभ्यो गन्धर्वाणामाधिक्यं च युज्यते। आजानदेवेभ्यो जाता आजानजा इत्यतस्तत्राप्यविरोधः। यत्राऽजानजा इत्येवोपरि[1] पाठस्तत्राऽजानेभ्यो ब्रह्मादिभ्यो जाता इति भवति। इन्द्रबृहस्पत्यादीनां विशेषस्तु विशेषवचनत्वादत्राप्यङ्गीकर्तव्य एव।

"सामान्यधर्मो बलवान् धर्माद् वैशेषिकाद् यथा। बलवद् विशेषवचनं सामान्यवचनात् तथा" इति च। "नृपा मनुष्यगन्धर्वा देवाश्च पितरस्तथा। देवैः सहितगन्धर्वा ऋषयो देवतास्तथा। इन्द्रो बृहस्पतिश्चैव प्रधानेन्द्रः पुरन्दरः। रुद्रो ब्रह्मेति क्रमशो मुक्ताः शतगुणोत्तराः" इति च। "अतिप्रयत्नतो यावत् प्राप्तुं शक्यं विमुक्तिगम्। सुखाद्यं तस्य सम्प्राप्त्यै ज्ञानश्रेण्यः क्रमात् स्मृताः। एकां श्रेणीं प्रविज्ञाय तदुत्कृष्टां च तद्वराम्। क्रमेणैव विजिज्ञासुर्जनकः पृच्छति स्म ह। पुनःपुनर्विमोक्षाय ब्रूहीत्यद्धा वरात् पुरा" इति च। "रहस्यमस्यायोग्यं च यदि मामेष पृच्छति। दत्तो वरो मयाऽस्येति[2] वक्तव्यं मे भविष्यति। इति भीतोऽभवद् राज्ञो याज्ञवल्क्यः सुमेधया" इति ब्रह्माण्डे।

तेभ्योऽश्वलादिभ्यः[3] ॥*॥

"सर्वदा जीवमादाय नियमाद् विष्णुरेव हि। जाग्रदादिषु संयाति नान्यथा तु कथञ्चन। एवं नियमविज्ञप्त्यै जीवास्वातन्त्र्यवित्तये। परिवृत्तिमवस्थासु साभ्यासा वक्ति हि श्रुतिः" इति निर्णये।

अतस्तात्पर्यार्थं पुनर्वचनम् ॥*॥ ग्रामादिकमुत्सर्जद् यायात्—

"यथा ग्रामं परित्यज्य यात्यनः पुमधिष्ठितम्। एवं देहं परित्यज्य विष्णुनाऽधिष्ठितः पुमान्" इति च ॥*॥

अणिमानं भगवन्तम्। "स य एषोऽणिमा", "तेजः परस्यां देवतायाम्" इति हि श्रुतिः। उपतपता रोगादिना।

---

१ "इत्युपरि" २ "मया वरोऽस्येति" ३ "तेभ्य आश्वलादिभ्यः" इति प्र. पाठाः।

प्रतियोन्याद्रवति प्राणायैव ॥३६॥ तद् यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवं हैवंविदं सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्माऽयातीदमागच्छतीति ॥३७॥ तद् यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभि समायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभि समायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥३८॥

॥*॥ इति तृतीयं ज्योतिर्ब्राह्मणम् ॥*॥

स यत्रायमात्मा बल्यं न्येत्य संमोहमिव न्येत्यथैनमेते प्राणा अभि समायन्ति स

---

"आम्रं बाल्येऽपि पतति परिणामे ह्युदुम्बरम् । सम्यक् पाके तथाऽश्वत्थफलं[1] जीवमृतिस्तथा । कलावाम्रोपमा जीवास्त्रेतास्वौदुम्बरोपमाः । कृतेऽश्वत्थसमाश्चैव यान्ति ब्रह्मवशाः सदा" इति पाद्मे । प्राणायैव – "वायुमेवाऽद्रवत्येष जीवो मोक्षाय तत्त्ववित् । तदनुज्ञयैव ज्ञानित्वमतस्तं पुनराव्रजेत् । सर्वेऽपि वायुमासाद्य जायस्व ज्ञानमाप्नुहि । इति तस्य वरादेव जायन्ते ज्ञानिनोऽखिलाः । पुनस्तं प्राप्य मुक्तिं च प्राप्नुयुस्तदनुज्ञया" इति प्रवृत्ते ॥*॥

इदं मुक्तजीवस्वरूपमायाति । अतोऽनेन सहेदं परं ब्रह्माऽयातीति परब्रह्मणः पूजार्थं प्रतिकल्पन्ते । यथा राज्ञो ध्वजादिकं दृष्ट्वाऽयं ध्वज आगच्छति तस्माद् राजाऽऽयातीति पूजां प्रतिकल्पन्ते तद्वत् । अन्यथा "इदं ब्रह्माऽयातीदमागच्छति" इति द्विरुक्तिर्व्यर्था स्यात् । वीप्सात्वे त्वयमायातीत्येकप्रकारेण शब्दाभ्यासः स्यात् ।

"एकप्रकारशब्दानामभ्यासस्त्वादरार्थकः । स्वरवर्णादिमात्रे वाप्यन्यथा चेत् तदाऽपरः । अर्थः स्यादेष नियमो वाक्ये वीप्सापदे तथा । प्रातिस्विकार्थेऽपि भवेदभ्यासे वा तथा स्थिते" इति शब्दनिर्णये ।

नच कुत्रचिदादरार्थे द्विरूपप्रयोगो दृष्टोऽनन्तरितः ।

"यदा मुक्तो व्रजत्यूर्ध्वं तदा तत्सहितो हरिः । नियमाद् दृश्यते देवैरमुक्ते नियमो नतु । यथा ध्वजादिकं दृष्ट्वा पूजां राज्ञः प्रकुर्वते । एवं विमुक्तिगं दृष्ट्वा विष्णोः पूजां प्रकुर्वते" इति तत्त्वनिर्णये ।

तस्मादणिमानं न्येतीत्यादिना जीवगतं ब्रह्म चोच्यते[2] । जीवोपतापादि तु नैव ।

"जीवमादाय गच्छन्तमनुयान्ति दिवौकसः । प्राणाभिमानिनो विष्णुं नृपं परिजना यथा" इति च ॥*॥ "उग्रास्तु श्रेणयः प्रोक्ता यौधाः[3] प्रत्येनसः स्मृताः । ग्रामण्यस्तु चमूपालास्ते सर्वे द्विविधा मताः । राज्ञा सह स्थिताश्चैव तथा जनपदे स्थिताः । ते सर्वेऽपि नियन्तव्याः श्रेणिभिर्द्विविधैः[4] सदा" इति राजनीतौ । "अनुयान्ति शरीरस्था अभियान्ति स्वलोकगाः । मुक्तमादाय गच्छन्तं विष्णुं सर्वे दिवौकसः" इत्यध्यात्मे । ॥*॥ ज्योतिर्ब्राह्मणम् ॥*॥ "सर्वेषां बलकारित्वाद् बल्यो विष्णुः प्रकीर्तितः ।

---

१ "यथाऽश्वत्थं फलम्" २ "ब्रह्मैवोच्यते" ३ "योधाः" ४ "श्रेणीभिर्द्विविधैः" इति प्र. पाठाः ।

एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवति ॥१॥ एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति स विज्ञानमेवान्ववक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ २ ॥ तद् यथा तृणजलूका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्या-

---

तं यदा प्राप्य जीवात्मा मृतेः पूर्वं विमुग्धताम् । याति विष्णुं तदा देवा यान्ति तेजःस्वरूपिणः । तानादाय हरिश्चक्षुःस्थानाद्धृदयमाव्रजेत् । तदा न किञ्चिज्जानाति जीवो ब्रह्म समाश्रितः" इति च ।

एनं बल्यमभि समायन्ति । पराङ् स्थितश्चाक्षुषो भगवान् प्रत्यक् परावर्तते । "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः" इत्यादिश्रुतेः ॥*॥

"हृदये संस्थितो जीवो विशेषेण हरिस्तथा । चक्षुरादिषु रूपाणि जाग्रत्काले तयोः सदा । बहूनि सन्ति तान्येव यदैकीभावमाप्नुयुः । हृदयस्थेन रूपेण तदा जीवो न किञ्चन । जानातीति विदुः प्राज्ञास्तदा विष्णोः स्वतेजसा । द्योतते हृदयाग्रं च तेन द्वारेण केशवः । निष्क्रामेज्जीवमादाय प्राण एनमनुव्रजेत्[1] । प्राणमन्ये तथा देवा विद्या कर्म च योग्यता" इति महामीमांसायाम् । "कर्माभिमानी गरुडो ब्रह्मा ज्ञानाभिमानवान् । पूर्वप्रज्ञा योग्यता स्याद् रमा तदभिमानिनी । एतेऽपि विष्णुं गच्छन्तमनुयान्ति सदैव हि[2] । वायुर्ज्ञानात्मकश्चैव प्राणात्मक इति द्विधा । अनुयाति हृषीकेशं सर्वैर्देवैः समन्वितः" इति च । "देवलोके चिरं रत्वा यस्तु मुक्तिं व्रजिष्यति । स तु तद्देवताद्वारेणोत्क्रामति न संशयः । विष्णोर्लोकं परं गच्छन्नुत्क्रामेन्मूर्ध्न एव तु । तथैव ब्रह्मणो लोकं सुषुम्नाया विभेदतः" इत्यध्यात्मे ।

सविज्ञानो भवति । जीवेन सहितो भवति । सः विज्ञानं जीवमेवान्ववक्रामति । जीवमारुह्य गच्छति भगवान् । "प्राज्ञेनाऽऽत्मनाऽन्वारूढः" इति ह्युक्तम् । "यो विज्ञाने तिष्ठन्", "य आत्मनि तिष्ठन्" इत्युभयोर्जीवाभिप्रायेण हि पाठः । "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" इति भगवद्वचनम् । "विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र" इति च । एष आत्मा निष्क्रामतीति जीवाङ्गीकारे "शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं

---

१ "अनुव्रजेत्" २ "सदैव तु" इति प्र, पाठौ ।

ऽत्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्याऽत्मानमुपसंहरति ॥ ३ ॥ तद् यथा पेशस्करी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुत एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥४॥ स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्म-

---

रूपं कुरुते" इत्यादिकमयुक्तं स्यात्। नहि जीवः शरीरं निहन्त्यविद्यां[1] गमयति रूपान्तरं वा करोति। नच सर्वमयत्वं जीवस्य। ब्रह्मेति विशेषणाच्च ॥*॥

"यथा तृणजलूकैवं[2] भगवान् पुरुषोत्तमः। जीवस्य सूक्ष्मं रूपं तु[3] प्राप्य स्थूलं परित्यजेत्। इदं शरीरं भूतेषु विलापयति केशवः। अविद्यां चैव जीवस्य गमयेज्ज्ञानसर्जनात् ॥*॥ स्वर्णकारो यथा स्वर्णमलमग्नौ निहत्य च। शुद्धेन तेन चाऽत्मेष्टं कुरुते रूपमञ्जसा। एवं स भगवान् विष्णुर्जीवस्वर्णस्य यन्मलम्। अविद्याकामकर्माद्यमात्माग्नौ नाश्य सर्वकृत्। स्वेच्छया कुरुते रूपं यद् योग्यं तस्य मुक्तिगम्। पितृजीवस्य पित्र्यं स गान्धर्वं तस्य चैव हि। दैवं तु देवजीवस्य प्राजापत्यं प्रजापतेः। ब्रह्मणो ब्राह्ममेवेति नित्यानन्दस्वरूपकम्। न योग्यतां विना क्वापि पूर्वप्रज्ञा श्रुतेः क्वचित्। यदा मुक्तो भवेद् ब्रह्मा तदा ब्रह्मा स मुख्यतः। एवं प्रजापतिश्चैव तथैवान्येऽपि सर्वशः। यथा हि स्वर्णरूप्याद्यं मलहानौ हि तद् भवेत्। पूर्वं तु योग्यतामात्रं द्विजत्वं बालके यथा" इत्यादि च ॥*॥

नह्यमुक्तानां कल्याणतरत्वम्। नच मृगादीनां कल्याणत्वमपि। मरणमात्रं चेदत्रोच्यते तदा कल्याणतरमिति विशेषणं व्यर्थमेव स्यात्[4]। पूर्वोक्तश्रोत्रियावृजिनाकामहतदेवादीनां चात्रोक्तिः। पूर्वाननुभूतत्वान्नवतरं च भवति।

"अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ। तथैव सुमहत्तेजः करोति भगवान् महत्। अतो नवतरं चैतद् ब्रह्मादीनां करोत्यजः"।

अन्येषां वा भूतानां मनुष्यादीनाम्। नासुरादीनां भविष्यतीति च[5]।

"मयं तु मानुषं स्वर्णं पीतं गान्धर्वमेव च। इन्द्रगोपनिभं नाम्ना जाम्बूनदमिति स्मृतम्। दैवं चामीकरं नाम प्रोद्यदादित्यसन्निभम्। नैजो विशेषः स्वर्णानामेतेषां सर्वदैव च। नाग्न्यादिनाऽपि समतां यान्ति तानि कथञ्चन। एवं मानुषगन्धर्वपितृदेवाः प्रजापतिः। ब्रह्मेति क्रमशो जीवा विशिष्टा उत्तरोत्तरम्। स्वभावेनैव मुक्तानां स्वभावो

---

१ "निहत्याविद्यां" २ "तृणजलूकैवं" ३ "सूक्ष्मरूपं तु" ४ "व्यर्थं स्यात्" ५ "भविष्यति च" इति प्र. पाठः।

मयोऽधर्ममयः सर्वमयस्तद् यदेतदिदंमयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेनाथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत् कर्म कुरुते यत् कर्म कुरुते

व्यक्तिमाव्रजेत्" इत्यादि च। "स यत्रायमणिमानं न्येत्य[1]", "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते", "तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वो[2] विमुक्ताः", "तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च" इत्येवमादेश्च मुक्तविषयमेवैतत्। मुक्तिविषयत्वेन[3] चैतत् प्रकरणं सूचयामास भगवान्— "तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्" इत्यादिना। नचान्या मुक्तिरस्तीत्यत्र किञ्चिन्मानम्—"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता", "एतमानन्दमयमात्मानमुपसङ्क्रम्य। इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्", "ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु", "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच", "स तत्र पर्यैति जक्षन् क्रीडन् रममाणः", "स य एवंविदेवं पश्यन्नेवं मन्वानस्तस्य सर्वेषु लोकेषु कामचारो भवति", "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा पुनश्चैकादश स्मृतः", "न ह्यस्य कर्म क्षीयतेऽस्माद्ध्येवाऽत्मनो यद्यत् कामयते तत्तत् सृजते", "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम", "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति", "परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्। यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः। इदं ज्ञानमपाश्रित्य[4] मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रळये न व्यथन्ति च", "न वर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं नच कालविक्रमः। न यत्र माया किमुतापरे हरेरनुव्रता[5] यत्र सुरासुरार्चिताः। श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः" इत्यादिश्रुतिस्मृतीतिहासपुराणेषु तेषां निर्गुणमुक्तिविषयत्वेन प्रसिद्धेष्वेव स्थलेषु मुक्त्यनन्तरं भोगोक्तेश्च। "अशरीराक्रिया[6] गौणदेहादेस्ते ह्यभावतः। चिदानन्दशरीरादेः सदेहाद्या विमोक्षिणः", "अनिन्द्रिया अनाहारा अनिष्यन्दाः सुगन्धिनः" इत्यादेश्च ॥*॥

मयट् प्राचुर्ये स्वरूपे च।

"आत्माऽयमाततत्वाद्धि ब्रह्म पूर्णगुणत्वतः। दूरस्थत्वात् स इत्युक्तः समीपस्थो ह्ययं स्मृतः। पूर्णज्ञानस्वरूपत्वाद् विज्ञानमय ईर्यते। सर्वमन्तृस्वरूपत्वात् स एवोक्तो मनोमयः। बलपूर्णस्वरूपत्वात् स प्राणमय ईरितः। सर्वद्रष्टृस्वरूपत्वाच्चक्षुर्मय इतीर्यते।

१ "अणिमानं न्येति" इति प्र. पाठः। यद्यपि न्येतीत्येव श्रुतिपाठः। ननु न्येत्येति। तथापि "अणिमानं न्येति", "आत्मा बल्यं न्येत्य" इत्युभयश्रुतिसङ्ग्रहायैवमुक्तम्। २ "ऊर्ध्वा विमुक्ताः" ३ "मुक्तविषयत्वेन" ४ "ज्ञानमुपाश्रित्य" ५ "हरेरनुव्रताः" ६ "अशरीरक्रियाः" इति प्र. पाठः।

तदभि सम्पद्यते ॥५॥ तदेष श्लोको भवति । तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति॥६॥

सर्वश्रोतृस्वरूपत्वात् स श्रोत्रमय ईरितः। सर्वाधारात् सुगन्धत्वात् पृथिवीमय उच्यते। सर्वतृप्तिकरत्वाच्च विष्णुरापोमयः स्मृतः। सर्वकर्तृस्वरूपत्वाच्छुतो वायुमयो हरिः। अवकाशप्रदातृत्वादाकाशमय ईर्यते। पूर्णतेजःस्वरूपत्वात् तेजोमय उदाहृतः। सृष्ट्यादीच्छास्वरूपत्वात् स्मृतः काममयो हरिः। सर्वदुष्टप्रतीपत्वात् स हि क्रोधमयो मतः। सुखादिधर्मरूपत्वाज्ज्ञेयो धर्ममयः प्रभुः। अप्राकृतस्वरूपत्वादनेतन्मय एव च। अपार्थिवो हरेर्गन्धो न तृप्तिश्चाप्यबात्मिका। नाऽग्नेयं तस्य तेजोऽपि नच वायुर्बलं हरेः। श्रोत्राद्या नास्य चाऽऽकाशो मनस्तत्त्वं न तन्मनः। बुद्धितत्त्वं न तद्बुद्धिर्नाहमस्याहमुच्यते। महदात्मकं न तच्चित्तं प्रकृतिर्नास्य चेतना। प्रकृत्यादिगुणा यस्मात् तद्गुणप्रतिबिम्बकाः। अतः सर्वमयो विष्णुः सर्वाद्यत्वादतन्मयः। चिदानन्दात्मकास्तस्य गुणाः सर्वगुणात्मकाः। सर्वदाऽतः सर्ववैलक्षण्यमेषां प्रकीर्तितम्। क्रोधः क्षमात्मको यस्य चिदानन्दात्मकस्तथा। अन्यक्रोधसमः क्रोधस्तस्य विष्णोः कथं भवेत्। एवं सर्वगुणास्तस्य सर्वेभ्योऽपि विलक्षणाः। पूर्वप्रज्ञानुसारेण विमुक्तस्तमुपेष्यति। अनादिकालसम्बद्धा[1] या प्रज्ञा विष्णुसंश्रया। पूर्वप्रज्ञेति सा प्रोक्ता ब्रह्मादेस्तारतम्यतः" इत्यादि च[2] महामीमांसायाम्। "वर्तमानं यतो विष्णोर्वशे तस्मादिदंमयः। अतीतानागतं यस्मात् तद्वशेऽतो ह्यदोमयः। प्राधान्ये च मयट् प्रोक्तः स्वरूपे च यतो भवेत्। इदंरूपोऽप्यदोरूपस्ततो नित्यत्वतो हरिः। अस्य तस्य प्रधानश्च नित्यपूर्णबलत्वतः" इत्यादि च[3]। "यथा पूर्वं तथेदानीमिति विष्णुस्तदुच्यते। यथा बाह्ये तथैवान्तेऽत्यतो[4] यदिति चोच्यते। यथेदानीं तथा नित्यं यस्मादेष भविष्यति। अत एतदिति प्रोक्तो वासुदेवो जगत्पतिः। स यथा करोति पुरुषं तथैवायं भविष्यति। साधुर्भवति साधुं चेत् करोति पुरुषोत्तमः। पापो भवति पापं चेत् स करोति जनार्दनः। तत्प्रेरितेन पुण्येन पुण्यो भवति मानवः। तत्प्रेरितेन पापेन तथा पापः पुमान् भवेत्। आहुश्च तत्कामाधीनं जीवमेनं सदैव हि। तत्कामादस्य कामः स्याद् यथा कामस्तथा भवेत्। कामानुसारिणी निष्ठा कर्म निष्ठानुसारतः। फलं कर्मानुसारेण विष्णोः काममयस्ततः। जीवोऽयं सर्वदैव स्यान्नान्यथा तु कथञ्चन" इत्यादि च ॥*॥

जीवेश्वराभेदाङ्गीकारे "सुषुप्त्युत्क्रान्त्योर्भेदेन" इति सूत्रविरोधः। "प्राज्ञेनाऽऽत्मनाऽन्वारूढः", "प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः" इत्यादिश्रुतिविरोधश्च। नच व्यावहारिकभेदो नाम कश्चिदस्ती-

१ "कालसम्बन्धा" २ "इति च" ३ "इति च" ४ "तथैवान्ते ततो" इति प्र. पाठाः।

तदेष श्लोको भवति। यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति। तद् यथाऽहिनिर्लयनी वल्मीके

त्यत्र किञ्चिन्मानम्। भ्रान्तिभेदत्वे श्रुतिसिद्धत्वमेव न स्यात्। नहि निर्दोषश्रुतिवाक्यसिद्धं भ्रान्तमिति युक्तम्। उन्मत्तवाक्यवत् सर्वस्य[१] वेदस्याप्रामाण्यप्रसक्तेः। नच स्वविषयस्य[२] भ्रमत्वादन्यदप्रामाण्यं नाम किञ्चित्। तन्मते ह्युन्मत्तवाक्यविषयस्याप्यनिर्वचनीयत्वमेव[३]। "सत्यः सो अस्य महिमा गृणे शवः", "त एते सत्याः कामाः" इत्यादिश्रुतिभिर्भगवद्गुणानां सत्यत्वमेव ज्ञायते। "सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः" इति सर्वजीवानां भगवदनुजीवनं च सत्यमित्येवोच्यते। तदा कथं जीवभेदस्यासत्यता[४]। नच सर्वविध्यर्थक्रियासिद्धस्य कुत्रचिद् बाधो दृष्टः। "न हास्य कर्म क्षीयतेऽस्माद्धयेवात्मनो यद्यत् कामयते तत्तत् सृजते" इति मुक्त्यनन्तरमपि तदधीनत्वप्रतीतेश्च न भेदस्यासत्यता। नहि संसारावस्थायामक्षीणकर्मता भवति। नच मुख्यार्थं परित्यज्यामुख्यो युक्तः। अतः सत्य एव भेदः॥*॥

स भगवान् यथाकारी (यथा कारयति यथाचारी[५]) यथा चारयति तथा भवति। स भगवान् यथाकामो भवति तथाकामो जीवो भवति। इत्थं कामोऽस्य भूयादिति भगवदिच्छावशादस्य कामो भवतीत्यर्थः। क्रतुरितीत्थं करिष्याम्येवेति निश्चयरूपः कामः। स भगवदिच्छया हि भवति। "कामेन मे काम आगात्" इति च श्रुतिः॥*॥

"अयोग्यकामराहित्यान्मुक्तो निष्काम उच्यते। अ इत्युक्तः परो विष्णुस्तत्कामोऽकाम ईरितः। तथाऽकामयमानः स योग्यकामस्य चापि तु। कादाचित्कसमुद्भूतेर्भगवत्कामनां विना। कामितस्याखिलस्याऽऽप्तेराप्तकामश्च मुक्तिगः। चिदानन्दात्मकं रूपं कामत्वेन भविष्यति। यतस्तेनैवाऽऽत्मकाम इति मुक्तोऽभिधीयते। मुक्तस्य न पुनः प्राणा उत्क्रामन्ति कदाचन। जीवोऽपि ब्रह्मशब्दोक्तो जडाद् गुणबृहत्त्वतः। प्राप्नोति परमं ब्रह्म प्रळये प्रळये सदा। अन्यदा स्वेच्छया विष्णौ[६] स्वरूपाद् बहिरेष्यति। स्वेच्छयाऽन्तर्बहिर्वैवं[७] रमते मुक्त आत्मवान्" इत्यादि च।

नचामुक्तस्य कथञ्चिदाप्तकामता मुख्यतः। ब्रह्माप्येतीति वचनात् पूर्वब्रह्मशब्दो जीववाच्येव। यद्यज्ञाननाशात् परिज्ञानमात्रं तदा स्वस्य ब्रह्मतां विजानातीत्येव स्यात्। नतु ब्रह्माप्येतीति। नहि राजपुत्रः पूर्वमात्मानमजानन् पश्चाद् राजपुत्र इति विज्ञाय राजपुत्रमप्येतीत्युच्यते। किन्तु राजपुत्रत्वेनाऽऽत्मानं व्यजानादित्येवोच्यते। विस्मृतकण्ठमणिरपि विज्ञात इत्येवोच्यते। नतु प्राप्त इति। अतः पूर्वब्रह्मशब्दो जीववाच्येव॥*॥

अथ मर्त्योऽमृतो भवति। अथ मुक्त्यनन्तरं न कदाचिन्मृतिरस्य भविष्यतीत्यर्थः[८]। मुक्त एव परे ब्रह्मणीच्छया प्रविशति निःसरति च। दर्शनादीन् ब्रह्मणो भोगांश्च करोति। स्वरूपभूताः कामा

१ "सर्ववेदस्य" २ "स्वविषयभ्रमत्वात्" ३ "अनिर्वाच्यत्वमेव" ४ "जीवेशभेदस्यासत्यता" इति प्र. पाठाः। ५ [ ] एतदन्तर्गतो भागः प्राचीनकोशेषु न दृश्यते। स्खलितमिति सम्भाव्यते। ६ "विष्णोः" ७ "बहिश्चैवं" ८ "भवतीत्यर्थः" इति प्र. पाठाः।

मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥७॥ तदेते श्लोका भवन्ति । अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव । तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वो विमुक्ताः ॥८॥ तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च । एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च ॥९॥ अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।

---

मुक्तानां भवन्तीत्यतो हृदि श्रिता इति विशेषणम् । हृदयस्यैव मोचनात् तत्स्थाः कामा मुक्तानामपगच्छन्तीति युक्तमेव । नह्यमुक्तस्य कदाचित् सर्वे कामा मुच्यन्ते । सुप्त्यादावप्यभिभव एव । वासनाया विद्यमानत्वात् । वासनाया हि पुनरुद्भवः ।

"यावद् विमुच्येत् पुरुषस्तावत् कामा हृदि श्रिताः[1] । चित्ताभावाद् विमुक्तस्य स्युः कामास्तद्गताः कुतः । स्वरूपभूतचित्तेन कामाद्याः स्युः सुखात्मकाः । दुःखात्मकाः प्राकृता वा मुक्तानां न कथञ्चन" इति ब्रह्मतर्के ।

अयं जीवः । अथ मुक्त्यनन्तरमेवाशरीरो भवति । अमृतः कदाऽपि न मृतः । प्राणाख्यं ब्रह्मैव[2] । "कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते" इत्यादिश्रुतेः । तेज एव च । तेज इति श्रीः ।

"अन्येषाममृतत्वं तु भवेद् विष्णोः प्रसादतः[3] । नित्यामृतः स भगवान् श्रीश्च नान्यः कथञ्चन" इति नारदीये । "प्राणस्तु भगवान् विष्णुः सर्वनेतृत्वतो विभुः । तेजस्तु सर्वतेजस्त्वाच्छ्रीरेव समुदाहृता" इति च ॥*॥ "तत्प्राप्तेः सुखहेतुत्वात् पन्था इति हरिः श्रुतः । अणुश्च विततश्चासौ यतोऽन्तर्बहिरेव च । श्रिया स्पृष्टः श्रीपतित्वादनुवित्तस्तयैव च । तस्य प्रसादात् संयान्ति तल्लोकं सर्वमोक्षिणः । ऊर्ध्वः स भगवान् सर्वविशिष्टो यत् सदैव हि ॥*॥ रूपमाहुः पञ्चविधं तस्य विष्णोर्महात्मनः । शुक्लं तु वासुदेवाख्यमनिरुद्धं[4] सुनीलकम् । साङ्कर्षणं पिङ्गलं च प्राद्युम्नं[5] हरितं स्मृतम् । नारायणं लोहितं स्यात् पञ्चरूपाण्यजे हरौ । पञ्चभेदविभिन्नो यस्त्वभिन्नोऽपि स्वरूपतः । स पन्था ब्रह्मणा ज्ञातः पद्मजेनैव सन्ततम् । परब्रह्मस्वरूपज्ञो महातेजःश्रियस्तथा । सम्यक् स्वरूपविज्ञानात् तैजसत्वेन कीर्तितः । भगवत्कर्मकर्तृत्वात् पुण्यकृच्चाभिधीयते । एवंविधोऽपि तस्यैव प्रसादाद् याति तां गतिम् । अतः पन्थाः समुद्दिष्टो भगवान् केशवः स्वयम् । स्वगताखिलभेदेन विहीनोऽपि स सर्वदा । सर्वेषां व्यवहाराणां भेदोत्थानां स ईश्वरः । अभिन्नोऽपि ह्यतो भिन्नः पञ्चभेदादिनाऽमृषा ॥*॥ अन्यथोपासका येऽस्य ते यान्ति ह्यधरं तमः । ततः किञ्चिद् विशेषेण दुर्ज्ञानस्याविनिन्दकाः ।

---

१ "स्थिताः" २ "परब्रह्मैव" ३ "अमृतत्वं च भवेद् विष्णुप्रसादतः" ४ "अनिरुद्धं तु नीलकम्" ५ "सङ्कर्षणं पिङ्गलं च प्रद्युम्नं" इति प्र. पाठाः ।

ततो भूय इव ते तमो य उ विद्यायां रताः ॥१०॥ अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसो बुधो जनाः ॥११॥ आत्मानं चेद् विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत् ॥१२॥ यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्देहे गहने प्रविष्टः । स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥१३॥ इहैव सन्तोऽथ विद्मस्तद् वयं न चेदिहावेदीर्महती विनष्टिः । य एतद् विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥१४॥ यदैतमनुपश्यन्त्यात्मानं[1] देवमञ्जसा । ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥१५॥ यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते । तद् देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥१६॥ यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥१७॥ प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो मनो ये

सम्यगाचार्यवचनमविज्ञाय[2] विरोधिनि । सत्त्वबुद्धिं यतः कुर्युरतस्ते[3]ऽधिकपापिनः । अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवान् ॥*॥ नित्यदुःखस्वरूपत्वादनन्दं तत् तमो मतम् । बोधके विद्यमानेऽपि ये विदुर्न परं हरिम् । तेऽपि यान्ति तमो घोरं नित्योद्रिक्तासुखात्मकम्" इत्यादि च[4] ।

बुधसकाशे[5]ऽप्यविद्वांस इत्यर्थः ।

"बोधनाज्ज्ञानवान् भुत् स्यात् तत्सकाशाच्च ये हरिम् । न विदुस्ते तमो यान्ति सर्वदुःखात्मकं परम् ॥*॥ यदि जीवः परात्मानमयमस्मीति वेदितुम् । योग्यः शरीरच्छेदादेः[6] कथं दुःखी तदा भवेत् । दुःखी शरीरसम्बन्धाज्जीवो विष्णोः प्रसादतः । अदुःखी विप्लुडानन्दं मुक्त एव च भोक्ष्यति । नित्यमुक्तः पूर्णसुखः स्वतन्त्रः पुरुषोत्तमः । परतन्त्रः कथं जीवो योग्यः सोऽस्मीति वेदितुम् । तस्मात्[7] सोऽस्मीति नैवायं विजानीयात् कदाचन । तदीयोऽस्मीति जानीयात् सर्वदैव बुधस्ततः" इति च ॥*॥ "यस्य ज्ञातो नित्यबुद्धो भगवान् पुरुषोत्तमः । तस्य लोकः स एवैको यो लोकः परमात्मनः । स हि विष्णुः परो वायोरपि कर्ता प्रकीर्तितः । विश्वो वायुः समुद्दिष्टः पूर्णत्वाज्जीवसङ्घतः । तदन्यस्यापि सर्वस्य कर्तैको विष्णुरेव हि । प्रविष्टो गहने देहमध्ये सन्देहनामनि[8] । तज्ज्ञानी याति तल्लोकं तत्प्रसादाच्च वर्तते ॥*॥ न वत्सराश्च नाहानि यस्य

१ आत्मानमनुपश्यतीति व्याख्येयम् । उत्तरत्र विजुगुप्सत इत्येकवचनश्रवणात् । क्वचित् "अनुपश्यत्यात्मानम्" इत्येव श्रुतिपाठः । २ "अवज्ञाय" ३ "ततस्ते" ४ "इति च" इति प्र. पाठाः । ५ "बुधः सकाशेऽपि" इति प्र. पाठः । प्राचीनकोशपाठे तु अर्थानुवाद इति वक्तव्यम् । ६ "भेदादेः" ७ "यस्मात्" ८ "सन्दोह(घ)नामनि" इति प्र. पाठाः ।

विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥१८॥ मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥१९॥ एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् । विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥२०॥ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तदिति ॥२१॥ स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्त्येतद्धस्म वै पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः

---

नित्याविकारतः । ज्योतिषां ज्योतिरचलं तद् देवाः समुपासते ॥*॥ प्राणश्चक्षुस्तथैवान्नं मनः श्रोत्रं च पञ्चमम् । मूलप्रकृतिसंयुक्तं यद्गतं प्रतिपूरुषम् ॥*॥ तस्य रूपगुणाद्येषु न कश्चिद् भेद इष्यते । तद्भेददर्शी संयाति मृत्योर्मृत्य्वभिधं तमः ॥*॥ तस्मादेकप्रकारेण द्रष्टव्यो भगवान् हरिः । परिमाणविहीनत्वादप्रमेय इतीरितः " इत्यादिवचनात् । अप्रमेयत्वमवाच्यत्वममनोविषयत्वं च सर्वात्मना न । " मनसैवानुद्रष्टव्यम् " इत्युक्तत्वात् । नच केनाप्यवाच्यस्य लक्षणा दृष्टा । क्षीरमाधुर्यविशेषादेरपि तत्तच्छब्देनैव वाच्यत्वात् । "विशदं क्षीरमाधुर्यं गुडे तीक्ष्णं घृते स्थिरम् " इत्यादि च । नच निर्गुणस्य सत्त्वमेवास्ति । गुणभेदादीनामपि सन्त्येव गुणाः । नचानवस्था । स्वनिर्वाहकत्वात् ।

" अवाच्यममनोगम्यमगुणं चेत् कुतोऽस्ति तत् । तस्मादेवं वदन् वस्तु शून्यतामर्थतोऽवदत्[1] । गुणाश्च गुणिनः सर्वे स्वेनैव गुणिनो गुणाः" इत्यादि च ॥*॥ " सर्वमस्य वशे यस्माद्धरिः सर्ववशी ततः । सर्वस्य ब्रह्मरुद्रादेरन ईशान एव च । गुणाधिकः पालकश्चेत्यतोऽधिपतिरीरितः " इति च ।

भूत एवाधिपतिः । नास्याऽधिपत्यमादिमत् ।

"नित्यबोधात्मकत्वाद् यो मुनिः प्रोक्तो जनार्दनः । तं विद्वांश्च मुनिर्नाम बोधस्तस्याप्यमुख्यतः । यं विदित्वा विमुक्ताश्चायुक्तकामविवर्जिताः । उत्पत्तिलयहीनाश्च नित्यानन्दैकभोगिनः । आनन्दभिक्षां विष्णूत्थां चरन्त्यज्ञानवर्जिताः । स एष मोक्षदो विष्णुर्यत्

---

१ "अर्थतो वदेत्" इति प्र. पाठः ।

स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥२२॥ तदेतदृचाभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् । तस्यैव स्यात् पदवित् तं विदित्वा न लिप्यते कर्मणा पापकेनेति ॥२३॥ तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽत्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजोऽविचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राळिति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्यायेति ॥२४॥ स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु य एवं वेद ॥२५॥ स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद ॥१६॥*॥ इति चतुर्थं शारीरब्राह्मणम् ॥*॥

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्

---

कल्याणं कृतं मया । पापं कृतं मयेत्येतन्न कदाचित् तरिष्यति[1] । कृते मया पुण्यपापे इति यच्चेतनात्मनाम् । तत् सर्वमत एवोक्तं विष्णोः सर्वेश्वरेश्वरात् । तीर्णो हि वर्तते नित्यं पुण्यपापे जनार्दनः । नैनं कदाचित् तपतः पुण्यपापे जनार्दनम्" इति च ॥*॥
"शान्तिस्तु भगवन्निष्ठा दमो मदविनिग्रहः । हृदिस्थविष्णौ सन्तोषः सदैवोपरमः स्मृतः । तितिक्षा द्वन्द्वसहता क्षमा क्रोधासमुत्थितिः" इति शब्दनिर्णये । "सर्वैः पूर्णः समुद्दिष्टस्तथा ज्ञेयो जनार्दनः । रागसन्देहपापानि तथा जानंस्तरिष्यति । नित्यं हि रागपापादेर्मुक्तो यत् पुरुषोत्तमः । वेदाख्यब्रह्मणाऽण्यत्वाद् विष्णुर्ब्राह्मण उच्यते । पूर्णत्वाद् ज्ञानरूपत्वाद् ब्रह्मलोकश्च स प्रभुः ॥*॥ न मरिष्यतीति ह्यमरो न मृतो यत् ततोऽमृतः । ब्रह्मायमाप्तकामत्वादेवं[2] यो वेद तं परम् । आप्तकामोऽभयश्चैव भवेत् विष्णोरनुग्रहात्" इति[3] ।
परमार्थेऽविचिकित्सा[4] । ब्राह्मणो भवतीति नित्यमेव तथा भवतीत्यर्थः ।
"अभूद् भविष्यति भवत्येवमाद्यपदानि तु । नित्यभावाभिधायीनि यत्र वाच्या हरेर्गुणाः" इति शब्दनिर्णये ॥*॥ शारीरब्राह्मणम् ॥*॥

---

१ "करिष्यति" २ "आप्तकामत्वात्" ३ "इति च" ४ "अविचिकित्सः" इति प्र. पाठाः ।

वृत्तमुपाकरिष्यन् ॥१॥ मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन् वा अरेऽहम-स्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥२॥ सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् स्यां न्वहं तेनामृता-ऽऽहो नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाऽशाऽस्ति वित्तेनेति ॥३॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेत्थ तदेव मे ब्रूहीति ॥४॥ स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियामवृधद्धन्त तर्हि भवत्येतद् व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥५॥ स होवाच नवा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति नवा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति नवा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति नवा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति नवा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति नवा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति नवा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति नवा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति नवा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति नवा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति नवा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति नवा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम् ॥६॥ ब्रह्म तं परादाद् योऽन्यत्राऽमनो ब्रह्म वेद क्षत्रं तं परादाद् योऽन्यत्राऽत्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्राऽत्मनो लोकान् वेद देवास्तं परादुर्योऽन्यत्राऽत्मनो देवान् वेद वेदास्तं परादुर्योऽन्यत्राऽत्मनो

---

प्रियां वाचमवर्धयद् भवती ॥*॥

वेदान् वेद भूतानि तं परादुर्योऽन्यत्राऽत्मनो भूतानि वेद सर्वं तं परादाद् योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदं सर्वं यदयमात्मा ॥७॥ स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दान् शक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥८॥ स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दान् शक्नुयाद् ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥९॥ स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दान् शक्नुयाद् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥१०॥ स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग् धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेवैतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥११॥ स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनमेवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां गन्धानां नासिकैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां सङ्कल्पानां मन एकायनमेवं सर्वासां विद्यानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्वेषां वेदानां वागेकायनम् ॥१२॥ स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य सञ्ज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१३॥ सा होवाच मैत्रेय्यत्रैव मा भगवान् मोहान्तमापीपिपन्नवा अहमिमं विजानातीति स होवाच नवा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ॥१४॥ यत्र हि द्वैतमिव भवति तदितर इतरं

---

*बाह्यान्तरविशेषाभावेन सर्वत्र लवणरसघन एव ॥*॥ नवा अहमिमं विजानातीति। अहेयं परमात्मानं जीवो न विजानातीत्यत्रैवं[1] भगवान् मोहान्तं मोहाख्यं नाशमापीपिपत् प्रापयामास। अतः "अहं ब्रह्मास्मि" इत्यादिष्वप्यहंशब्दोऽहेयवाचीति[2] सिद्धम्। अन्यथा कथमहं विजानातीति

---

१ "न जानातीत्यत्रैव" २ "इत्यादिष्वहंशब्दोऽहेयत्ववाची" इति प्र. पाठौ।

पश्यति तदितर इतरं जिघ्रति तदितर इतरं रसयते तदितर इतरमभिवदति तदितर इतरं शृणोति तदितर इतरं मनुते तदितर इतरं स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं जिघ्रेत् तत् केन कं रसयेत् तत् केन कमभिवदेत् तत् केन कं शृणुयात् तत् केन कं मन्वीत तत् केन कं स्पृशेत् तत् केन कं विजानीयाद् येनेदं सर्वं विजानाति तं केन विजानीयात् स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥१५॥ इति पञ्चमं मैत्रेयिब्राह्मणम् ॥*॥

अथ वंशः पौतिमाष्यो गौपवनाद् गौपवनः पौतिमाष्यात् पौतिमाष्यो गौपवनाद् गौपवनः कौशिकात् कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतम आग्निवेश्यादाग्निवेश्यो गार्ग्याद् गार्ग्यो गार्ग्याद् गार्ग्यो गौतमाद् गौतमः सैतवात् सैतवः पाराशर्यायणात् पाराशर्यायणो गार्ग्यायणाद् गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यन्दिनायनान्माध्यन्दिनायनः सौकरायणात् सौकरायणः काषायणात् काषायणः सायकायनात् सायकायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद् घृतकौशिकः पाराशर्यायणात् पाराशर्यायणः पाराशर्यात् पाराशर्यो जातुकर्ण्याज्जातुकर्ण्य आसुरायणाच्च यास्काच्चाऽसुरायणस्त्रैवर्णेस्त्रैवर्णिरौपबन्धनेरौपबन्धनिरासुरेरासुरिर्भारद्वाजाद् भारद्वाज आत्रेयादात्रेयो माण्डेर्माण्डिर्गौतमाद् गौतमो गौतमाद् गौतमो वात्स्याद् वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात् काप्यात् कैशोर्यः काप्यः कुमारहारितात् कुमारहारितो गालवाद् गालवो विदर्भीकौण्डिन्याद् विदर्भीकौण्डिन्यो वत्सनपादो बाभ्रवाद् वत्सनपाद् बाभ्रवः पथः सौभरात्

---

युज्येत[1] ? ॥*॥ एतावद् विज्ञातुः परमात्मनो विज्ञानादिकमेवं ह्यमृतत्वं मोक्षः[2] ।

"विष्णोर्ज्ञानादिकं मोक्षस्तदभावे कुतः सुखम् । ज्ञेयाभावान्नहि ज्ञानं ज्ञानाभावे हि शून्यता । तस्माज्ज्ञेययुतो मोक्षः सुखरूपत्वतः सदा ।" इति ब्रह्मतर्के ॥*॥ मैत्रेयि-

---

१ "युज्यते" इति प्र. पाठः । २ प्राचीनकोशेषु "अमृतत्व मोक्षम्" इति श्रूयते । अर्थस्तु मृग्यः ।

पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात् त्वाष्ट्राद् विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद् दध्यङ् आथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्रध्वंसनान्मृत्युः प्रध्वंसनः प्राध्वंसनात् प्राध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात् सनातनः सनकात् सनकः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥१॥*॥ इति षष्ठं वंशब्राह्मणम् ॥*॥

इति श्रीबृहदारण्यके षष्ठोऽध्यायः

---

ॐ॥ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥१॥ ॐ खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माऽह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदेनैन यद् वेदितव्यम् ॥२॥*॥ इति प्रथमं ब्राह्मणम् ॥*॥

त्रयः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भगवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञा-

---

ब्राह्मणम् ॥*॥ "अवरेभ्योऽपि शृण्वन्ति परमाश्च कचित् कचित्। लीलयैव नचैतेषां परमत्वं विहीयते" इति च ॥*॥ वंशब्राह्मणम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्बृहदारण्यकोपनिषद्भाष्ये
षष्ठोऽध्यायः

---

ॐ॥ "अवतारा महाविष्णोः सर्वे पूर्णाः प्रकीर्तिताः। पूर्णं च तत् परं रूपं पूर्णात् पूर्णाः समुद्गताः। परावरत्वं तेषां तु व्यक्तिमात्रविशेषतः। न देशकालसामर्थ्यैः पारावर्यं कथञ्चन। पूर्वरूपस्य पूर्णस्य पूर्णं यदवतारगम्। रूपं तदात्मन्यादाय पूर्णमेवावतिष्ठते। लौकिकव्यवहारो यो भूभारक्षपणादिकः। तदृदृष्टिं विना नान्यो लयः कृष्णादिनां कचित् ॥*॥ ओता सर्वगुणा यस्मादस्मिन्नों विष्णुरुच्यते। खं प्रकाशस्वरूपत्वाद् ब्रह्म तद् व्याप्तरूपतः। पुनः खं सुखरूपत्वात् पुराणं तदनादितः। वायोश्च रतिदं यस्माद् वायुरं ब्रह्म तत् परम्। ख्यातत्वाच्चापि तत् खं स्याद् रौहिणेयस्तथाऽवदत्। वेदोऽयं ज्ञानरूपत्वादिति यं ब्राह्मणा विदुः। निर्दोषत्वाद इत्युक्तस्तेन वेद्यं सदाऽखिलम्" इति च ॥*॥

बाल्हीकसुता हि रोहिणी। अतो बलभद्रः कौरव्यायणीपुत्रः ॥*॥

"ज्ञानदानं तु देवानां फलदानं च कर्मणाम्। विष्णुना विहितं पूर्वं पुनर्देवनरासुराः।

सिष्टेति ॥१॥ अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भगवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥२॥ अथ हैनमसुरा ऊचुर्ब्रवीतु नो भगवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्ददद इति दाम्यत दत्त दयध्वमिति तदेतत् त्रयं शिक्षेद् दमं दानं दयामिति ॥३॥*॥ इति द्वितीयं ब्राह्मणम् ॥*॥

एष प्रजापतिर्यद्धृदयमेतद् ब्रह्मैतत् सत्यं तदेतत् त्र्यक्षरं हृदयमिति हृ इत्येकमक्षरं हरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥१॥*॥ इति तृतीयं ब्राह्मणम् ॥*॥

तद् वै तदेतदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति

---

ब्रह्माणमपि पप्रच्छुर्देवानां सद्गुणोच्छ्रिते। अनहङ्कारमात्रं तु ब्रह्मणा विहितं सदा ॥*॥ सर्वोच्चमोक्षसम्प्राप्त्यै नराणां ज्ञानसाधनम्। देवादीनां दानमेव हविरादेः प्रकीर्तितम्॥*॥ तमः प्राप्तिविलम्बाय दैत्यानां विहिता दया" इति प्रवृत्ते ॥*॥ "हरणाद् यज्ञभागादेर्दानादेर्दानितस्तथा। यानादव्यवधानेन परस्य ब्रह्मणस्तथा। ब्रह्म हृदय इत्युक्तस्तस्यैवंविदपि ध्रुवम्। हृतिदानस्वर्गयानपात्रं स्यात् तत्प्रसादतः। हृत्वैवास्मै ददत्यद्धा स्वकीयाश्चान्य एव च" इति निर्णये।

परमात्मा च प्रजापतिः ॥*॥

"ततत्वादेकरूपत्वात् तत् परं ब्रह्म कीर्तितम्। तदेव तादृशं प्रोक्तं नैवान्यत् तादृशं क्वचित्। तदेतत् सत्यमेवाऽसीद् वासुदेवाख्यमव्ययम्" इति ब्रह्मतर्के।

तदेव हि तत्। तन्नारायणाख्यं परं ब्रह्मैतदेव सत्यं वासुदेवाख्यमासीदित्यर्थः।

"स्वस्मात् स्वयं समुत्पन्नो वासुदेवात्मना प्रभुः। सत्यं ब्रह्मेति यो वेद महायाज्यं तु तं परम्। प्राप्नोत्येव हि तल्लोकान् जीवन्नप्युत्तमो भवेत्" इति प्रध्याने ॥*॥ "स्वभागहरणाद् दानात् फलानां यापनान्नृणाम्। हृदयं भगवान् विष्णुः सत्यं सद्गुणरूपतः" इति सत्तत्त्वे। "प्रजापतिरिति ब्रह्मा वेदेषूक्तो ह्यमुख्यतः। यस्मिन्नूषुर्ब्रह्मचर्यं देवासुरनरोऽब्जजे। एष वै भगवान् विष्णुर्मुख्यतस्तु प्रजापतिः। यज्ज्ञानान्मुक्तिमायान्ति स्वर्गाख्यां हृदयं च सः। हृतिसद्दानयानेभ्यः सत्यं सद्गुणरूपतः। यत् तद्धृदयमित्युक्तं ब्रह्म तत् सत्यतामगात्। सत्यत्वं सदनीयत्वमासाद्यं यन्मुमुक्षुभिः।

---

१ भावे क्तः। उच्छ्रितं उच्छ्रयः। तद्विषयेऽनहङ्कारमात्रम्। उच्छ्रयार्थमिति वा। "सद्गुणोच्छ्रितेः" इति प्र. पाठः।

जयतीमान् लोकान् जित इन्वसावसद् य एवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यं ह्येव ब्रह्म ॥१॥*॥ इति चतुर्थं ब्राह्मणम् ॥*॥

आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म सत्यं प्रजापतिं प्रजापतिर्देवांस्ते देवाः सत्यमेवोपासते ॥१॥ तदेतत् त्र्यक्षरं सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतं सत्यभूयमेव भवति नैवं विद्वांसमनृतं हिनस्ति ॥२॥ ॥*॥ इति पञ्चमं ब्राह्मणम् ॥*॥

तद् यत्तत् सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषस्तावेतावन्योन्यस्मिन् प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः प्राणैरयममुष्मिन् स यदोत्क्रमिष्यन् भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥१॥*॥ इति षष्ठं ब्राह्मणम् ॥*॥

य एष एतस्मिन् मण्डले पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति

---

एवं तद् ब्रह्म यो वेद स हि लोकानिमान् जयेत् । एतल्लोकजयो नाम धर्मज्ञानादिपूर्णता। जित एव ह्यसौ लोको यदा वेद जनार्दनम्'' इति गुणपरमेर्वे ।
परलोको जित एवाभवदित्यर्थः ॥*॥

"सदा सर्वगुणापानादापो नारायणः स्मृतः। द्वितीयं रूपमसृजद् वासुदेवं स आत्मनः। ब्रह्म सत्यमिति प्राहुर्वासुदेवाभिधं प्रभुम्। तस्माद् ब्रह्माऽजनि ततो देवाः सर्वेऽपि जज्ञिरे। तस्माद् ब्रह्मादयः सर्वे वासुदेवमुपासते ॥*॥ ततत्वादन्यथाज्ञानं तीत्येव समुदीर्यते। तस्याधस्तात् सदात्मा तु साधयन्ननृतं हरिः। उपरिष्टाच्च यन्नामा नाशयन्ननृतं स्थितः। एवं यो वेद तं विष्णुं नास्य मिथ्यादृशिर्भवेत्। योग्यतापेक्षयोपासाऽथाऽपरोक्ष्याच्च तत्फलम्। सम्यग् ददात्यन्यथा च भवेदेवोपकारिणी। अत्ययोग्याय चेत् सा स्याद् विपरीतफलप्रदा। वैपरीत्यं तु विघ्नः स्यान्नतु पापं कथञ्चन''इत्याधारे॥*॥

"स वासुदेवो भगवानादित्यस्थो जनार्दनः। आदित्यनामा सम्प्रोक्त आदानाद्धविषां सदा। स एव दक्षिणाक्षिस्थस्तच्च रूपद्वयं हरेः। अन्योन्यस्मिन् स्थितं नित्यं प्राणैश्च सह रश्मिभिः। दक्षिणाक्षिस्थितो विष्णुर्यदाऽस्मादुत्क्रमिष्यति। तदैव म्रियमाणस्तु जीवः पश्येद् विरश्मिकम्। सूर्यस्य मण्डलं नास्य प्रतीयन्ते हि रश्मयः। तत्क्षणे नियमेनैव केषाञ्चित् सप्तभिर्दिनैः ॥*॥ तस्य विष्णोः शिरो नाम भावनाद् भूरिति स्मृतम्। भावनं

---

१ "इति गुणपरमे" इति प्र. पाठे ग्रन्थनामेति भाति । २ अनृतं साधयन्निति नाशयन्। "सुग्रीवान्तिकमासेदुः साधयिष्याम इत्यरिम्" इति प्रयोगात्। "सादयन्ननृतम्" इति प्र.पाठः। अतिरोहितोऽर्थः।

बाहू द्वौ बाहू द्वे एते अक्षरे सुवरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥१॥ योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे सुवरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥२॥*॥ इति सप्तमं ब्राह्मणम् ॥*॥

मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ॥१॥*॥ इत्यष्टमं ब्राह्मणम् ॥*॥

विद्युद् ब्रह्मेत्याहुर्विदानाद् विद्युद् विद्यत्येनं पाप्मनो य एवं वेद विद्युद् ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥१॥*॥ इति नवमं ब्राह्मणम् ॥*॥

वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥१॥*॥ इति दशमं ब्राह्मणम् ॥*॥

अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो

रक्षणं प्रोक्तं दृष्ट्या वाचा च रक्षति । उत्पादनाद् भुनामा स्याद् दक्षिणो बाहुरस्य तु । विनाशनाद् व इत्युक्तः सव्यो बाहुः परात्मनः । स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते । मुक्तिदानेन तद्दानात् सुवरस्य पदद्वयम् । दक्षिणश्चैव सव्यश्च क्रमाद् वर्णद्वयोदितौ । पादावस्य हि तत्प्राप्तिर्मुक्तिरित्यभिधीयते । अहमेषो[1] ह्यहेयत्वाज्जीवेन सहभावतः । असावहरिति प्रोक्तः सर्वलोकप्रकाशनात् । तद्वेदनात् सर्वपापं हन्ति चैव जहाति च । कानिचिद्धन्ति पापानि कल्यादीन् स जहाति[2] च" इति प्रवृत्ते ॥*॥ "मनोमयो ज्ञानमयः प्रधानं मय उच्यते । महाज्ञानात्मकश्चैव भारूपः सद्गुणात्मकः । सर्वप्रकाशको विष्णुर्विद्युत् सर्वस्य वेदनात् । य एनं वेद वेत्तारं सर्वस्य परमेश्वरम् । पापेभ्यो मोचयित्वैनं स्वात्मानं वेदयेद्धरिः" इति माहात्म्ये[3] ॥*॥ "सरस्वती तु गोरूपा[4] तस्या देवादयोऽखिलाः । स्तनानेवोपजीवन्ति तस्या वायुः पतिः प्रभुः । वत्सो मनोऽभिमान्यस्याः सरस्वत्याः सदाशिवः" इति प्रभञ्जने ॥*॥ "अग्निनामा तु भगवानौदर्याग्नौ प्रतिष्ठितः । विश्वैर्गुणैः समेतत्वादनन्तत्वाच्च स प्रभुः । वैश्वानर

१ अहमेषो हीति छान्दसः सन्धिपाठः। "एषो ह्यात्मा" इत्यादिवत् (ब्र.भा.२-३-२३)। २ "सञ्जहाति च" इति प्र. पाठः। ३ प्रतनकोशेषु "महात्म्ये" (?) इति पठ्यते। ४ कोशेषु "गौरूपा" (?) इति पठ्यते।

भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति ।।१।।*।। इत्येकादशं ब्राह्मणम् ।।*।।

यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खं तेन स ऊर्ध्व आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्व आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन् वसति शाश्वतीः समाः ।।१।।*।। इति द्वादशं ब्राह्मणम् ।।*।।

एतद् वै परमं तपो यद् व्याधितस्तप्यते परमं हैव लोकं जयति य एवं वेदैतद् वै परमं तपो यं प्रेतमरण्यं हरन्ति परमं हैव लोकं जयति य एवं वेदैतद् वै परमं तपो यं प्रेतमग्नावभ्यादधति परमं हैव लोकं जयति य एवं वेद ।।१।। ।।*।। इति त्रयोदशं ब्राह्मणम् ।।*।।

अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात् प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतस्तद्ध स्माऽह प्रातृदः पितरं किं स्विदेवैवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति स ह स्माऽह पाणिनामा प्रातृदः कस्त्वेनयोरेकधाभूयं भूत्वाम परतां गच्छतीति तस्मा उ हैतदुवाच वीत्यन्नं वै वि अन्ने

इति प्रोक्तः सोऽग्निरङ्गप्रणेतृतः। तस्य विष्णोः स्तुतिरियं क्रियते वायुना सदा। कर्णौ पिधाय या नित्यं श्रोतुं शक्याऽखिलैस्सदा" इति तन्त्रमालायाम् ॥ * ॥ "प्रवहं वायुपुत्रं च सूर्यसोमौ च विद्युतम् । प्राप्य प्रधानवायुं च याति तत् परमं पदम्" इति ब्रह्माण्डे ।। * ।। "व्याधीञ्छवहृतिं चैव शवदाहादिकं तथा। विष्णवे तप इत्येव चिन्तयन् याति तत् परम्" इति च। "अक्लेशितोऽपि क्लेशादीनतीतैष्यानपीह यः। विष्णवे तप इत्येव प्रार्पयेत्[1] स परं व्रजेत्। विष्णोः स्वरूपवेत्ता चेदन्यथा न कथञ्चन। यथास्वरूपवेत्तुः स्यादेकैकाऽपि ह्युपासना। मोक्षाय सहिताः सर्वा अप्यज्ञस्य नतु क्वचित्। यथावत् केशवं ज्ञात्वा स्वयोग्यैकामुपासनाम्। अपि कृत्वा हरिं दृष्ट्वा मुच्यते नात्र संशयः" इति ब्रह्मतर्के ॥*॥ "अन्नाभिमानी ब्रह्मैव प्राणो वायुरुदाहृतः। अन्योन्यानुप्रविष्टौ तौ सर्वदैव सुसंस्थितौ। वायुं विना ब्रह्मणोऽपि शरीरं पूतिमेष्यति। वायुश्च शोषमायाति विना ब्रह्माणमञ्जसा। तयोरेवं परिज्ञानी वासिष्ठः पाणिनामकः। ब्रह्मवायुविदे कार्यं किं मया साध्वसाधु वा। नासाधुना

१ "प्रार्थयेत्" इति प्र. पाठः।

ध्यूढं साम गीयते इयमेव साऽग्निरमस्तत् सामान्तरिक्षमेवर्ग् वायुः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत् साम द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते द्यौरेव साऽऽदित्योऽमस्तत् साम नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते ॥६॥ नक्षत्राण्येव सा चन्द्रमा अमस्तत् सामाथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयतेऽथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् सामाथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथ तस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥७॥ अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते वागेव सा प्राणोऽमस्तत् साम चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते चक्षुरेव साऽत्माऽमस्तत् साम श्रोत्रमेव ऋक् मनः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं

---

एवं तौ सामनामानावुभावेवाप्युदाहृतौ । अतो हि सामवेदोऽयं ऋक्सामात्मक ईरितः । वागादिष्वेवमेवैतौ वाक्प्राणौ सर्वदा स्थितौ । तयोरन्तःस्थितो विष्णुर्गायकौ तस्य तावुभौ । ऋक्सामभ्यां स उन्नामा पापोद्रश्चोच्च एवच" इत्यादि सत्तत्वे[1] । "कप्यासरक्तपद्माक्षः सूर्यगश्चाक्षिगश्च सः । गायकस्तस्य विष्णोर्यः स स्वर्ग्यांश्च नृलोकगान् । कामान् दद्यान्नरश्चेत् स्यात् सुराणां च नृणामपि । मोक्षदो यदि वायुः[2] स्यान्मुख्योद्गाता ततोऽनिलः" इति च ।

तस्मादुद्गीथः उच्चोऽसौ गीयते चेति ॥*॥ आत्मा जीवः —

"सरस्वती हि चक्षुःस्था जीवस्थो वायुरीश्वरैः[3]। विदित्वा तावुभौ देवौ तद्गं ध्यायेद्धरिं सदा" इति मानसे । "दृश्यते ज्ञानदृष्ट्या यः सूर्ये चक्षुषि चैकराट् । ऋङ्नामा ज्ञान-

---

१ यद्यपि प्राचीनपाठेषु "सतत्त्वे" इति पठ्यते । स लेखनप्रमादः स्यात् । २ प्राचीनकोशेषु "वायुं स्यात्" इत्यनन्वित इव पाठो दृश्यते । ३ "वायुरीरितः" इति प्र. पाठः ।

साम गीयते श्रोत्रमेव सा मनोऽमस्तत् सामाथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयतेऽथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् सामाथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत् साम तदुक्थं तद् यजुस्तद् ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति ॥८॥ तद् य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात् ते धनसनयोऽथ य एतदेवं विद्वान् साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्तांश्चाऽऽप्नोति देवकामांश्चाथानेनैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाऽऽप्नोति मनुष्यकामांश्च तस्मादु हैवंविदुद्गाता ब्रूयात् कं ते काममागायानीत्येष ह्येव कामगानस्येष्टे य एवं विद्वान् साम गायति साम गायति ॥९॥ त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैबलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति तथेति ते ह समुपविविशुः स ह प्रवाहणो जैबलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाचापां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति न

रूपत्वात् साम नित्यसमत्वतः। उक्थमुत्थापकत्वाच्च यजुर्याज्यस्वरूपतः। ब्रह्मासौ पूर्णरूपत्वादेवं सर्वाभिधानवान्" इति च। "यथा बदरिकानाथो द्वारकानाथ इत्यपि। अर्वाङ्नाथः पराङ्नाथ इति तद्वदिहोच्यते। सर्वनाथोऽपि भगवान् सन्निधानविशेषतः" इति च ॥*॥ "अग्निः सामाभिमानी स्याद् वरुणस्तु स्वरात्मकः। प्राणावराभिमानी तु सूर्य एव प्रकीर्तितः। अन्नाभिमानी दक्षश्च शक्रस्त्वबभिमानवान्। द्युवात्मकश्च शिवः प्रोक्तः क्रमेणैवोत्तरोत्तराः। क्रमेण मोक्षे प्राप्याश्च पूर्वेषामुत्तरोत्तराः" इति निवृत्ते ॥*॥

अग्नेर्वागात्मकत्वात्। उदकात्मकत्वात् स्वरस्य[2]। "आदित्य एव प्राणोऽन्नं वै प्रजापतिः" इति श्रुतेः। "आप एवेन्द्रो द्यौर्वाव रुद्रः" इत्यादेश्च।

१ "द्यात्मकश्च" २ स्वरस्योदकात्मकत्वात्" इति प्र. पाठौ।

स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकं सामाभिसंस्थापयामः स्वर्गसंस्तावं हि सामेति ॥१०॥ तं ह शिलकः शालावत्य उवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यति मूर्धा ते विपतेदिति हन्ताहमेतद् भगवत्तो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामः प्रतिष्ठासंस्तावं हि सामेति ॥११॥ तं ह प्रवाहणो जैबलिरुवाचान्तवद् वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यति मूर्धा ते विपतेदिति हन्ताहमेतद् भगवत्तो वेदानीति विद्धीति होवाच ॥१२॥ अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतमेवं विद्वान् परोवरीयांसमुद्गीथमुपास्ते तं हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिन् लोके जीवनं भविष्यति तथाऽमुष्मिन् लोके लोक इति स य एतदेवं विद्वानुपास्ते परोवरीय एवास्यास्मिन् लोके जीवनं भविष्यति तथाऽमुष्मिन् लोके लोक इति

---

"विशेषज्ञानसम्प्राप्त्यै जानन्तोऽपि हरिं परम्[1]। ब्रूयुर्देवाश्च ऋषयस्तदन्यस्य परात्मताम्" इति ब्रह्मतर्के ।

स्वर्गाभिमानिरुद्रं[2] प्रति सामाभिसंस्थापयामः । तत्स्तावकं हि साम ॥*॥ मूर्धा ते विपतेदिति यः कश्चिद् ब्रूयाच्चेद् विपतिष्यति ।

"ब्रह्मैव हि पृथिव्यात्मा विष्णुराकाशनामकः । आदीप्तत्वाद् वरीयांश्च परमो हरिरेव हि" इति सत्तत्त्वे ॥*॥ "शुभाशुभानां दाहादौ साम्यात् सामाग्निरीरितः। स्वो विष्णुः सागरे रन्ता वरुणोऽतः स्वरः स्मृतः। उदयाज्जगत्प्रणेतृत्वात् सूर्यः प्राण उदाहृतः। अत्ता रुद्रस्तद्विरोधाद् दक्षः स्यादन्ननामकः। स्वो विष्णुस्तद्रतिर्वायुस्तद्रो मुक्तौ सदाशिवः। अतः स्वर्गोऽसुसंस्थत्वादसाविति च कीर्तितः ॥*॥ सर्वदेवान्तरत्वात्तु ब्रह्माऽयं समुदाहृतः। लोको ज्ञानस्वरूपत्वादेतेषां परमो हरिः" इति ब्रह्मतर्के ।

आपालनादाप इन्द्रः । अधिकं वरीयान् परोवरीयान् । तत् परोवरीयोऽस्य रक्षकं भवति । यावत्तः द्वापरादिपर्यन्तम्[3] ॥*॥

---

१ "परं हरिम्" २ "स्वर्गाभिमानिनं रुद्रं प्रति" इति प्र. पाठौ । ३ प्राचीनकोशेष्वत्र प्रकरणसमाप्तिश्चिह्निता।

लोके लोक इति ॥१३॥ मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे तं होवाच नेतोऽन्ये विद्यन्ते यच्च ये म उपनिहिता इत्येतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानु पानमित्युच्छिष्टं वै मे पीतं स्यादिति होवाच न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमिति स ह खादित्वाऽतिशेषान् जायाया आजहार साऽग्र एव सुभिक्षा बभूव तान् प्रतिगृह्य निदधौ स ह प्रातः सञ्जिहान उवाच यद् बतान्नस्य लभेमहि लभेमहि धनमात्रां राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति तं जायोवाच हन्त पत इम एव कुल्माषा इति तान् खादित्वाऽमुं यज्ञं विततमेयाय तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोप विवेश स ह प्रस्तोतारमुवाच प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीत्येवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीत्येवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ १४ ॥ अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वा अहमवित्त्याऽन्यानवृषि भगवांस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव मदतिसृष्टाः स्तुवन्तां यावत् तेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाचाथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति प्राण इति होवाच सर्वाणि

---

"अपला इष्टकाः स्थूला मटचीति प्रकीर्तिताः" इति शब्दनिर्णये। "आसन्नयौवना योषिदाटिकीत्यभिधीयते[1]" इति च। "प्रद्रवन्नन्नपानार्थं प्रद्राणक इतीरितः" इति च॥*॥ "प्राणस्थविष्णुना सर्वे प्रसूयन्ते यतस्ततः। प्रस्तावदेवता स स्यात् प्रस्तावस्तु जनिर्यतः। आदित्यसंस्थितो विष्णुर्यत् सदा सर्वगीतभुक्। राजादौ गीतमप्यन्यैर्भुङ्क्ते गानस्य देवता। उद्गीथदेवता तस्मात् स एव पुरुषोत्तमः। अन्नस्थेनैव जीवन्ति भूतान्येतानि विष्णुना। प्रतिहारदेवताऽतः सः प्रतिहारो हि भोजनम्" इति च।

---

१ "आटकीत्यभिधीयते" इति प्र. पाठः।

हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यो मूर्धा ते विपतिष्यत् तथोक्तस्य मयेत्यथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेत्यादित्य इति होवाच सर्वाणि हवा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यो मूर्धा ते विपतिष्यत् तथोक्तस्य मयेत्यथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेत्यन्नमिति होवाच सर्वाणि हवा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यो मूर्धा ते विपतिष्यत् तथोक्तस्य मयेति तथोक्तस्य मयेति ॥१५॥

अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्व्राज तस्मै ह श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति तान् होवाचेहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिञ्चक्रुरोमदामों पिबामों देवो वरुणः प्रजापतिः सविताऽन्नमिहाऽहरदन्नपतेऽन्नमिहाऽहराऽहरोमिति ॥१६॥

अयं वाव लोको हाउकारो वायुर्हायिकारश्चन्द्रमा अथकार आत्मेहकारोऽग्निरीकार आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोयिकारः प्रजापतिर्हिङ्कारः प्राणः

---

उच्चैः सन्तम् उत्तमं सन्तम् ॥*॥ दल्भपुत्रो बको मित्रया पुत्रार्थं स्वीकृतः ग्राववत्[1] तूष्णीं स्थितत्वात् तथा ग्लावेत्युक्तो ग्लावनामको जातः। अत उभयथाऽस्य निर्देशो भवतीत्यर्थः।

"प्रसादार्थं बकस्यापि वायुनोक्तः श्वरूपिणा। शौवोद्गीथ इति प्रोक्तो रुद्रादीनां श्वरूपिणाम्। उपासितः पौर्णमास्यां शौवोद्गीथेन केशवः। सर्वाभीष्टं ददातीति प्रातरित्याह मारुतः। ओमदामादिकं मन्त्रं वायुनोक्तं तु देवताः। वायुस्थविष्णुमुद्दिश्य हिङ्कृत्य प्रापुरीप्सितम्। देवौ विष्णुश्च वायुश्च सर्वज्ञत्वात् क्रमेण तु। वरुणौ वरणीयत्वात् सवितारौ प्रसूतितः। प्रजानां च पती तद्वत् क्रमादेव प्रकीर्तितौ" इति च[2] ॥*॥

"हूयतेऽत्राग्निहोत्रादिर्हाउकारस्त्वयं ततः[3]। हेत्याश्चर्यवदायाति हेति वा सुखकृत्त्वतः।

---

१ "ग्लाववत्" इति प्र. पाठः। २ प्राचीनकोशेष्वत्र प्रकरणसमाप्तिश्चिह्निता। ३ "यतः" इति प्र. पाठः।

स्वरोऽन्नं याया वाग् विराडनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुप्कारो दुग्धेऽस्मै वाग् दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवं साम्नामुपनिषदं वेदोपनिषदं वेद ॥१७॥ इति तृतीयः खण्डः ॥*॥

इति श्रीच्छन्दोगोपनिषदि प्रथमोऽध्यायः

---

ॐ ॥ समस्तस्य खलु साम्न उपासनं साधु यत् खलु साधु तत् सामेत्याचक्षते यदसाधु तदसामेति तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुरथोताप्याहुः साम नो बतेति यत् साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः स य एतदेवं विद्वान् साधु सामेत्युपास्तेऽभ्याशो ह यदेनं

---

हायिकारस्ततो वायुरथेत्युक्तमनन्तरम् । आनन्तर्यात् प्रकाशस्य सूर्याच्चन्द्रस्त्वथेरितः । सर्वसामीप्यतो विष्णुरिहेति कथितः सदा । इन्धनादग्निरीकार ऊकारः सूर्य उच्छ्रितः । नितरामाह्वयन्त्येनमितीन्द्रो निहवः स्मृतः । एतीत्येकार एवासावौहोयीत्यखिलाः सुराः । उच्चत्वाद् विष्णुरुः प्रोक्तो हूयन्तेऽस्मिन् यतोऽखिलाः। मुक्तावौहोयिनस्तस्मात् सर्वे देवाः प्रकीर्तिताः। हीति निश्चय उद्दिष्टो निश्चयज्ञानतः सदा । ब्रह्मा हिङ्कार इत्युक्तो वायुः प्राणः शरीरगः। स्वे विष्णौ रमयत्येनं जीवं तस्मात् स्वरः स्मृतः । ययिर्नित्यगतेर्वायुस्तद्वा याया सरस्वती। सैवान्नदेवता प्रोक्ता याऽत्त्रा प्राणेन नीयते । सर्ववागात्मिका या तु श्रीर्विशेषेण राजनात् । विराडुक्ताऽनिरुक्तस्तु व्याप्तो नारायणस्तु यः । आहूत एव पातीति हुपूकार इति कीर्तितः। हुबित्याक्रियते यस्माद्धुप्कारस्तज्जनार्दनः। अनिरुक्तस्त्ववाच्यत्वात् परमः पुरुषो हरिः" इति माहात्म्ये।

सम्यक् चरतीति स एव सञ्चरः ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीच्छन्दोगोपनिषद्भाष्ये
प्रथमोऽध्यायः

---

ॐ ॥ समस्तस्य पूर्णस्य साधुत्वात् सामनाम्नो विष्णोरुपासनं साधु। सारत्वेन मेयं साम। सारत्वेन धार्यं साध्वित्येक एवार्थः।

"साधुत्वात् सामनामानं समस्तगुणपूर्तितः। समस्तं य उपासीत नारायणमनामयम्। सर्वसाम्नां देवतेति स मुक्तः साधुधर्मभाक्" इति सामसंहितायाम्[3] ॥*॥

---

१ "चन्द्रस्तथेरितः" २ "हुपूकारस्तु जनार्दनः" इति प्र. पाठौ । ३ प्रतनकोशेष्वत्र प्रकरणसमाप्तिश्चिह्निता ।

साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥१॥ लोकेषु पञ्चविधं सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेष्वथाऽवृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनं कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽवृत्ताश्च य एतदेवं विद्वान् लोकेषु पञ्चविधं सामोपास्ते ॥२॥ वृष्टौ पञ्चविधं सामोपासीत पुरोवातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते ॥ ३ ॥ सर्वास्वप्सु पञ्चविधं सामोपासीत मेघो यत् सम्प्लवते स हिङ्कारो यद् वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनं नहाप्सु प्रैत्यप्सुमान् भवति य एतदेवं विद्वान् सर्वास्वप्सु पञ्चविधं सामोपास्ते ॥४॥ ऋतुषु पञ्चविधं सामोपासीत वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनं कल्पन्ते हास्मै

---

"नारायणाख्य उद्गीथ उद्गेयः प्रणवेन यत्। उद्गच्छन्ति यतोऽस्माद् वा वासुदेवादिमूर्तयः। प्रथमावताररूपत्वाद् वासुदेवः परः पुमान्। प्रस्तावो निधनं चापि सङ्कर्षण उदाहृतः। सङ्कर्षणो हि संहर्ता प्रद्युम्नः परमेश्वरः। हिङ्कार इति सम्प्रोक्तो हीति सृष्टिरुदीर्यते। प्रसिद्धता हि सृष्टिः स्यादनिरुद्धः परो विभुः। प्रतिहार इति प्रोक्तः स हि कार्येष्विदं जगत्। प्रति प्रति हरेन्नित्यं मूर्तिप्रतिहृतेस्तथा। ते पृथिव्यादिषु सदा तन्नामानः प्रतिष्ठिताः। पृथिवीत्यादिशब्दार्थास्ते हि मुख्यत ईरिताः। तत्सम्बन्धात् तदर्थत्वं पृथिव्यादेरमुख्यतः। प्रथनादेव सस्यादेः पृथिवीत्वमुदाहृतम्। अग्नित्वमदनाच्चैव ह्यन्तरीक्षणयोगतः। अभावाद् व्यवधानस्य त्वन्तरिक्षमितीर्यते। आदानादायुषां चैवं[1] स आदित्य उदीरितः। द्यौः क्रीडाकारणत्वाच्च तत् सर्वं हि परे हरौ" इति च। "पञ्चात्मकं यो लोकेषु सदोपास्ते हरिं परम्। ऊर्ध्वाधःसंस्थितास्तस्य पञ्चैव दश मूर्तयः। मोक्षादिकमभीष्टं यत् कल्पन्तेऽस्य सदैव हि" इति च ॥*॥ "पञ्चरूपं तु यो विष्णुं पुरोवातादिषु स्थितम्। उपास्ते वृष्टिरस्मै स्याद् वर्षयत्यस्य मुक्तिगान्। सर्वभोगांश्च भगवान् पञ्चरूपी जनार्दनः" इति च ॥*॥ "अप्सु पञ्चविधोपासी यो नारायणवान् भवेत्। नचास्य मृतिरप्सु स्यादप्सुषद् भगवान् हरिः ॥*॥ इति च। अप्सुस्थितनारायणवान् मुक्तो भवतीत्यर्थः। अपः सूत इत्यप्सूर्भगवान्। दीर्घलोपेनाप्सुमानिति वा। ॥*॥ हेमन्तशिशिरयोरैक्येन पञ्चत्वम्।

---

१ "आयुषश्चैव" इति प्र. पाठः।

ऋतव ऋतुमान् भवति य एतदेवं विद्वानृतुषु पञ्चविधं सामोपास्ते ॥५॥ पशुषु पञ्चविधं सामोपासीताजा हिङ्कारोऽवयः प्रस्तावो गाव उद्‌गीथोऽश्वाः प्रतिहारः पुरुषो निधनं भवन्ति हास्य पशवः पशुमान् भवति य एतदेवं विद्वान् पशुषु पञ्चविधं सामोपास्ते ॥६॥ प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिङ्कारो वाक् प्रस्तावश्चक्षुरुद्‌गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयांसि वा एतानि परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥ ॥७॥ अथ सप्तविधस्य वाचि सप्तविधं सामोपासीत यत् किञ्च वाचो हुमिति स हिङ्कारो यत् प्रेति स प्रस्तावो यदेति स आदिर्यदुदिति स उद्‌गीथो यत् प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनं दुग्धेऽस्मै वाग् दोहं

"ऋतुनामानमृतुगमृतत्वादृतुनामकम् । इत्युपासीत यो विष्णुं पञ्चात्मानममुष्य हि । मोक्षादीन् कल्पते चास्य ऋतुसंस्थो जनार्दनः । रक्ष्यत्वात् तेन तद्वांश्च सदैव स्यादुपासकः" इति च । "वासस्य सुखकारित्वाद्[1] वसन्तः पुरुषोत्तमः । नीरादेर्गरणाद् ग्रीष्मो वर्षणाद् वर्ष उच्यते । शं रातीति शरत् प्रोक्तो हेमन्तो हिमकारणात्" इति च । ॥*॥ "पालनात् सुखरूपत्वात् पशुनामा जनार्दनः । मुक्तस्तद्वान् भवत्येव पशुषूपासको हरेः" इति च । "यज्ञोदजनिहेतुत्वादजस्थो[2] भगवानजः । अविस्थस्त्ववि-रेवोक्त ऊर्णया शीततोऽवनात् । गौश्च सद्गतिहेतुत्वाद् गोस्थः स पुरुषोत्तमः । अश्वश्चैवाऽशुगन्तृत्वात् पुरुषः पूर्तिहेतुतः" इति च ।

भवन्ति हास्य पशव इति प्रसिद्धपशव एव । अजा इत्यादिबहुवचनं बहुरूपत्वाद् भगवतः ॥*॥

"परस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात् प्रोक्तं परोवरीयकम्[3] । परोवरीयांस्येतानि विष्णो रूपाणि सर्वशः । तेषां विशेषो नैवास्ति सदा तानि समानि हि । अत्युत्तमोत्तमान्येतान्येतस्मात् सर्वतोऽपितु" इति च । "प्राणो नेतृत्वतो विष्णुर्वाक् सर्ववचनात् सदा । चक्षुश्च दर्शनान्नित्यं श्रोत्रं श्रवणहेतुतः । मनो मन्तृत्वतश्चास्य ह्येक एव तु पञ्चधा" इति[4] ।

परोवरीयो ब्रह्मास्य भवति सर्वापेक्षितदातृत्वात् ॥*॥

"आदिः कल्पादिहेतुत्वात् क्रोडात्मा केशवः स्वयम् । दुष्टोपद्रवकर्तृत्वान्नरसिंह उपद्रवः" इति च । "हुङ्कारसहिते वाक्ये प्रद्युम्नस्तु सदा स्थितः । आकारयुक्ते वाराहो वासुदेवः प्रसंयुते । नारायणस्तथोद्युक्ते प्रतियुक्तेऽनिरुद्धकः । उपयुक्ते नृसिंहश्च

१ "सुखकारित्वात्" इति प्र. पाठः । २ "यज्ञेनाञ्चनहेतुत्वात्" इति प्र. पाठः । यज्ञोदजनिहेतुत्वात् इति पाठे इज्यतेऽनेनेति यज्ञहेतुत्वादजः । इकारस्याकारः । उद्गमय्य मोक्षं प्रापय्य न जायतेऽनेनेत्यजनिहेतुत्वाद् वा अजः । ३ "पारोवरीयकम्" ४ "इति च" इति प्र. पाठौ ।

यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान् वाचि सप्तविधं सामोपास्ते ॥८॥ अथ खल्वमुमादित्यं सप्तविधं सामोपासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात् तस्य यत् पुरोदयात् स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात् ते हिङ्कुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नोऽथ यत् प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात् ते प्रस्तुतिकामाः प्रशंसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नोऽथ यत् सङ्गववेलायां स आदिस्तदस्य वयांस्यन्वायत्तानि तस्मात् तान्यन्तरिक्षेऽनारम्बणान्यादायाऽत्मानं परिपतन्त्यादिभाजिनो ह्येतस्य साम्नोऽथ यत् सम्प्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात् ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नोऽथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात् स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात् ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नोऽथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवस्तदस्याऽरण्या अन्वायत्तास्तस्मात् ते पुरुषं दृष्ट्वा कक्षं श्वभ्रमित्युपद्रवन्त्युपद्रव-

---

नीति सङ्कर्षणस्तथा। अभावे यावदेते स्युस्तावत् तद्दैवतं स्मृतम्। एवं सप्तविधं विष्णुं य उपास्ते परं विभुम्[1]। वाङ्नामा भगवांस्तस्य भवेत् सर्वार्थदोहकृत्" इति च ॥*॥ "आदित्यस्थं परं विष्णुं ध्यायेदादित्यनामकम्। सप्तरूपं साम चासौ सर्वदा समरूपतः। सर्वेषां मां प्रतीत्येव दृष्टिसाम्याच्च साम सः। दृष्टिसाम्यं मण्डलस्य विष्णुस्तस्य च कारणम्। तस्मिन्निमानि भूतानि सर्वाण्येवाऽश्रितानि हि। उदयात् पूर्वमेवासौ भवेत् प्रद्युम्ननामकः। पश्वाधारस्तदात्माऽसौ वासुदेवस्तथोदये। आश्रयश्च नृणां तत्र वराहः सङ्गवे तु सः। तत्र पक्ष्याश्रयो विष्णुस्तथा नारायणाभिधः। मध्यन्दिने स आधारो देवानां च ततः परम्। अनिरुद्धः स आधारो गर्भस्थानां सदैव हि। ततः परं नृसिंहाख्यः स आरण्याश्रयो मतः। अथास्तमितवेलायां स सङ्कर्षण ईरितः। आश्रयः स पितॄणां च सप्तात्मकमुपास्य तम्। प्राप्नोति परमं स्थानं मुक्तः संसारसागरात्" इति च।

हिङ्कारनामानमाश्रितत्वाद्धिङ्कुर्वन्ति। प्रस्तावाश्रयात्[2] प्रस्तुतिकामाः प्रारम्भकामाः प्रशंसाकामाश्च। प्रारम्भावतारत्वात् प्रशंसादेवतात्वाच्च तस्य। सर्वाधारत्वाद् वराहस्य तदाधाराणां पक्षिणामनाधारेणैव गमनम्। नारायणनामार्थत्वेन सर्वगुणपूर्त्योपासनात्[3] सर्वोत्तमा देवाः। इतरमूर्तीनामपि सर्वगुणपूर्त्योपासने नारायणोपासनमेव भवति। सर्वगुणपूर्त्यर्थत्वान्नारायणशब्दस्य। अनिरुद्धाश्रयत्वाद् गर्भाणां पितुः शरीरादन्यत्र प्रतिहृता अपि न विनश्यन्ति। वर्धन्ते च तत्रैव। अन्यद्धि

---

१ "सदा विभुम्" २ "प्रस्तावाश्रयत्वात्" ३ "उपासनादेव" इति प्र. पाठाः।

भाजिनो ह्येतस्य साम्नोऽथ यत् प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्ता-स्तस्मात् तान् निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यं सप्तविधं सामोपास्ते ॥९॥*॥ इति प्रथमः खण्डः ॥*॥

अथ खल्वात्मसंमितमतिमृत्यु सप्तविधं सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत् सममादिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत् सममुद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमति-शिष्यते त्र्यक्षरं तत् समं निधनमिति त्र्यक्षरं तत् सममेव भवति तानि हवा एतानि द्वाविंशतिरक्षराण्येकविंशत्याऽऽदित्यमाप्नोत्येकविंशो वा इतोऽसावा-दित्यो द्वाविंशेन परमादित्याज्जयति तन्नाकं तद् विशोकमाप्नोतीहाऽदित्यस्य जयं परो हास्याऽदित्यजयाज्जयो भवति स य एतदेवं विद्वानात्मसंमितमतिमृत्यु

---

भुक्तं जीर्यत एव । "धाता गर्भं दधातु ते" इति च श्रुतिः । धाता हि भगवाननिरुद्धः । विष्णु स्त्वष्टा प्रजापतिर्धातेति च चतुर्मूर्तयो[1] ह्युच्यन्ते ।

"योनिक्लृप्तिर्वासुदेवाद् रूपं सङ्कर्षणाद् भवेत्। आसेककर्म प्रद्युम्नादनिरुद्धाच्च धारणम्" इति च । "व्याप्तेर्विष्णुर्वासुदेवस्त्वष्टा त्वेषाद् द्वितीयकः। प्रजापतिः प्रजा-पातान्निषेकः पातनं ततः। प्रजापतिस्तु प्रद्युम्नो धाता धारणकर्मतः । अनिरुद्ध इति प्रोक्तः कृष्णरामौ तथाश्विनौ" इति च । "कक्षश्वभ्रे नृसिंहस्य सदाऽवस्थितिकार-णात् । द्रवन्ति कक्षश्वभ्राभ्यां तदज्ञानेऽपि रक्षणात् । मृगा भीता यतस्तेषां नृसिंहः स्वाश्रयः[2] सदा । पितॄणामाश्रयो यस्मात् सङ्कर्षण उदाहृतः । अतस्तान् प्रति पिण्डादीन् निदधत्यज्ञका अपि । अन्यथा तन्मृतानां तु कुत एवोपतिष्ठति" इति च । "न रूपाणां विशेषोऽस्ति गुणतो नामतोऽपि वा । तथाऽपि तत् प्रियं नाम नारायण इति स ह । विशेषतः समस्तानां नाम्नां तस्यार्थ एव तु । विज्ञायते गुणैः पूर्तिर्नामसाम्यं तदा[3] तथा" इति च । "नाम्नो नारायणाख्यस्य गुणैः पूर्तिं हि देवताः । विज्ञायार्थमुपास्यैव सर्वा-धिक्यमर्थापिरे[4]" इति च ॥*॥ "यस्यान्यः सदृशो नास्ति स्वरूपाणि समानि च । स आत्मसंमितो विष्णुरतिमृत्युरमृत्युतः । प्रद्युम्नादिस्वरूपेण स विष्णुः सप्तधा स्थितः। समानि तानि सर्वाणि ज्ञानानन्दबलैस्तथा । ज्ञानादित्रयवाचीनि त्र्यक्षराण्यपि सर्वशः । हिङ्कारादीनि नामानि सर्वेषामपि सर्वशः । आदिनाम्नः प्रकारस्तु योज्यः स्यात् प्रति-हारतः । तेन त्र्यक्षरमेव स्यान्नामद्वयमपि प्रभोः । उपद्रवे तु वःकारो यद्यपि व्यतिरि-च्यते । नाम नारायणस्यैव सोऽपि क्षीराब्धिशायिनः। व्यञ्जनस्वरसर्गैस्तु सोऽपि ज्ञानादिवाचकः । त्रिवर्णत्वात् समः सोऽपि ज्ञानाद्यैः पुरुषोत्तमः । वःकारार्थपरिज्ञानात्

---

१ "इति चतुर्मूर्तयः" २ "नृसिंहस्त्वाश्रयः" ३ "तदाऽथवा" ४ "अवापिरे" इति प्र. पाठाः ।

सप्तविधं सामोपास्ते [सामोपास्ते] ॥१॥ मनो हिङ्कारो वाक् प्रस्तावश्चक्षु-रुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद् गायत्रं प्राणेषु प्रोतं स य एवमेतद् गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या महामनाः स्यात् तद् व्रतम् ॥२॥ अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनं संशाम्यति तन्निधनं एतद् रथन्तरमग्नौ प्रोतं स य एवमेतद् रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या'न प्रत्यङ् अग्निमाचामेन्न

---

प्राप्योऽब्धिशयनः प्रभुः। एकविंशार्णविज्ञानात् प्राप्योऽसौ सूर्यमण्डले। स एव भगवान् विष्णुर्द्वाविंशद्रूपवान् यतः। तान्येव सप्तरूपाणि विभिद्यन्ते त्रिधा त्रिधा। एकः पयोब्धिशयन इति द्वाविंशतिः प्रभोः। प्रद्युम्नाद्यास्तु चत्वारो द्विषण्मासेषु संस्थिताः। त्रिशस्त्रिशः केशवाद्या वसन्तादिषु पञ्चमः। रूपद्वयं च षष्ठस्य[1] स्थितं मत्स्यादिपञ्चकम्। तृतीयं पृथिवीसंस्थं जामदग्न्याख्यमेव तत्। अन्तरिक्षद्युसूर्येषु सप्तमस्य त्रिधात्मनः[2]। रामः कृष्णः कल्किरिति तज्ज्ञानात् तान्यवाप्य च। द्वाविंशेन पयोब्धिस्थं प्राप्यते रूपमक्षरम्। एतद् द्वाविंशकं रूपं नाकं चासुखवर्जनात्। पूर्णानन्द-स्वरूपत्वाद् विशोकं शोकनाशनात्" इति सामसंहितायाम्।

प्राप्नोतीहाऽदित्यस्य जयम्। इह पृथिव्यादिषु स्थितभगवत्प्राप्तावप्यादित्यस्थ एव प्राप्यते। ऐक्यात्। परो हास्याऽदित्यजयाज्जयो भवति। आदित्यस्थस्याऽदित्यनाम्नो भगवतः प्राप्त्या परो जयो रूपान्तरप्राप्तिरपि भवति।

स्वरूपमेकं प्राप्तस्तु विष्णोः स्यात् सर्वरूपगः। ऐक्यात् तथाऽपि सम्प्राप्तिर्बहूपास्त्या सुखाधिका[3]" इति च।

जयो नाम प्राप्तिरेव। "धनजिते स्वर्जिते[4]" इत्यादिवत्। केशवादिरूपेण ललाटादिषु स्थितेरित एकविंश इत्युच्यते।

"चित्रादियोगदातृत्वान्मासनामा स्वयं हरिः। लोकः प्रकाशरूपत्वादादित्यश्चादनादपाम्" इति च[5] ॥*॥ "प्राणसंस्थहरौ[6] प्रोतं गायत्रं साम सर्वदा। तद्वाचकं नियम्यं चेत्यतः प्रोतमितीर्यते। प्राणस्थविष्णोः सामीप्यात् तत्स्थमेतदितीर्यते। क्वचिन्निर्देशसामीप्याद् विष्णोरेतदितीर्यते" इति च। "प्राणस्थविष्णुलाळ्यत्वात्[7] प्राणीत्येवाभिधीयते। मोक्षस्तु सर्वमायुः स्यान्नित्यत्वाज्ज्योक् समस्तवित्" इति च ॥*॥ "मन्थनादिस्थितं

---

१ "रूपद्वयं तु षष्ठस्य" २ "त्रिधा तनुः" ३ "सुखाधिकी(?)" ४ "धनजिते स्वर्जिते सत्राजिते इत्यादिवत्" इति प्र. पाठाः। ५ प्राचीनकोशेष्वत्र प्रकरणसमाप्तिश्चिह्निता। ६ "प्राणसंस्थे हरौ" ७ "विष्णुलाल्यत्वात्" इति प्र. पाठौ।

निष्ठीवेत् तद् व्रतम् ॥३॥ उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रति स्त्रिया सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद् वामदेव्यं मिथुने प्रोतं स य एवमेतद् वामदेव्यं मिथुने प्रोतं वेद मिथुनी भवति मिथुनान्मिथुनात् प्रजायते सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न काञ्चन परिहरेत् तद् व्रतम् ॥४॥ उद्यन् हिङ्कार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद् बृहदादित्ये प्रोतं स य एवमेतद् बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या तपन्तं न निन्देत् तद् व्रतम् ॥५॥ अभ्राणि सम्प्लवन्ते स हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद् वैरूपं पर्जन्ये प्रोतं स य एवमेतद् वैरूपं पर्जन्ये प्रोतं वेद विरूपान् सरूपांश्च पशूनवरुन्धे सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या वर्षन्तं न निन्देत् तद् व्रतम् ॥६॥ वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनमेतद् वैराजमृतुषु प्रोतं स य एवमेतद् वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ऋतून् न निन्देत् तद् व्रतम् ॥७॥ पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकी भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या लोकान् न निन्देत् तद् व्रतम् ॥८॥ अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथ अश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः स य एवमेता रेवत्यः

---

यस्तु तन्नामानं हरिं परम्। तत्तत्क्रियैकहेतुत्वाद् योऽग्नौ ध्यायेज्जनार्दनम्। रथन्तराश्रयं पञ्चरूपं स च विमुच्यते" इति च ॥*॥ "मिथुनस्थपञ्चरूपं तु ध्यात्वैवं पुरुषोत्तमम्। अत्यागी च स्वभार्याणां मुच्यते नात्र संशयः" इति च।

मिथो नयतीति मिथुनं भगवान् ॥*॥

---

१ "मिथुनस्थं पञ्चरूपं ध्यात्वैव" इति प्र. पाठः।

पशुषु प्रोता वेद पशुमान् भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या पशून् न निन्देत् तद् व्रतम् ॥९॥ लोम हिङ्कारस्त्वक् प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद् यज्ञा-यज्ञीयमङ्गेषु प्रोतं स य एवमेतद् यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति नाङ्गेषु विहूर्च्छति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात् तद् व्रतं मज्ज्ञु नाश्नीयादिति वा ॥१०॥अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद् राजनं देवतासु प्रोतं स य एवमेतद् राजनं देवतासु प्रोतं वेदैतासामेव देवतानां सलोकतां सार्ष्टितां सायुज्यं गच्छति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ब्राह्मणान् न निन्देत् तद् व्रतम् ॥११॥ त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयांसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत् साम सर्वस्मिन् प्रोतं स य एवमेतत् साम सर्वस्मिन् प्रोतं वेद सर्वं ह भवति ॥१२॥तदेष श्लोको यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति । यस्तद् वेद स वेद सर्वं सर्वा दिशो बलिमस्मै हरन्ति । सर्वमस्मीत्युपासीत तद् व्रतं तद् व्रतम् ॥१३॥

---

"आदित्यनाम्नि पञ्चात्मन्यभिध्याते जनार्दने । पर्जन्यनाम्नि चत्वार्ख्ये लोकाख्ये पशु-संज्ञके । अङ्गाख्ये देवताख्ये च सर्वाख्ये च प्रतिष्ठितम् । बृहदाद्यं च यो वेद मुच्यते नात्र संशयः । समुद्रेकात् समुद्रस्तु देशनाद् दिश उच्यते । लोपकत्वाल्लोम च स्यात् तवोरूपस्त्वगुच्यते । मादनात् साररूपत्वान्मांसोऽस्थि त्वासनात् स्थिरम् । मदस्य जननान्मज्जा सोऽङ्गमन्तिगतत्वतः। वायुर्ज्ञानात् तथाऽऽयुष्ट्वान्नक्षत्रं च स्वतन्त्रतः। चन्द्रमाः परमानन्दात् त्रैविद्यो ज्ञानरूपतः। वयांसि व्ययनाच्चैव वीत्याकाशस्तथोच्यते। तत्रायनाद् वयः प्रोक्तो मरीचिर्मितरुक्त्वतः। सर्पः सर्पणहेतुत्वाद् गन्धर्वो गोधरत्वतः। पिता स सृष्टिहेतुत्वात् सर्वं पूर्णगुणत्वतः । एतैर्नामभिरुद्दिष्टो भगवान् पुरुषोत्तमः" इति च । "यादृश्येवोन्नतिर्योग्या तस्याः सर्वात्मनाऽऽयतिः । सर्वभावस्तु विज्ञेयो नतु सर्वस्वरूपता " इति च ।

नच सर्वस्वरूपता पुरुषार्थः । नरकित्वादेरपि[1] प्राप्तेः । नचार्थान्तरकल्पना युक्ता । प्रमाणाभावात् ।

---

१ "नारकित्वादेरपि" इति प्र. पाठः ।

"असनान्मितिरूपत्वादस्मीत्युक्तः परो हरिः। तं सर्व इत्युपासीत पूर्णता सर्वता स्मृता"
इति च।

सर्वमस्मीत्युत्तमपुरुषत्वे "तेभ्यो न ज्यायः परमन्यदस्ति" इति ज्यायःपरशब्दौ व्यर्थौ। अन्यस्यैवाभावात्। अतस्ततोऽन्यदस्तीति सिद्धम्। अतस्ततोऽन्यत् परमज्याय एव नास्ति। ज्यायो लक्ष्मीर्विद्यते। परमज्यायस्तु भगवानेव। जीवैक्याङ्गीकारे "यस्तद् वेद" इति तच्छब्दोऽप्ययुक्तः। तदा स्वात्मानं वेदेत्येव स्यात्। नच प्रसिद्धभेदस्यानुवादः[1]। श्रुतिं विना तत्स्वरूपस्यैवासिद्धेः। तद्भेदस्यातिशयेनासिद्धिः। ऐक्य ईश्वरस्य स्वज्ञानमस्तीति न तद्रूपस्य जीवस्याज्ञानादिकं युज्यते। औपाधिकभेदाङ्गीकारेऽप्युपाधिरुभयोरैक्यादुभयोरप्यज्ञत्वं कुर्यात्। उपाधिनिमित्तदोषाश्चोभयोरपि स्युः। उपाधिसम्बन्धस्य समत्वात्। उपाधिसम्बन्धस्यास्मिन्नन्यथा तस्मिन्नन्यथेति विशेषार्थमयमसाविति भेदस्योपाधिं विना स्वत एवापेक्षितत्वात्। अतः स्वतो भिन्नस्यैवोपाधिना विशेषो भवति।

"यस्तु भिन्नः स्वतः खादिस्तस्य भेदो ह्यबुद्धिनाम्। उपाधिभिर्ज्ञाप्य एव नतु भेदं स्वयं सृजेत्। उपाधिरप्यभिन्नस्य भेदं साधयितुं क्वचित्। न क्षमः सिद्धभेदस्य ज्ञापकः स्यादबुद्धिनाम्। आकाशा अप्यतस्त्वेते ह्यनन्ता अप्कणादिवत्" इति ब्रह्मतर्के।

अतो न जीवेशाभेदः।

"नतु देवः स्वयं भूत्वा देवदेवं समर्चयेत्। समानव्यवहारे हि न पूज्यः पूजको भवेत्" इति च परमसंहितायाम्[2]। "अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात्", "प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ", "अन्यदेव तद् विदितादथो अविदितादधि", "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत् तत् पश्यसि तद् वद", "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति", "इदं ज्ञानमपाश्रित्य[3] मम साधर्म्यमागताः", "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता", "आधिपत्यमृते चैव भोगेन विषयेण च। आनन्दादीनृते मुक्ताः सर्वे ते ब्रह्मणः समाः" इत्यादेश्च। "प्रद्युम्नादीनि रूपाणि त्रीणि त्रीण्येव पञ्च च। ऋगादिस्थानभेदेन नित्याभिन्नानि चेशनात्" इति सामसंहितायाम्।

दृष्टवस्तुनो मिथ्यात्वाङ्गीकारे च युक्त्यपेक्षा। न तु सत्यत्वे—

"दृष्टस्य सत्यतायां तु युक्तिर्वाऽयुक्तिरेव वा। भूषणं तस्य मिथ्यात्वे युक्त्यभावोऽतिदूषणम्। युक्तिश्च दोष एव स्याद् बलवन्मानवर्जिता" इति ब्रह्मतर्के।

नच शून्यत्वमिथ्यात्वयोः कश्चिद् विशेषः। तत्प्रमाणाभावात्। अतः सत्य एव भेदः। नच कदाचिज्जगत्[4] नासीदस्ति भविष्यतीति बुद्ध्यभावे व्यावहारिकसत्यमित्यत्रास्माकं विरोधः। तद्भावे च न शून्याद् विशेषः। "सत्यमेनमनु विश्वे मदन्ति" इत्यादिश्रुतेश्च सत्यो भेदः।

---

१ "प्रसिद्धभेदानुवादः" २ "इति परमसंहितायाम्" ३ "उपाश्रित्य" ४ "कदाचित् कस्यापि" इति प्र.पाठाः

विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य

---

"प्रपञ्चो यदि विद्येत निवर्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थतः।
विकल्पो विनिवर्तेत कल्पितो यदि केनचित्। उपदेशादयं वादोऽज्ञाते द्वैतं न विद्यते"
इत्यादिश्रुतेश्च।

प्रपञ्चो भेदः यदि विद्येत भवेत उत्पद्येत तर्हि निवर्तेत। अतो न जीवेश्वरादिभेद उत्पद्यते। किन्तु नित्य एव। अतो मायया भगवज्ज्ञानेन[१] मातं रतं च मात्रम्। भगवान् जानाति रमते चास्मिन् भेद इति। तच्च भगवद्रूपमद्वैतम्। परमार्थो भगवान्। तद्रूपेणाद्वैतम्। यदद्वैतं नामोच्यते तत् परमार्थभगवदपेक्षयेत्यर्थः। स्वगतभेदो भगवति नास्तीत्युक्तम्। नच कल्पनामात्रो भेदः। यदि केनचित् कल्पितो विकल्पस्तथाऽपि विनिवर्तेत[२]। तस्मादुपदेशादयमेव वादः। केनापि तत्प्रसादं[३] विनाऽविज्ञातत्वादज्ञातो भगवांस्तद्गतो भेदो न विद्यत इति।

"जीवेश्वरगतो जीवेष्वथ जीवजडात्मनोः। जडेशयोर्जडेष्वेवं पञ्चभेदः प्रपञ्चकः। प्रकृष्ट-
मोक्षहेतुत्वात् तज्ज्ञाने[४] प्रेति कथ्यते। प्रकृष्टपञ्चकत्वाद् वा प्रपञ्चोऽयं प्रकीर्तितः।
यद्ययं सादिरेव स्यान्निवर्तेत कदाचन। न निवर्तेते यतस्तेन नायं सादिर्भवेत् क्वचित्।
मायेति विष्णुविज्ञानं तन्मितत्वाच्च न क्वचित्। भ्रान्तत्वमस्य यद् विष्णोर्नैव भ्रान्तिः
कदाचन[५]। रमते चात्र यद् विष्णुर्नहि भ्रान्तौ रमेद्धरिः। परमार्थे हरौ नैव भेदोऽस्ति
जडजीववत्। यद्ययं कल्पितो भेदः कस्मान्नैव निवर्तते। तस्माद्भूतभविष्याख्यभव-
दाख्यपराभिधाः। तदन्ये चैक एवास्मिन्नोङ्काराख्ये जनार्दने। अज्ञातनामके तस्मिन् न
भेदोऽस्ति कथञ्चन" इति ब्रह्मतर्के।

"विदिँ[६] कादाचित्कस्वरूपलाभे" इति च धातुः। भिद्येतेतिवद् विद्येतेति शब्दः। परमार्थत इति विश्वतश्चक्षुरितिवत् सप्तम्यर्थे। परमार्थे द्वैताभाव एवेत्यर्थः। परमार्थः परमात्माऽद्वैत इति प्रथमार्थो वा। नहि विद्यमानं निवर्तेत इति नियमः। उत्पद्यमानं हि प्रायो निवर्तते। जीवेश्वरप्रकृत्यादिकं बहुलं हि विद्यमानं न निवर्तते। नच कल्पितो विकल्प इति पक्षे "कल्पितो यदि" इति यदिशब्दो युज्यते। नच "निवर्तेत न संशयः", "विकल्पो विनिवर्तेत कल्पितो यदि" इत्यादिनाऽनिष्टापादनरूपः शब्दो युज्यते। कल्पितत्वं चेच्छ्रुतेरभिप्रायः अविद्यमानोऽयं प्रपञ्चो निवर्तते[७] कल्पितो विकल्पो निवर्तेत इत्येव शब्दः स्यात्। नतु निवर्तेतेति। अतः सत्यताविषयमिदं वाक्यम्[८]।

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्", "एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः"
इति निन्दनाच्च। "विद्याऽऽत्मनि भिदाबोधः", "जुष्टं यदा पश्यत्यन्यमीशमस्य"
इत्यादि भेदज्ञानस्य प्रशंसनाच्च।

अतोऽसनान्मितत्वाच्चास्मीति भगवन्नामैवैतत्[९] ॥*॥ सर्वदा समत्वात् साम भगवान्। तस्योद्गानप्रकारो विनर्दि। ऋषभ[१०]स्वरवन्मेघनर्दनवद् वा। तदेव वृणे। सर्वोत्तमत्वात्।

---

१ "भगवत्प्रज्ञानेन" २ "तथाऽपि निवर्तेत" ३ "तत्प्रसादेन" ४ "तज्ज्ञानं" (?) ५ "कथञ्चन" ६"विदिः" ७"विनिवर्तते" ८"सत्यतापरमिदं वाक्यं भेदस्य" इति प्र.पाठाः९प्राचीनकोशेषु अत्र प्रकरणसमाप्तिश्चिह्निता। १० "वृषभ-" इति प्र. पाठः।

मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान् सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेदमृतत्वं देवेभ्य आगायानीत्यागायेत् ॥१४॥ स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत सर्वे स्वरा इन्द्रस्याऽत्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयादथ यद्येनमूष्मसूपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनं स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात् सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेना-

---

"विष्णोः स्वरो वृषभवन्मेघनादवदेव वा। स्त्रीपशुस्वरवद् वह्नेर्गम्भीरोऽनुपमो विभोः। ब्रह्मणस्त्वथ सोमस्य साक्षाद् घण्टानिनादवत्। मृदुमेघस्वरो वायोरिन्द्रस्य स्तनयित्नुवत्। बृहस्पतेः क्रौञ्चवच्च वरुणस्य तु विस्वरः। एकस्य पादवर्षस्य स्वरो विष्णोरुदाहृतः। वायोर्विंशतिवर्षस्य ब्रह्मणस्तु तदन्तरा" इति च। "गायेदेतैः स्वरैस्तस्माद् यथाशक्ति न विस्वरम्। अधिकारी सदौद्गात्रे मुख्यतः प्राण एव यत्। अतो मोक्षादिदाने स देवादीनां क्षमो भवेत्। अन्येषां स ददातीह मद्धृदिस्थ इति स्मृतिः। कार्या हि नान्यथा कुर्यादवमन्ताऽन्यथा भवेत्। देवानां मोक्षदानादौ नहि मानुष ईश्वरः। अतः प्राणो हृदिस्थो मे ददातीति स्मृतिर्भवेत्। सङ्कल्पोक्त्यादिकर्ता च प्राण एव यतः सदा। आगायानीति युज्येत तस्मात् तस्मिन् हि मुख्यतः। आत्मेति भगवान् विष्णुः प्राणस्थः पुरुषोत्तमः। तस्मा अन्नं ह्यर्थतस्तु प्राणस्यान्नभुजिर्भवेत्। प्राणस्याप्यमृतत्वं हि मुख्यमेव फलं यतः। देवान्तर्भावतो विष्णोर्नामृतत्वं क्वचाऽदिमत्। इन्द्रे बलं ददानीति स्वरान् घोषबलात्मकान्। ब्रूयादग्रस्तानिरस्तानूष्मणः स्पर्शानपि। समस्तान् बलदानार्थमिन्द्रे चैव प्रजापतेः। विष्णोः स्वात्मानमेवाहमर्पये मृत्युवर्जितान्। मोक्षयोग्यान् करिष्यामीत्येवं स प्राण एव तु। कुर्यादन्यस्तु मत्स्थस्तु प्राण एवेदृशाक्षमः[1]। करोतीति स्मरेन्नित्यं नान्यथा तु कथञ्चन। देवावमन्ता हि तमो यात्यसंशयतो यतः। अत इन्द्रं प्रजापाख्यं विष्णुं मृत्युं च सर्वदा। शरणं गतोऽहमितिवद्[2] ध्यायेत् सर्वत्र सर्वदा। ऐश्वर्यादिन्द्रनामा तु वायुः स्वरपतिः सदा। ऊष्माधिपस्तु भगवान् विष्णुरेव प्रजापतिः। मृत्युनामा तु संहाराद् रुद्रः स्पर्शाधिपः स्मृतः। मानुषाणां तु शरणमितरेषां तु वायुतः। वायोस्तु बलदानाद्यं मोक्षदानादिकं हरेः। यस्माद् वायुपदे

---

१ "ईदृशः क्षमः" २ "इति च" इति प्र. पाठौ।

नभिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥१५॥ त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत् तामभ्यतपत् तस्यास्तप्यमानाया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति ॥१६॥ तान्यभ्यतपत् तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत् तद् यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णोङ्कार एवेदं

---

योग्या बहवस्त्विन्द्रनामकाः। अत इन्द्रे ददानीति स्मृतिः प्राणस्य युज्यते" इति सामसंहितायाम्। "सर्वोपद्रवकर्तॄणामसुराणां कुबुद्धिनाम्। उपालम्भे कृते युक्तं विष्णुस्त्वां प्रतिपेक्ष्यति। रुद्रस्त्वां धक्ष्यतीत्यादि नान्यथा तु कथञ्चन" इति च।

मृत्योः सकाशादात्मानं परिहराणीति।

"ब्रह्मा प्रजापतिश्चेति विष्णुरन्यं प्रबोधयन्। अथेन्द्रनामा वायुश्च परेषां बोधको यदा" इति च।

बृंहयति प्रजाः पाति इदं रातीति व्युत्पत्तिभिः ॥*॥

"सर्वधर्मैः पुण्यलोको ब्रह्मज्ञानाद् विमुच्यते। ओङ्कारो ब्रह्मणो नाम सर्ववागात्मकश्च सः। व्याख्यानत्वात्[1] सर्ववाचां सर्ववागात्मता भवेत्। इदं तु प्रस्तुतत्वात् स सर्वं चाप्यर्थपूर्णतः। सर्वशब्दान्वितत्वाच्च न लिङ्गव्यत्ययो भवेत्। आधिक्यं चैव सर्वत्वं प्रस्तुतं तद् यथेति तत्" इति च। "अकाराद्याः क्रमेणैव भूरादेः साररूपिणः। अस्मादयं सार इति ज्ञानमेवाभितापनम्। सम्प्रस्रावश्च तद्दृष्टिर्ब्रह्मणः परमस्य हि। नित्यज्ञानोऽपि भगवान् लीलयाऽचीक्लृपद् यदा। तदाऽभितापशब्दोऽयं वर्तते परमात्मनि" इति च।

तपःशब्देनैव यतिधर्मश्चोक्तः।

"सर्वेषामाश्रमस्थानामज्ञानां पुण्यलोकता। अपरोक्षदृशां विष्णोरमृतत्वं नचान्यथा" इति च। "यज्ञाध्ययनदानैस्तु गृही स्यात् सोमलोकगः। यतयस्तपसा सूर्यं चत्वारोऽपि विशेषतः। गच्छन्ति तपसैवर्षीन् वनस्था ब्रह्मचारिणः। नैष्ठिका वालखिल्यांश्च गुरुशुश्रूषयैव तु। यदि पश्यन्त्येत एव साक्षाद् देवं जनार्दनम्। अमृतत्वं तदा यान्ति नान्यथा तु कथञ्चन" इति च।

नच संन्यासमात्रेणामृतत्वम्।

"तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति श्रुतेः। "विद्यैव तु निर्धारणात्" इति च भगवद्वचनम्[2]। "न रोधयति मां धर्मो न साङ्ख्यं योग उद्धव। न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा" इत्यादि च[3]। "नच संन्यसनादेव

---

१ "तद्व्याख्यात्वात्" २ "इति भगवद्वचनम्" ३ "इति च" इति प्र. पाठाः।

सर्वमोङ्कार एवेदं सर्वम् ॥१७॥ ब्रह्मवादिनो वदन्ति यद् वसूनां प्रातःसवनं रुद्राणां माध्यन्दिनं सवनमादित्यानां विश्वेषां च देवानां तृतीयं सवनं क्व तर्हि यजमानस्य लोक इति स यस्तं न विद्यात् कथं कुर्यादथ विद्वान् कुर्यात् पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवं सामाभिगायति लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयं रा३३३३३हु३म् आ ३३ज्या३यो३आ३२१११इत्यथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्देष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनं सम्प्रयच्छन्ति पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाऽग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रं सामाभिगायति लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयं विरा३३३३३ हु३म् आ३३ज्या३यो३आ३२१११ इत्यथ जुहोति ॥१८॥ नमो वायवे अन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यन्दिनं सवनं सम्प्रयच्छन्ति पुरा तृतीयसवनस्योपाकरणाज्जघनेनाऽहवनीयस्योदङ्मुख उपविश्य स आदित्यं स वैश्वदेवं सामाभिगायति लो३कद्वार-

---

सिद्धिं समधिगच्छति" इति च। "तस्य पुत्रा दायमुपयन्ति" इत्यादेर्गृहस्थादीनामपि ज्ञानिनां मोक्षः प्रतीयते। "सर्ववर्णाश्रमाणां च ज्ञानान्मोक्षो विनिश्चितः। अन्त्यानां स्थावराणां वा तथाऽपि यतिरुत्तमः। ज्ञानद्वारो यतो न्यासो विशेषेण भविष्यति" इति च। "वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः" इति च। ॥*॥ "वसुरुद्रादितेयेषु विश्वेषु स्थितमीश्वरम्। तन्नामानं हरिं मन्त्रैर्लोकद्वारादिभिः प्रभुम्। प्रार्थयित्वा दिवं त्वज्ञो ज्ञो मोक्षं प्राप्नुयात् तथा। यजमानो नान्यथा तु लोकोऽस्य प्राप्यते वरः। राजनं पृथिवीलोके राज्यमित्युच्यते बुधैः। विराज्यमन्तरिक्षे तु स्वाराज्यं स्वर्गगं भवेत्। एतेषु मोक्षोऽपि भवेन्मानुषाणां विशेषिणाम्। श्वेतद्वीपं तथा गत्वा दृष्ट्वा विष्णुं च ते ततः। अनुज्ञाताः प्रमोदन्ते निर्दुःखास्तु धरादिषु" इति[1]। "यो देवानां नामधा एक एव" इति श्रुतेश्च भगवत एव वस्वादिनामानि। "त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते" इति वचनाच्च भगवानेव प्रार्थ्यः।

भगवत्स्वरूपस्य सम्यगपरिज्ञानाद् रागाच्च तेषामन्तवत्फलत्वम्।

---

१ "इति च" इति प्र. पाठः।

मपावा३र्णू३ ३ पश्येम त्वा वयं स्वारा३ ३ ३ ३ ३ हु३म् आ३ ३ज्या३यो३आ३ २ १ १ १ इत्यादित्यमथ वैश्वदेवं लो३कद्वारमपावा३र्णू३ ३ पश्येम त्वा वयं साम्रा३३३३३-हु३म् आ३३ज्या३यो३आ३२१११ इत्यथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दतैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मा आदित्याश्च विश्वे च देवास्तृतीयं सवनं सम्प्रयच्छन्त्येष हवै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ॥१९॥*॥ इति द्वितीयः खण्डः ॥*॥

इति श्रीच्छन्दोगोपनिषदि द्वितीयोऽध्यायः

---

"नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते","गतागतं कामकामा लभन्ते"इति वचनात्। "सर्वोत्तमत्वस्याज्ञानाद् विष्णोरन्धं तमो भवेत्। तद्द्वेषात् किमु वक्तव्यं ब्रह्मादिद्वेषतोऽपि वा। तारतम्यापरिज्ञानादनुत्थानं तमो भवेत्। अपराधकृतेस्तेषां निरयं त्वेव गच्छति। पूजाया अकृतेस्तेषां न वर्णेषु जनिर्भवेत्। सम्यक् कर्मानुष्ठानात् स्वर्गं नैवोपगच्छति। अपरोक्षदृशेरौन्यान्मोक्षं नैवोपगच्छति" इति च। "पूर्वपूर्वगुणैर्दोषा न शक्ता उत्तरोत्तराः। स्थानद्वयोत्तरे शक्ता मोक्षो नानपरोक्षिणः। विरुद्धरागिणां नैव ह्यपरोक्षदृशिर्भवेत्। यावद् रागविनाशः स्याद् विरक्तो भक्तिसंयुतः। सर्वदैवाप्रमत्तश्च पश्येद् देवं[1] हरिं परम्। अविस्मृतिः सदा विष्णोरन्यथाज्ञानवर्जनम्। शास्त्राभ्यासः सदोद्योगाच्छ्रवणाच्च विचारतः। निषिद्धकर्मणां त्यागः स्वधर्मस्य कृतिः सदा। अप्रमाद इति प्रोक्तः शास्त्रं वेदास्तु पञ्च च। भारतं पञ्चरात्रं च मूलरामायणं तथा। पुराणं भागवतं चैव पञ्चमो वेद उच्यते" इति च। "त्रिलोकप्राप्तिपरिघास्त्रयः सन्ति सदातनाः[2]। तेषामग्न्यादिगो विष्णुरपहन्ता स्मृतो भवेत्। मृतः सन् सुखभोगाय यत्र गच्छति तत्र ह। एकैकः परिघोऽग्रे स्याद् गते तस्मिंस्तु विष्णुना। यजमानः पृथिव्यादिलोकान् भोगाय याति हि" इति च। "यस्त्राति यज्ञमातारं यज्ञमात्रा हरिस्तु सः। तमेवं वेत्ति यो भक्तो याति स्वर्मुक्तिमेव वा[3]" इति च ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीच्छन्दोगोपनिषद्भाष्ये
द्वितीयोऽध्यायः

---

१ "पश्येदेव" २ "सनातनाः" ३ "मुक्तिमेव च" इति प्र. पाठाः।

ॐ।। असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्रास्तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋच एतमृग्वेदमभ्यतपंस्त-स्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत तद् व्यक्षरत् तदादित्य-मभितोऽश्रयत् तद् वा एतद् यदेतदादित्यस्य रोहितं रूपम् ।।१।। अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूंष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपस्तानि वा एतानि यजूंष्येतं यजुर्वेदमभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत तद् व्यक्षरत् तदादित्यमभितोऽ-श्रयत् तद् वा एतद् यदेतदादित्यस्य शुक्लं रूपम् ।।२।। अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपस्तानि वा एतानि सामान्येतं सामवेदमभ्यतपंस्तस्याभितप्तस्य यशस्तेज

---

ॐ ॥ "य आदित्यगतो विष्णुः स एव मधुनामकः । मदधिर्मध्विति प्रोक्तो मदः सुख-मिहोच्यते । अ इत्याधिक्यमुद्दिष्टं मद् ज्ञानततिरुच्यते । तद्वत्ता ततिरुद्दिष्टा तेनानुभव ईरितः । अधिकोऽनुभवो यस्य सर्वस्मादीप्सितादपि । सोऽयं मद इति प्रोक्तः सर्वं हि सुखसाधनम् । तत्पूर्णो मधुनामा स्यात् तृतीयोऽतिशयार्थकः । देवानामुपजीव्यत्वात् स देवमधुनामकः । आदित्वाच्च ततत्वाच्च[१] ज्ञानरूपत्वतस्तथा आदित्य इति सम्प्रोक्तः प्रसिद्धमधुवच्च सः । तिरोवंशादिसंयुक्तो द्युनाम्नी च द्युसंस्थिता । प्रकाशादिगुणैः श्रीस्तु वायोराश्रयरूपतः । तिरोवंश इति प्रोक्ता मध्वपूपस्तु मारुतः । तस्मिन् सन्नि-हितो विष्णुर्विशेषेण यतः सदा । सोऽन्तरिक्षमिति प्रोक्तः स्वान्तः सम्यग्घरीक्षणात् । अन्तरिक्षस्थितश्चासौ वस्वाद्या मधुकारिणः । तत्पुत्रास्तु मरीच्याद्याः सूर्यरश्मिषु संस्थिताः । तिर्यक् स्थित्वा वशे कुर्याद् यस्माद् देवी रमा हरिम् । भक्त्यैवातस्तिरो-वंशस्तिर्यक्त्वं प्रणतिः स्मृता । तिर्यक् स्थित्वा स्ववसंस्थं तु वशीकुर्याद् यतस्ततः । वंशस्तिरश्चीनोऽन्योऽपि यस्मिन्नाप्यमुपस्थितम् । सोऽपूप आप्यो भगवान् मध्वाज्यादि प्रसिद्धगम् । प्राच्यरश्मिषु संस्थस्तु स्वरतिर्मानरूपतः[२] । प्राच्यरश्मिरिति प्रोक्तो वासु-देवाभिधो हरिः । एतद् विना नालमिति नाडीत्यंश उदाहृतः । स्वरूपांशैर्विना प्राप्तुं नालं हि प्रापितांऽशिनम् । ऋग्वेदमानिनश्चैव वह्न्याद्या वसवस्त्वृचः । अर्च्यत्वात् प्रथमं चैव विशेषाद् यज्ञदेवताः । इन्द्राद्या यजुरुद्दिष्टा रुद्रा इन्द्रसहायतः[३] । इन्द्रशब्दोदितो वायुः स याज्यः सोमभुक् पुरः । स हि शङ्करपूर्वाणां रुद्राणां मुख्य एव च । सामना-मान आदित्या मासशः समभोगतः । इन्द्रो वरुण उद्दिष्टो यज्ञेषु व्रियते यतः ।

---

१ "आदित्वादाततत्वाच्च" २ "रतिशंमानरूपतः" ३ "इन्द्रसखा यतः" इति प्र. पाठाः ।

इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद् वा एतद् यदेतदादित्यस्य कृष्णं रूपम् ॥३॥ अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपस्ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद् वा एतद् यदेतदादित्यस्य परः कृष्णं रूपम् ॥४॥ अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवाऽऽदेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपस्ते वा एते गुह्या आदेशा एतद् ब्रह्माभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद् वा एतद् यदेतदादित्यस्य मध्ये क्षोभत इव ते वा रसानां रसा वेदा हि रसास्तेषामेते

---

आदित्यानामधिपतिः स हि विष्णुनियोजितः। विष्णुस्तूपास्यरूपत्वान्नोपासकगणे युतः। इतिहासपुराणानां सोमाद्या अभिमानिनः। अथर्वाङ्गिरसां चैत्राप्यथर्वाङ्गिरनामकाः। अधरं वर्तयेयुस्ते वृष्टिमङ्गरसास्तथा। मनस्त्वात् प्राणरूपत्वादथर्वाङ्गिरसस्ततः। गुह्यादेशा ब्रह्मपदे ये योग्या ब्रह्मणा सह। सर्वगुह्योपदेष्टारः सर्वेषां गुरवो हि ते। ब्रह्मेति सर्ववेदानां नामानन्तत्वतः स्मृतम्। ऋग्वेदादींस्तु ते देवा अग्न्याद्याः संव्यचारयन्। मधुब्रह्मव्यक्तिकृत्त्वात् ते वै मधुकृतः स्मृताः। ज्ञानपोषकरत्वात्तु वेदाः पुष्पाभिधाः स्मृताः। अन्यत्र मधुकृत्पोषान्नित्यत्वादमृताश्च ताः। वेदवाचः सुरैः पेया भोग्यत्वादाप ईरिताः। वेदपानं विचारश्च श्रवणं पाठ एव च। देवैर्विचारितेभ्यश्च वेदेभ्यो व्यक्ततां गताः[1]। ज्ञानानन्दस्वरूपत्वाद् यशस्तेजःस्वरूपकः। इन्द्रियं परमैश्वर्याद् वीर्यरूपश्च सर्वदा। सर्वानुग्रहशक्तित्वादन्नाद्यो बलरूपतः। रसनामा च भगवान् संस्थितः सूर्यमण्डले। व्यक्षरद् धर्ममोक्षादीन् देवानां भगवान् हरिः। ऋक् प्रोक्तो लोहिताकारो वासुदेवः परः पुमान्। स एव सूर्यलौहित्ये प्राच्यरश्मिषु च स्थितः[2]। सङ्कर्षणः शुक्लवर्णो यजुर्वेदोदितः प्रभुः। शुक्ले वर्णे च[3] सूर्यस्य दक्षरश्मिषु च स्थितः[4]। प्रद्युम्नः श्यामवर्णस्तु सामवेदोदितः प्रभुः। प्रत्यग्रश्मिषु सूर्यस्य श्यामवर्णेऽपि च स्थितः। अनिरुद्धः सुनीलश्च इतिहासपुराणयोः। अथर्ववेदे चोक्तः सम्बुद्ग्रश्मिषु संस्थितः। सुकृष्णे सूर्यरूपे च मध्ये नारायणः प्रभुः। ऊर्ध्वरश्मिषु संस्थश्च प्रोद्यदादित्यसप्रभः। महामरीचिपुञ्जेन चलतीवाचलोऽपि सन्। स वाच्यः सर्ववेदानामेवं पञ्चात्मको हरिः।

---

१ "गतः" इति प्र पाठः। गतः भगवान्। गता इति पाठे वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनारायणाः।
२ "संस्थितः" ३ "शुक्लवर्णे च" ४ "संस्थितः" इति प्र. पाठाः।

रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥५॥

वेदानां सारभूतोऽसौ वेदानां नित्यताप्रदः। अतोऽमृतानाममृतो रसानां रस एव च" इति सामसंहितायाम् ॥*॥

नचाचेतनमात्रमुपासितं पुरुषार्थप्रदानशक्तम्। "ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्" इति वाक्यशेषाच्चैतदवगम्यते। "य एतामेवं ब्रह्मोपनिषदं वेद" इति च। कथं चाचेतनोपासनं ब्रह्मादिपदप्रदं भवति?

"न वै तत्र न निम्लोच[1] नोदियाय कदाचन","सकृद् दिवा हैवास्मै भवति"इत्यादि च मुक्तस्यैव मुख्यतो युज्यते।

यशस्तेजइन्द्रियवीर्यान्नाद्यरसत्वं च भगवन्तं विना कस्य मुख्यतो युज्यते?

"तस्य नाम महद् यशः", "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैवे[2] षण्णां भग इतीरणा", "रसो वै सः", "सुखात्मकं षड्गुणविग्रहं परं हृदि स्थितं ब्रह्म निरञ्जनं स्वरुक्। ऐश्वर्यवैराग्ययशोविबोधवीर्यश्रिया पूर्णमहं प्रपद्ये" "अहं तत् तेजो रश्मीन्नारायणं पुरुषम्" इत्यादेश्च। "ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः" इति च।

नचाचेतनस्यैश्वर्यादिरूपत्वं युज्यते।

"ज्ञानात्मको भगवानैश्वर्यात्मको भगवान् शक्त्यात्मको भगवान्" इति च श्रुतिः। "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इति सर्ववेदप्रतिपाद्यत्वं भगवत उक्तं भगवता। "स सर्वनामा स च विश्वरूपः प्रसीदतां ब्रह्म महाविभूतिः"इति च। "सर्वे वेदा यत्पदमामनन्ति", "ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव", "वेदे रामायणे चैव पुराणे भारते तथा। आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते", "नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति" इत्यादेश्च।

उपनिषत्त्वाच्च विशेषतो न यत्किञ्चिदुच्यत इति वक्तुं युक्तम्—

"विष्णुरुक्तः सर्ववेदैर्मन्त्रेषु[3] तु विशेषतः। आरण्यके विशेषेण नैवान्यत् किञ्चिदुच्यते। कर्मार्थं च ब्राह्मणं स्यादमुख्यार्थविवक्षया। मुख्यतो विष्णुरेवैको ब्राह्मणेष्वपि कथ्यते। आरण्यकेष्वृते विष्णुं नैवान्यत्किञ्चिदुच्यते। सूत्रात्मा तूच्यते विष्णोस्तद्विशिष्टत्ववित्तये। कुत्रचित् तदुपास्तिश्च तस्याध्यर्द्धतनुत्वतः। तस्मिन् विष्णोरुपास्त्यर्थं नान्यथा किञ्चिदुच्यते" इति ब्रह्माण्डे। "यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवत्राणनिरोधमस्य। लीलावतारेधितकर्म[4] वा स्याद् वन्ध्यां गिरं तां बिभृयान्न धीरः। वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी। यत्र व्रजन्त्यघभिदोऽरचनानुवादाः शृण्वन्ति

१ "न निम्लोचः" इति प्र. पाठः। निम्लोचेति तु उदियायेतिवत् लिटो रूपम्। "बहुलं छन्दसि" इति साधु। परैरपि व्याख्यातृभिरयमेव श्रुतिपाठः स्वीकृतः व्याकृतश्च। २"ज्ञानविज्ञानयोश्चैव" ३"मन्त्रैरपि विशेषतः" ४ "लीलावतारैधितकर्म" इति प्र.पाठाः।

तद् यत् प्रथममममृतं तद् वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति स य एतदेवममृतं वेद ॥६॥ वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥७॥ अथ यद् द्वितीयममृतं तद् रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति स य एतदमृतं वेद ॥८॥ रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद् दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥९॥ अथ यत् तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति

---

येऽन्यविषयाः कुकथा मतिघ्नीः। यास्तु श्रुता हतभगैर्नृभिरात्तवीर्यास्तांस्तान् क्षिपन्त्यशरणेषु तमःसु हन्त" इत्यादिभगवद्वचनाच्च। "सर्वासु शाखास्वारणमावर्तयेदारणमावर्तयेदुपनिषदमावर्तयेदुपनिषदमावर्तयेत्" इयुपनिषदभ्यासस्य सतात्पर्यं विहितत्वात्। अभगवद्विषयस्य निन्दितत्वाच्च नोपनिषत्स्वन्यदुच्यते। "अभ्यसेदधियज्ञं चाप्यधिदैवं विशेषतः। अध्यात्मं तु विशेषेण यस्माद् विष्णुस्त्रिषूदितः" इति स्कान्दे। "मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्य[1] इत्यहम्। इत्यस्या हृदयं साक्षान्नान्यो मद् वेद कश्चन" इत्यादेश्च भगवदुपासना एव सर्वत्रोक्ताः॥*॥ "प्रथमामृतस्य द्रष्टारो वसवस्त्वग्निपूर्वकाः। यावत् पश्यन्ति तं विष्णुं तावत् ते नान्यभोगिनः। एतदेव विशन्त्यद्धा मोक्षे ते तत एव च। स्वेच्छयैव समुद्यन्ति मुक्ताः सन्तो बहिस्तथा। एवं द्वितीयरूपं तु शिवाद्या वायुसंश्रिताः[2]। वायोर्हिरण्यगर्भत्वात् पदद्वयमुदाहृतम्। रुद्राणामाश्रयत्वं च साध्यानामपि सर्वशः। अतो यजुर्विचारश्च सर्ववेदात्मनस्तथा। वायोरेव विचारः स्याद् ब्रह्मणोऽपि विशेषतः। उभयाश्रयः स मोक्षेऽपि वायुरेव हि सर्वदा। द्रष्टारोऽपि तृतीयस्य शक्रमुख्यादितेःसुताः। चतुर्थस्य तु सोमाद्या मरुतः पञ्चमस्य च। ऋजवो ब्रह्ममुख्या हि सुपर्णः शेष एव च। सरस्वती सुपर्णी च वारुणी साध्यनामकाः। अन्योन्यमुखता मुक्तौ ब्रह्मणां समता तथा। वाक्शेषादेर्मुखं ब्रह्मा मुक्तावपि विशेषतः। द्रष्टोभयस्यापि शिवो द्वितीयस्यान्त्यगस्य[3] च। मोक्षे त्वन्यत्र चैकस्य

---

१ "विकल्प्योऽपोह्य" इति प्र. पाठः। विकल्प्येति ल्यप्। विविधतया कल्पयित्वेति तत्त्वप्रदीपिकायां व्याख्यातत्वात्।
२ "संस्थिताः" ३ "अन्तगस्य" इति प्र.पाठौ।

त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति स य एतदेवममृतं वेदाऽदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत् पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥१०॥ अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥११॥ अथ यत् पञ्चमममृतं तत् साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न

परतः शेषभावतः। ये चैतत्पदयोग्याः स्युर्देवाः पञ्चमहागणाः। तेषामपि यदोपास्ता निश्छिद्रा मधुनामके। तदा वस्वादितां प्राप्य मुक्तिमेष्यन्त्यसंशयम्। उदेत्यास्तमयं यावद् याति भानुस्तु पर्वते। उदयास्ताद्रिमध्यस्य वसवः पतयः स्मृताः। ततश्चास्तमयाद् यावदर्धरात्रं दिवाकरः। दक्षिणादुत्तरं याति किञ्चित्पूर्वसमन्वितम्। तद्देशकालयोरीशा रुद्रा वायुपुरःसराः। वसुभोज्यादर्धकालमर्धदेशस्तथैव च। रुद्रभोज्योऽर्धरात्रात्तु याम आदित्यदैवतः। [पश्चिमात् पूर्वमार्गस्तु रौद्रादर्धः प्रकीर्तितः। ततः परोऽर्धयामस्तु सौम्याद् दक्षिणमार्गकः। मारुतः काल उद्दिष्ट आदित्यार्धश्च देशतः।][1] पश्चात् पश्चादुदेत्यैवं[2] पूर्वतोऽस्तमुपैति च। ततस्तदर्धकालेन चोत्तरादुदितस्तथा। अस्तं दक्षिणतो याति स कालो मारुतः स्मृतः। उदेत्यैन्द्रपुरे चोर्ध्वमर्वाङ् उदयपर्वते[3]। अस्तमेति तदर्धेन ब्रह्मा तस्य पतिः स्मृतः। एकत्रिंशत्तु घटिकाः साधिका वसुदेवताः। तदर्धा रुद्रदैवत्यास्तत आदित्यदैवताः। तदर्धा मारुता ब्राह्मास्तदर्धा देशतस्तथा" इति च।

रौद्रो द्विगुणीभूतो वसुकालो यावान् तावान् भवतीति द्विस्तावदर्ध इत्यर्थः। ब्राह्मो मुहूर्ते[4] इत्युषःकालस्य प्रसिद्धेश्च। रौद्रः काल इति पूर्वरात्रस्य प्रसिद्धेः।[5] अपररात्रस्य सौम्यकालत्वाच्च तस्मिन् काले शीतमुत्पद्यते। मारुतकालत्वाद् वायुश्च वाति। आग्नेयकालत्वादेवाह्नि सैकघटिकं होमकर्माणि विशेषतः प्रवर्तन्ते।

१ "[ ]" एतदन्तर्गतो भागः प्राचीनकोशेषु क्वचिन्न पठ्यते। परं हंसपादनिक्षेपादयमपि निवेशनीयः सम्मत इति सम्भाव्यते। २"उदेत्येव" ३"अर्वागुदयपर्वते" ४ "ब्राह्मे मुहूर्ते" इति प्र. पाठाः। ५"प्रसिद्धेः सार्धरात्रस्य। सौम्यः काल इत्यपररात्रस्य। सौम्यकालत्वाच्च —"इत्यादि प्र.पाठानुपूर्वी।

पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादु- द्यन्ति स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्व उदेताऽर्वाङ् अस्तमेता साध्याना- मेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥१२॥ अथ तत ऊर्ध्व उदेत्य नैवोदेता

---

"अहः सर्ववसूनां[1] तु परेषां रात्रिरेव च। प्रदत्ता विष्णुना पूर्वं नालमित्यब्रुवन् परे। पुनर्विशेषतो दत्तं रुद्राणां मरुतां तथा। माध्यन्दिनं तृतीयं चाप्यादित्यानां प्रदत्तवान्। विश्वेषामपि देवानां सामान्याद् वसुनाम्[2]" इति च। "सर्वस्याधिपतिर्ब्रह्मा रुद्राद्यास्तु द्वयोर्द्वयोः। वसवस्त्वह्न एवेशाः सामान्यान्न विशेषतः" इति च। "माध्यन्दिने तृतीये च रुद्रादे राज्यमिष्यते। तद्भृत्यत्वाद् वसूनां तु प्रातःकालो विशेषतः। तत्रापि वाय्व- धीनत्वमग्न्यादीनां प्रकीर्तितम्। एवं पृथिव्यां[3] रुद्राणामन्तरिक्षं[4] प्रकीर्तितम्। मरुतां च च द्युलोकेशा आदित्याः परिकीर्तिताः। सर्वेषामधिपो ब्रह्मा युवाधीशस्तु[5] मारुतः। त्रिलोकाधिपतिश्चेन्द्रस्तेषामप्यधिपो हरिः" इति च।

स्वाराज्यं भोगः। स्वरञ्जनात्। नत्विन्द्राद् यमो द्विगुणकालं तिष्ठति तस्माद् वरुणस्तस्मात् सोम इत्यत्र किञ्चिन्मानम्। नच सोमाद् द्विगुणमेव ब्रह्मा तिष्ठति। द्विपरार्धं हि तस्य कालः। इन्द्रा- दयो हि मन्वन्तरमात्रं तिष्ठन्ति। नच वसूनां पूर्वो देशो रुद्राणां दक्षिण आदित्यानां पश्चिमो मरुतामुत्तर एव नान्यत्रेत्यत्र प्रमाणमस्ति। [6]तत्पक्षे रुद्रैः सहेन्द्रस्य दक्षिणत्वप्राप्तेश्च। नचेन्द्रशब्देन वायुस्तैर्गृहीतः। अत इन्द्रादेवेन्द्रस्य द्विगुणकालत्वमिति विरोधः। इन्द्रादिपुरीणामुद्वासत्वेनैव- मङ्गीकारे तत्षोडशगुणत्वादूर्ध्वोदयस्यैकेन्द्रात् परतोऽनिन्द्रत्वमेव स्यात्। "अथ तत ऊर्ध्व उदेत्य" इति तत्पक्षे पश्चादप्यादित्यभावात् कल्पान्तलयोऽपि न[7] स्यादित्याद्यनन्तदोषदुष्टत्वेऽपि ग्रन्थाल्पत्वायैवोपरम्यते।

"वस्वादीनां तु सर्वेषां सर्वदिक्षु पुराण्यपि। सन्त्येवमपि धीवृत्त्यै प्रत्येकं दिक्षु कथ्यते" इति च।

ऐन्द्र्या उद्वासे रुद्राणामेवोदयाभाव इति च दोषः। अतो यत्किञ्चिदेतत्।

"उदेति पूर्वतः सूर्यो निम्लोचति च पश्चिमे। एवं नियम उद्दिष्टो ब्रह्मणा विष्णुचोद- नात्। द्विगुणं द्विगुणं कालमुदित्वा दक्षिणादिषु। [8]मध्ये चावस्थितिः पश्चाद् ब्रह्माणं याचिता पुरा। हिरण्यकेन सूर्यस्य हिरण्याक्षेण वै पुनः। तदाऽसुराणां देवत्वं ब्रह्मा

---

१ "सर्वं वसूनां तु" २ "सामान्याद् वसुनामहः" ३ "पृथिव्याम्" ४ "अन्तरिक्षे" इति प्र.पाठाः। ५ "द्युवादीशस्तु" इति प्र. पाठः। प्राचीनपाठस्तु नातिस्फुटार्थः। ६ इतः प्रचलितपाठे वाक्यानुपूर्वी अधरो- त्तरा दृश्यते। तद् यथा—"तत्पक्षे रुद्रैः सहेन्द्रस्य दक्षिणत्वप्राप्तेश्च। अत इन्द्रादेवेन्द्रस्य द्विगुणकाल- त्वमिति विरोधः। नचेन्द्रशब्देन वायुस्तैर्गृहीतः। इन्द्रादिपुरीणाम्—" इत्यादि। ७ "लयो न स्यात्" ८ "मध्ये व्यवस्थितिः" इति प्र. पाठौ।

नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः । न वै तत्र निम्लोच नोदियाय कदाचन । देवास्तेनाहं सत्येन मा विराधिषि ब्रह्मणेति ॥१३॥ न हवा अस्मा उदेति न निम्लोचति सकृद् दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायाऽरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाचेदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वाऽन्तेवासिने नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥ ॥१४॥*॥इति प्रथमः खण्डः ॥*॥

---

तत् प्रददौ तयोः । तच्छ्रुत्वेन्द्रादिभिः प्रोक्तः कथं प्रादा वराविमौ । देवता हि विनश्येयुरेवं दत्ते वरे त्वया । इत्युक्तो दैवतैः प्राह ब्रह्मा लोकपितामहः । न मया स वरो दत्तो दैतेयानां सुराः क्वचित् । येन युष्मद्विनाशः स्यात् ततो व्यैतु[1] च वो भयम् । दक्षिणाद्युदयो यस्तु स हि दैनन्दिनो मया । अभिप्रेतो नैव चायं कालान्तरगतः क्वचित् । अर्धनाडयुत्तरा नाडीः सकाष्ठा नित्यशो रविः । पश्चादशोत्तरां गच्छेत् पूर्वरात्रे तु दक्षिणात् । तदर्धं पश्चिमात् पूर्वां[2] तदर्धं चोत्तरादपि । दक्षिणां च तदर्धं स ऊर्ध्वादर्वाक् च गच्छति । दक्षिणाद्युदयस्त्वेष नतु कालान्तरे क्वचित् । यदोत्तरस्माद् द्विगुणः पूर्वो भवति वै सुराः । तदाऽपि द्विगुणत्वं स्यात् तन्मयाऽत्र विवक्षितम् । अहःसाम्येऽपि क्रमश आतपस्याल्पकालतः । गिर्यावृते[3]ः क्षिप्रमन्येषूदयास्तमयाविव । कालान्तरे भाविनं तु दक्षिणाद्युदयं पुनः । अपेक्ष्यैव वरो दत्तो द्वितीयो देवता मया । समयश्च कृतो नित्यो मया सूर्यस्य चानघाः । पूर्वस्मादुदयो नित्यं[4] पश्चिमेऽस्तमयस्तथा । नियमो नान्यथाऽयं स्यात् कदाचित् केनचित् क्वचित् । तस्मान्न वो भयं क्वापि प्रोक्ता इत्थं सुरास्तदा । विशोका अभवन् सर्वे ययुः स्वं स्वं निवेशनम्[5] "

एतदेव मोक्षधर्मेषु बलिवासवसंवाद उक्तम् । [6]ब्रह्मणो वचनं रहस्यत्वादविज्ञाय बलिना दक्षिणाद्युदय उक्तः । इन्द्रेण तु ब्रह्मवचनं जानता दक्षिणाद्युदयो नास्तीत्युक्तम्—

"दैतेययोर्वरं ज्ञात्वा त्वविज्ञाय सुरान् प्रति । ब्रह्मणोक्तं हि बलिना वासवं प्रत्युदीरितम् । दक्षिणाद्युदयान्ते तु त्वां जेष्यामि पुरन्दर । इत्युक्तस्तमुवाचेन्द्रो न कदाचन तद् भवेत् । ब्रह्मणा नियमो यस्मात् कृतः प्रागुदयो रवेः । इत्युक्त्वा तु जगामेन्द्रो दिवमैरावतस्थितः " इति च ॥*॥ "अथ सूर्यस्थितो विष्णुरादित्यस्त्वादिमूलतः। आदानाद् वाऽपि देवानामूर्ध्वं गच्छति मण्डलात् । प्राप्य वैकुण्ठलोकं च "[7]नोदैत्यस्तं नचैति सः । एकलः प्रळये स्थाता देवता नात्र संशयः । तेन सत्येन न व्यृद्धिं प्राप्नुर्यां[8]

---

१ "व्येतु" २ "पूर्वं" ३ "गिर्यावृत्तेः" ४ "नित्यः" इति प्र. पाठाः। ५ इतः परं प्र.पाठे "इति च" इत्यधिकम् । ६ "देवान् प्रति ब्रह्मणो वचनम्" ७ "नोदेति" ८ "न व्यृद्धिमाप्नुयां" इति प्र. पाठाः।

गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग् वै गायत्री वाग् वा इदं सर्वं भूतं गायति त्रायते च या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयन्ते या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते यद् वै तत् पुरुषे शरीरमिदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते सैषा चतुष्पदा षड्विधा गायत्री ॥१॥ तदेत-दृचाऽभ्युक्तम् । तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥२॥ यद् वै तद् ब्रह्मेतीदं वाव तद् योऽयं

---

ब्रह्मणा क्वचित् । इत्युवाच पुरा ब्रह्मा देवेभ्यः स चतुर्मुखः । एतां विद्यां तु यो वेद नित्यमस्य दिवाऽभवत्[1] । वैकुण्ठधामसंस्थस्य मुक्तस्यानुदयास्तकम् । तदेतद् भगवान् विष्णुः प्रादाज्ज्ञानं विरञ्चये । विरिञ्चिर्मनवे प्राह प्रजाभ्यो मनुरेव च । पूरयित्वा तु पृथिवीं रत्नैः सप्तसमुद्रिणीम् । दत्वाऽपि गुरवे नैव पूर्यते गुरुदक्षिणा । देवास्तू-पासनायोग्या एकैकस्यामृतस्य हि । सर्वस्योपासने ब्रह्मा तदन्ये ज्ञानमात्रके । उपासने नैव योग्यास्तद्योग्या हि सुरा यतः " इति देवश्रुतौ ।

ब्रह्मणा परेण मा विराधिषि । भगवत्प्रसादाद् व्यृद्धिं[2] न प्राप्नुयामित्यर्थः ॥*॥ यदिदं किञ्च भूतं प्रभूतं परिपूर्णं तत् सर्वं गायत्री भगवानेव । "भू बहौ" इति धातोः। "बहुः पूर्णतायाम्" इति च ।

" यदिदं परितः पूर्णं मत्स्यकूर्मादिरूपकम् । तदिदं भगवान् विष्णुः सर्वान्तःस्थित एव च । तन्निःसृतत्वाद् वेदानां गायकस्त्राति चाखिलम् । अतो गायत्रिनामाऽसौ वासुदेवः परः पुमान् । भूमा भूतमिति प्रोक्तः पूर्णत्वात् पुरुषोत्तमः । अनन्यापेक्षमुद्रिक्तं सर्वस्य च नियामकम्[3] । यद्यत् तत्तद् विष्णुरेव नान्यदेतादृशं क्वचित् । स एव भगवान् विष्णुर्वाङ्नामा वाचि संस्थितः । वचनाद्धयशीर्षाख्यो गायत्र्यां च स आस्थितः । स एव पृथिवीनामा पृथिव्यामपि संस्थितः । विष्णौ हि पृथिवी-संस्थे जगत् सर्वं प्रतिष्ठितम् । नातिशेते च तं कश्चित् स हि सर्वाधिको हरिः । पृथुत्वात् पृथिवीनामा स एवान्तः शरीरगः । शरित्वादीरणाच्चैव शरीरं भगवानजः । पुरुषो जीव उद्दिष्टस्तस्मिन्नेव स्थितो विभुः । योऽसौ जीवे स्थितो विष्णुः शरीरमितिनामकः । शंत्वाच्च रतिरूपत्वादीरणाच्च स एव तु । जीवचै-तन्यरूपस्य हृदयेऽपि व्यवस्थितः । अयनाद्धृदि विष्णुः स हृदयं कीर्तितो बुधैः । ✶ गायत्र्यां संस्थितो विष्णुः स्त्रीरूपः सूर्यसप्रभः। द्वितीयश्चैव मत्स्यादिर्भूतनामाऽवता-रगः । तृतीयो वाचि संस्थश्च स्त्रीरूपो हयशीर्षकः। चतुर्थः पृथिवीसंस्थः स्त्रीरूपः पीतवर्णकः। जीवस्यान्तर्गतो व्याप्य शरीरमितिनामकः । पञ्चमस्तद्धृदिस्थस्[4]तु षष्ठो

---

१ "दिवा भवेत्" २ "अवृद्धिं" ३ "सर्वस्य विनियामकम्" ४ "हृदिस्थश्च" इति प्र. पाठाः ।

बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशोऽयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशोऽयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत् पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेद ॥३॥
तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत् तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥४॥

---

हृदयनामकः। गायत्रीनामको विष्णुरेवं षड्विध उच्यते। त्रिभिः स्वरूपपादैश्च भिन्नैनैकेन चैव हि। गायत्रीनामको विष्णुश्चतुष्पात् सम्प्रकीर्तितः। भिन्नपादैः[1] सर्वजीवास्तस्य सादृश्यमात्रतः। स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः। नारायणो वासुदेवो वैकुण्ठ इति ते त्रयः। अनन्तशयनं चैव तथाऽनन्तासनं हरेः। बहुलक्ष्मोच्छ्रूते नित्ये विमाने संस्थिते[2] यतः। चित्प्रकृत्यात्मनि ततो दिवीति कथिते[3] श्रुतौ। लोकत्रयविवक्षायां परतो लक्ष्ययोजनात्। स्थानद्वयं तद् विज्ञेयं[4] ततस्ते दिवि संस्थिताः। दिवः परश्च भगवान् सप्तलोकविवक्षया। परं ब्रह्मेति भगवान् सर्वगः सम्प्रकीर्तितः। स एव जीवस्य बहिर्हृदयाकाश आस्थितः। योऽयं हृदयगः सोऽथ जीवान्तर्व्याप्य संस्थितः। व्याप्तो जीवान्तरे योऽसौ स जीवहृदि संस्थितः। एवं चापि चतुष्पात्त्वं वासुदेवस्य कीर्तितम्। स एव पूर्णो भगवानप्रवर्त्यस्तथाऽखिलैः। अन्यैः प्रवर्त्यते योऽसौ स प्रवर्तीति गीयते। अप्रवर्त्यो हरिर्नित्यः स्वतन्त्रत्वात्[5] सदैव च। अस्मिन्[6] प्रवृत्तिर्नास्तीति सोऽप्रवर्तीति कीर्तितः। पूर्णा स्वतन्त्रा श्रीश्चास्य वेत्तुर्भवति शाश्वती। साक्षाद् गायत्र्युपासायाँ[7] योग्य एकश्चतुर्मुखः। तस्मादनन्यतन्त्राऽस्य श्रीर्भवेन्नान्यथा क्वचित्। विष्णुतन्त्रत्वमस्य स्यात् परेषां तस्य तन्त्रता। यथाक्रमेण तन्त्रत्वं योग्यताक्रमतो भवेत्" इति सत्तत्त्वे[8]।

ब्रह्मशब्दाच्च भगवानित्यवसीयते। पूर्णाप्रवृत्तित्वं च तस्मिन्नेव मुख्यम्। "तावानस्य महिमा" इति मन्त्राच्च। "पादोऽस्य विश्वा भूतानि" इति जीवानां चतुष्पादान्तर्भावात् "भूतं यदिदं किञ्च" इति षड्विधान्तर्भूतं भूतं मत्स्याद्यवताररूपमेव।

"द्वाविंशेष्ववतारेषु जीवोऽप्युक्तो यथा पृथुः। तथा पादेषु चतुर्षु सान्निध्याज्जीव ईरितः। यथा कालः पुमान् व्यक्तं प्रकृतिश्च परस्य तु। विष्णो रूपाणि गण्यन्ते पररूपेण वै सह। एवं भूतानि गण्यन्ते भिन्नान्यपि पदैः सह। मूर्तामूर्ते यथा रूपे ब्रह्मणस्तु तथैव च। भिन्नान्यपि तु भूतानि पदानि स्वपदैः सह" इति प्राथम्ये। "सुदर्शनाख्यं स्वास्त्रं तु प्रायुङ्क्त दयितं त्रिपात्" इति श्रीभागवते प्रयोगाच्च न जीवो भगवत्स्वरूपम्। "सुवर्चला यथा सूर्यपत्न्यंशः समुदाहृता। एवं जीवा भगवतो वस्तुभेदेऽपि सर्वदा" इति च ॥*॥ "प्राणाभिमानी चक्षुश्च सूर्य एव ह्युदाहृतः।

---

१ "भिन्नपादाः" २ "संस्थितं" ३ "कथितं" ४ "सर्वं द्यौरिति विज्ञेयम्" ५ "नित्यस्वतन्त्रत्वात्" ६ "अस्य" ७ "गायत्र्युपासायां" ८ "इति च सत्तत्वे" इति प्र. पाठाः।

अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद ॥५॥ अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद् ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्व्यन्नादो भवति य एवं वेद ॥६॥ अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत् कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान् व्युष्टिमान् भवति य एवं वेदाथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान् भवति य एवं वेद ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेदास्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ॥७॥ अथ यदतः परो दिवो ज्योति र्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिर्यत्रैतदस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत् कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव

---

तेजो[1]ऽन्नाद्याभिमानी च प्राग्द्वारोऽधिपतिर्हरेः। दक्षिणाधिपतिः सोमो व्यान[2]श्रोत्राभिमानवान्। यशोलावण्यरूपश्च पश्चिमद्वारपस्तथा। वागपानात्मको वह्निर्ब्रह्मतेजोऽन्नदेवता। उत्तरद्वारपस्त्विन्द्रः समानै[3]मनआत्मकः। कीर्त्यैश्वर्यात्मको नित्यमूर्ध्वद्वारप एव च। प्रधानवायुराकाशः प्रकाश्या[4]दुन्नतेस्तथा। उदान ऊर्जितत्वात् स ओजः पूर्णत्वतो महः। परस्य ब्रह्मणस्त्वेते पुरुषाः पञ्च कीर्तिताः। द्वारपा हृदये चैव विष्णुलोके च सर्वदा। अन्तरद्वारपा[5] ह्येते जयाद्या बाह्यतः स्मृताः। एवमेतानुपास्यैव तद्गुणांशांशभाग् भवेत्। विष्णुलोकं तथा गच्छेद् भवेदपि सुसन्ततिः। योऽसौ वैकुण्ठगो विष्णुः सप्तलोकोपरिस्थितः। स एव सर्वलोकेषु विश्वतो ब्रह्मणस्तथा। उच्चेषूत्तमलोकेषु तथा प्रत्यवरेषु च। पुरुषेषु च सर्वेषु स एकः संव्यवस्थितः। प्राणसंस्थः स वै विष्णुः प्राणोऽग्नौ संव्यवस्थितः। स्पर्शेन दृश्यते चाग्निस्तद्दृष्टिरिव सा ततः। स प्राणः स्तौति तं विष्णुं सा स्तुतिः श्रूयते सदा। कर्णौ पिधाय तद्विद्वान् दिव्यचक्षुःसुकीर्तिमान्। मुक्तो भूत्वा भवेद् यस्मादुपासीतैव तं ततः[6]" इति संस्तत्वे।
"दिक्षु यानात् यशो व्याप्तं कीर्तिः प्रत्यक्षतः स्तुतिः" इति शब्दनिर्णये।

सर्वतः पृष्ठेषु सर्वत उच्चेषु वैकुण्ठक्षीरसागरानन्तासनादिषु। विश्वतो ब्रह्मणोऽप्युच्चेषु।

---

१ "तेजोऽनाद्यभिमानी च प्राग्द्वाराधिपति" २ "व्यानः" ३ "समानो मनआत्मकः" ४ "सार्वज्ञादुन्नतेस्तथा" ५ "आन्तरद्वारपाः" ६ "उपासीतैव सन्ततमिति सत्तत्वे" इति प्र. पाठाः।

ज्वलत उपशृणोति तदेतद् दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥८॥ सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः सत्यकामः सत्यसङ्कल्प आकाश आत्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद् वा सर्षपाद् वा श्यामाकाद् वा श्यामाकतण्डुलाद् वैष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षा-ज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदय एतद् ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माऽह शाण्डिल्यः शाण्डिल्यः ॥९॥*॥ इति द्वितीयः खण्डः ॥*॥

---

तत उत्तमो[1]ऽन्यो नास्तीत्यनुत्तमाः । सर्वतः स्वयमुत्तमाः ।

"पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः। अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरेः[2]। द्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते। पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम्। दिवीन्द्रसदनं चैव तत्परे तु दिवः परे। पृथिव्यां ब्रह्मणो मेरौ जयन्ते[3] त्वन्तरिक्षगम्। तृतीयं सत्यलोके[4] च सदनं त्रिविधं स्मृतम्। तेभ्योऽनन्तासनाद्या यत् परतो विश्वतः परे" इति सत्तत्त्वे। "निनदः समुद्रघोषः स्यान्नदथुर्मेघसम्भवः" इति सत्तत्त्वे[6]। "चक्षुष्यश्चक्षुषि ब्रह्मण्येष यातीत्युपासकः" इति च[7] ॥*॥ "इदं ब्रह्मातिसामीप्यात् सर्वं पूर्णगुणत्वतः। तच्च ब्रह्म जलान् साक्षाद् योऽसौ विष्णुर्जलेऽनिति[8]। आनीदवातमिति यं वेदवागवदत् स्फुटम्। अप्रकेते तु सलिले ब्रह्म नारायणो हि सः[9]। इति शान्त उपासीत यस्माज्ज्ञानमयः पुमान्। क्रतुस्तु निश्चितं[10]ज्ञानं तद्वशः पुरुषो मृतौ। तस्माद् विनिश्चितज्ञानं कुर्याद् विष्णौ महद्गुणे[11]। महाज्ञानात्मकत्वात्तु प्रोक्तो विष्णुर्मनोमयः। यस्माद् बलशरीरोऽसावतः प्राणशरीरकः। आ समन्तात् प्रकाशात् स आकाशात्मा प्रकीर्तितः। सर्वगन्धादिरूपश्च भोक्ता चैषां सदैव हि। इति निश्चयकृद् याति तमेव पुरुषोत्तमम्" इति सद्गुणे।

एकत्रे[12] सर्वगन्धादिना चिदानन्दात्मकसर्वगन्धादिरूपत्वमुच्यते। अन्यत्र तद्भोक्तृत्वम् ॥*॥

---

१ "उत्तमो नास्तीत्यनुत्तमाः" २ "हरिः" ३ "जयन्तम्" ४ "सत्यलोकं" इति प्र.पाठाः। ६ "इति च" इतीयानेव प्र.पाठः। प्राचीनकोशेषु तु अत्रापि पुनः 'सत्तत्वे' इति श्रूयते। ७ अत्र प्राचीनकोशेषु प्रकरणसमाप्तिरिव दृश्यते। ८ "जलेऽनिति" ९ "नारायणोऽपि सः" १० "निश्चितं ज्ञानं" ११ "विनिश्चितं ज्ञानं कुर्याद् विष्णौ महागुणे" इति प्र. पाठाः। १२ प्राचीनकोशेषु "एकत्र सचिदानन्दात्मक–" इत्यादि पठ्यते। परन्तु सकारात् परं हंसपादनिक्षेपाद् विज्ञायते यल्लुप्तान्यक्षराण्युपक्षेपनीयानीति।

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलं स एष कोशो वसुधानस्तस्मिन् सर्वमिदं श्रितम् ॥१॥ तस्य प्राची दिग् जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रुदमरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुनाऽथ यदवोचं प्राणं प्रपद्य इति प्राणो वा इदं सर्वं भूतं यदिदं किञ्च तमेव तत् प्रापत्स्यथाथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचमथ यदवोचं भुवः प्रपद्य

---

"क इत्यानन्द उद्दिष्ट उश इच्छा प्रकीर्तिता। आनन्देच्छास्वरूपोऽसौ कोशो विष्णुः प्रकीर्तितः। तस्योदरेऽन्तरिक्षं च पृथिवी पादमूर्ध्नयोः[1]। शिरोविवरगा द्यौश्च दिशो बाहुषु संस्थिताः। अजरोऽयं महाविष्णुर्वसवो देवतागणाः। तेषां निधानं भगवांस्तस्मिन् सर्वमिदं श्रितम्। प्राचीदिक्संस्थितस्तस्य बाहुर्दक्षिण ऊर्ध्वगः। जुहूः स होमकर्तृत्वाद् भुङ्क्ते ह्येनेन[2] केशवः। दक्षिणस्त्वधरो बाहुर्दक्षिणादिक्स्थितो विभोः। सहमानेति सम्प्रोक्तो मानं वेदात्मकं यतः। शङ्खो वेदात्मकः शङ्खसहितो दक्षिणाधरः। बाहुर्जुहोति चक्रेण शत्रूनित्यथवा जुहूः। प्रतीचीदिक्स्थितस्तस्य वामबाहुस्तथोत्तरः। राजीयुक्तगदायुक्तो राज्ञी नाम[3] प्रकीर्तितः। अधरो वामबाहुर्य उत्तरादिक्स्थितो विभोः। श्रियआधारपद्मित्वात् सुभूतानामकः स्मृतः। दिङ्नामानश्च ते प्रोक्ता धर्मज्ञानादिदेशनात्[4]। तेभ्यो जातो महान्[5] वायुर्दिशां वत्सस्ततः स्मृतः। धर्मज्ञानादिरूपेण विष्णोर्बाहुचतुष्टयात्। जातं वायुं विदित्वैव पुत्रो भूत्वा न रोदिति। न जायते न म्रियते मुक्तो भूत्वा सुखी भवेत्। वायुं हरेः सुतं ज्ञात्वा नाहं पुत्रतयाऽरुदम्। हरेः प्रसादसामर्थ्यादजरा चामरा ह्यहम्। अनादिकालसम्बन्धादित्युवाच परा[6] रमा। अविनष्टपरानन्दकामं[7] विष्णुं सदा ह्यहम्। प्रपद्ये तत्प्रसादेन केवलं नाऽत्मशक्तितः। प्राणं सर्वप्रणेतारं प्रपद्ये केशवं सदा। प्रभूतं यदिदं किञ्चित् प्रादुर्भावात्मकं हरेः। मत्स्याद्यं तत् प्राण एव विष्णुर्नास्त्यत्र संशयः। तस्मान्मत्स्यादिरूपं तं विष्णुमेव प्रपद्यथ। हे जना इत्यवोचत् सा लक्ष्मीः सर्वाः प्रजाः प्रति। प्राणनामा वासुदेवो मोक्षं स्वान् प्रणयेद् यतः। सङ्कर्षणस्तु भूर्नामा भूषयेज्ज्ञानतो यतः। स पृथ्व्यां पृथिवीनामा स्वात्मानं प्रथयेद् यतः। अन्तरिक्षेऽन्तरिक्षाख्यो यतः साध्वन्तरीक्षते। दिवि द्युनामा स विभुः

---

१ "पादबुध्नयोः" इति प्र.पाठः। पादमूर्ध्नयोरिति पाठे पादमूर्ध्नं पादमूलम्। तदेव बुध्नमिति च व्यपदिश्यते। मूर्ध्नमिति च रूपं वैदिकेषु पठ्यते। २ "भुङ्क्ते ह्येतेन" ३ "राज्ञीनामा" ४ "धर्मज्ञानातिदेशनात्" ५ "महावायुः" ६ "पुरा" ७ "अविनष्टं परानन्दकामं" इति प्र. पाठाः।

इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचमथ यदवोचं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥ ॥२॥*॥ इति तृतीयः खण्डः ॥*॥

पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातःसवनं चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदं सर्वं वासयन्ति तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिनं सवनमनुसन्तनुतेति माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवत्यथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनं चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनं सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदं सर्वं रोदयन्ति तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा रुद्रा इदं मे माध्यन्दिनं सवनं तृतीयं सवनमनुसन्तनुतेति माऽहं प्राणानां रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवत्यथ यान्यष्टचत्वारिंशद्वर्षाणि तत् तृतीयं सवनमष्टचत्वारिंशदक्षरा जगती जागतं तृतीयं सवनं तदस्याऽदित्या अन्वायत्ताः प्राणा वावाऽदित्या एते हीदं सर्वमाददते तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति

---

सर्वक्रीडाकरत्वतः। प्रद्युम्नश्च भुवोनामा सृष्ट्या यद् भावयेज्जगत्। सोऽग्निनामा परो वह्नावत्ति सर्वं यतो हुतम्। वायुनामा स वायुस्थो वात्यायुश्च यतोऽस्य तत्। आदित्याख्यः स आदित्य आददात्यायुरस्य यत्। स्वर्णामा ह्यनिरुद्धोऽसौ[1] परानन्दप्रदत्वतः। ऋग्वेदाख्यः स ऋग्वेदे ज्ञानं वेदयते यतः। यजुर्वेदो यजुर्वेदे यज्ञं वेदयते यतः। सामवेदः सामवेदे साम्यं वेदयते ह्ययम्। एवं चतुर्विधं तत्त्वं तदवोचमहं हरेः। इत्युवाचेन्दिरा देवी स्तुवन्ती परमं हरिम्" इति[2]। "पुल्लिङ्गेनोच्यते स्त्री च पुम्भ्यः शक्तिमती क्वचित्[3]" इति च ॥*॥ "विष्णुपूजार्थयज्ञोऽहमित्युपासनमादराद्। कुर्वीत पुरुषो नित्यं तस्य यत् षोडशोत्तरम्। शतमायुस्तत्तु[4] सवनत्रयमीरितमुत्तमम्। चतुर्विंशत्तु यत् पूर्वं प्रातःसवनमेव तत्। प्रार्थयित्वा वसूंस्तद्वं पुमान् मृत्युमपानुदेत्। मध्ये चतुश्चत्वारिंशन्मध्यमं सवनं स्मृतम्। रुद्राणां प्रार्थनेनात्र पुमान् मृत्युमपानुदेत्।

---

१ "स्वर्नामा त्वनिरुद्धोऽसौ" २ "इति च" इति प्र. पाठौ। ३"पुंवच्छक्तिमती यदि" इति प्र. पाठः। प्राचीनकोशेष्वत्र प्रकरणसमाप्तिश्चिह्निता। ४ "शतमायुस्तत् सवन–" इति प्र. पाठः।

माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवत्येतद्ध स वै तद् विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत् प्राह षोडशं वर्षशतं जीवति य एवं वेद ॥१॥ स यदशिशिषति यत् पिपासति यन्न रमते ता अस्य दीक्षा अथ यदश्नाति यत् पिबति यद् रमते तदुपसदैरेत्यथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेत्यथ यत् तपो दानमार्जवमहिंसा सत्यवचनं ता अस्य दक्षिणास्तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथस्तद्धैतद् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसंशितमसीति ॥ ॥२॥ तत्रैते द्वे ऋचौ भवतः । आदित् प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम् ।

---

ततोऽष्टचत्वारिंशत् तत् तृतीयं सवनं मतम्[१] । आदित्यानां प्रार्थनेन तद्वं मृत्युपमानुदेत्" इति सर्वयज्ञे ।

महिदासोऽन्यः । कृष्णश्चान्य एव ।

"महिदासस्त्वैतरेयः कृष्णोऽन्यो देवकीसुतः । कपिलश्च द्वितीयोऽन्यस्त्रय एते पुरातनाः[३] । सङ्गत्योच्चैस्तपस्तेपुर्ब्रह्मणे परमेष्ठिने । मातुः स्वस्य च नामैक्यं विष्णुना स्यादितिह्युभौ । स्वात्मशिष्यप्रशिष्याणां नामैक्ये[४] कपिलस्तथा । एवमेव च वेदोक्ता भवेमेति त्वतन्द्रिताः । तान् वरान् प्रददौ तेषां ब्रह्मा लोकपितामहः । तस्मात् तन्नामिनस्त्वासंस्त्रयस्ते[५] मुनयोऽपि हि । महिदासस्त्वैतरेयो बह्वृचोपनिषद्गतः । साक्षात् स भगवान् विष्णुस्तन्नामैको मुनिर्ह्यभूत् । कृष्णस्तु वासुदेवाख्यः परमात्मैव केवलः[६] । तन्नामा देवकीपुत्रस्त्वन्योऽप्यभवदञ्जसा । कपिलो वासुदेवाख्यः साक्षान्नारायणः प्रभुः । तन्नामा कपिलोऽन्यस्तु शिष्यनाम्ना सहाभवत् । स षोडशशतं जीवी महिदासोऽपरस्त्वृषिः । घोरशिष्यस्तथा कृष्णः कपिलश्च कुशास्त्रकृत् । त्रय एते वरं प्राप्य ब्रह्मणः परमेष्ठिनः । कृतकृत्याः प्रमुमुदुस्तन्नामानश्च तेऽभवन्" इति कालकीये ॥*॥ "स्वरूपभूतयज्ञस्य क्षुत् पिपासाऽरतिस्तथा । दीक्षा भोजनपाने च रतिश्चोपसदः स्मृताः । व्यवायहासभक्षास्तु स्तुतिशास्त्रात्मकाः[७] स्मृताः । तपोदानार्जवाहिंसाः सत्यमप्यस्य दक्षिणाः[८] । सोष्यत्यसोष्टेति ततो यज्ञवत् पुत्रजन्मनि । आहुर्हि पुनरुत्पत्तिः प्रसवः प्रथमा पितुः । यज्ञस्नानं तु मरणं तदा ध्यायेद् त्रयं पुमान् । भगवन्नक्षयोऽसि त्वमच्युतोऽसि गुणैः सदा । प्राणाच्च सुखतो[९] नित्यमधिकश्चेति चिन्तयेत्" इति सत्तत्त्वे ॥*॥

---

१ "तु" २ "स्मृतम्" ३ "पुरा नराः" ४ "नामैक्यं" ५ "तन्नामिनश्चाऽसन्" ६ "केवलम्" ७ "स्तुतशस्त्रात्मकाः" ८ "दक्षिणा" ९ "सुखितो नित्यमाधिक्येनेति" इति प्र. पाठाः ।

परो यदिध्यते दिवा। उद् वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्। स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममित्यगन्म ज्योतिरुत्तममिति ॥ ३ ॥ मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च तदेतच्चतुष्पाद् ब्रह्म वाक् पादः प्राणः पादः चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवाऽऽदिष्टं भवत्यध्यात्मं चाधिदैवतं च वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥४॥ चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥५॥*॥ इति चतुर्थः खण्डः ॥*॥

---

आदित् तस्मादेव तत्प्रसादादेव। प्रत्नस्य पुरातनस्यानादेर्भगवतः रेतसः रतिरूपस्य ज्योतिः प्रपश्यन्ति[1]। वासेन रमयतीति वासरम्। दिवः परतो वैकुण्ठे यदिध्यते। ऋद्धतममेव सर्वदा। "अथ यदतः परो दिवः" इत्युक्तत्वाच्च[2]। नचाऽऽदित्यमण्डलं दिवः परतः। उत्तरं ज्योतिः पश्यन्तः स्वरानन्दरूपं परिपश्यन्तो वयं तमस उदगन्म। उत्तरं ज्योतिः पश्यन्तस्तदेवोत्तरं स्वश्च पश्यन्तः। द्विरुक्तिस्तात्पर्यार्थे[3]। उदाख्यं ज्योतिरुत्तमं तमसः सकाशादगन्म प्राप्तास्म इत्यर्थः[4]। "तस्योदिति नाम" इति श्रुतेः। देवत्रा देवं देवविषयेऽपि देवं देवानामपि देवमित्यर्थः[5]। सूरिभिः प्राप्यत्वात् सूर्यम्।

"रतिरूपं परं ज्योतिरनादेः केशवस्य यत्। तत्प्रसादेन पश्यन्ति हृदि वासाद् रतिप्रदम्। यत् पूर्णं सत् सदा भाति[6] वैकुण्ठे परतो दिवः। तदुदाख्यं प्रपश्यन्तो निर्गत्य तमसो वयम्। ज्योतिरानन्दसद्रूपमुत्तमोत्तमसूत्तमम्। देवानां दैवतं साक्षाद् सूरिप्राप्यं परं पदम्। प्राप्तास्म वासुदेवाख्यमिति मन्त्रदृगब्रवीत्" इति नारायणीये ॥*॥[7]
"मनःसंस्थस्तु यो देवः साक्षान्नारायणः प्रभुः। स एवाऽऽकाशसंस्थश्च मनआकाशनामकः। मननान्मन आकाश आ समन्तात् प्रकाशनात्। वासुदेवादिभेदेन स वागादिषु

---

१ "ज्योतिः पश्यन्ति", २ "अथ यदतः पर इत्युक्तत्वाच्च" ३ "तात्पर्यार्थौ" ४ "प्राप्ताः स्मेत्यर्थः" ५ "देवानां देवमित्यर्थः" ६ "सर्वदा भाति" इति प्र. पाठाः। ७ प्राचीनकोशेष्वत्र प्रकरणसमाप्तिश्चिह्निता।

आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् तत् सदासीत् तत् समभवत् तदाण्डं निरवर्तत तत् संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवतां तद्यद् रजतं सेयं पृथिवी यत् सुवर्णं सा द्यौर्यज्जरायु ते पर्वता यदुल्बं स मेघो नीहारो या धमनयस्ता नद्यो यद् वास्तेयमुदकं स समुद्रोऽथ यत् तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन् सर्वाणि च भूतानि सर्वे च कामास्तस्मात् तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे च कामाः स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनं साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन् निम्रेडेरन् ॥१॥*॥ इति पञ्चमः खण्डः ॥*॥

इति श्रीच्छन्दोगोपनिषदि द्वितीयोऽध्यायः

---

ॐ॥ जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुवाक्य आस स ह सर्वत आवसथान् मापयाश्चक्रे सर्वत एव मेऽत्स्यन्तीत्यथ ह हंसा निशायामतिपेतु-

---

संस्थितः। अग्न्यादिषु च तन्नामा वागादिस्थः स एव तु। अग्न्यादिस्थैः सहैवेशो भाति दुष्टांस्तपत्यथ। एवं विद्वांस्तमीशेशं यशोज्ञानसुखात्मताम्। कीर्तिं च ब्रह्म सम्प्राप्य[१] वरतां मुक्तिगामपि। प्राप्य भाति तपत्यद्धा स्वाज्ञानादिकमेव च" इति च। ॥*॥"अगम्यत्वादसन्नाम ब्रह्म नारायणाभिधम्। प्रळये वासुदेवाख्यं गम्यं सदभवद् विदाम्। तत् प्रकृत्या समभवत् तत आण्डमजायत। तस्मिन्नादित्यनामाऽसावभवत् सूर्यमण्डले। नियन्तैव च सूर्यस्य भगवान् पुरुषोत्तमः। तस्मादादित्यनामानमादित्यस्थं जनार्दनम्। ब्रह्मोपासीत परमं सर्ववेदज्ञता ततः" इति ब्रह्मतत्त्वे।

उलूलवः उरूरवः। अतिमहान्तो गायत्र्यादिघोषा उप च निम्रेडेरन्। मुक्ते तस्मिन्नेव वसेयुः। "सूर्यबिम्बस्थिते विष्णौ जायमाने परात्मनि। गायत्रीपूर्वकैर्वेदैर्ब्रह्माद्याः समुपस्थिताः। उपतिष्ठन्त्यतो नित्यं गायत्र्यादिभिरञ्जसा। तद्विद्वान् मुक्त आवासो वेदानां सर्वदा भवेत्" इति च॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीच्छन्दोगोपनिषद्भाष्ये
तृतीयोऽध्यायः

---

१ "ब्रह्मसम्प्राप्त्या" इति प्र. पाठः।

स्तद्धैवं हंसो हंसमभ्युवाद होहोयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत् त्वा मा प्रधाक्षीरिति तमु ह परः प्रत्युवाच कम्वर एनमेतत् सन्तं सयुग्वानमिव रैक्वमात्थेति यो नु कथं सयुग्वा रैक्व इति यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्वन्ति यस्तद् वेद यत् स वेद सर्वं स मयैतदुक्त इति तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वा रैक्व इति यो नु कथं सयुग्वा रैक्व इति यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्वन्ति यस्तद् वेद यत् स वेद सर्वं स मयैतदुक्त इति स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय तं होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमृच्छेति सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तं हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहं ह्यरा३ इति ह प्रतिजज्ञे स क्षत्ताऽविदमिति प्रत्येयाय ॥१॥ अथ ह जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तं हाभ्युवाद रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथोऽनु म एतां भगवो देवतां शाधि यां देवतामुपास्स इति ॥२॥ तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे तं हाभ्युवाद रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति तस्या ह मुखमुपोद्गृह्णन्नुवाचाऽजहारेमाः शूद्रानेनैव मुखेनाऽलापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै स होवाच ॥३॥ वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति

---

ॐ ॥ भलाक्ष मन्दाक्ष। यथा कृते जिते त्रेतादिजयफलं तस्य भवति[1] एवमन्येषां पुण्यफलं प्राधान्येन तस्य[2] भवति। अरे अङ्ग इष्ट, सयुग्वा रैक्वो ज्ञातव्यः। अहं ह्यरा इति प्लुतिः पामकषण-भावेन ॥*॥ शुचाऽऽद्रवणाच्छूद्रो राजा पौत्रायणः[3]।

---

१ "फलं च तस्यैव भवति" २ "तस्यैव" इति प्र. पाठौ। ३ प्र. पाठे तु "शुचाऽऽद्रवणाच्छूद्रः" इतीयानेव वाक्यभागः पठ्यते। राजा पौत्रायण इति तूत्तरश्लोकगतत्वेन सकृदेव।

यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान् सर्वान् संवृङ्क्त इत्यधिदैवत-मथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेष्वथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे ॥४॥ तस्मा उ ह न ददतुः स होवाच महात्मनश्चतुरो देव एकः कः सो जगार भुवनस्य गोपाः । तं कापेय नाभि पश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तम् ॥५॥ यस्मै वा एतदन्नं तस्मा एतदन्नं दत्तमिति तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयाय । आत्मा देवानां जनिता प्रजानां हिरण्यदंष्ट्रो बभसोऽनसूरिः । महान्तमस्य महि-मानमाहुरनद्यमानो यदनन्नमत्तीति ॥६॥ वयं ब्रह्मचारिन्नेतमुपास्महे दत्तास्मै भिक्षामिति तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत् कृतं तस्मात् सर्वासु दिक्ष्वन्नमेव दश कृतं सैषा विराडन्नादी तयेदं सर्वं दृष्टं सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥७॥*॥ इति प्रथमः खण्डः ॥*॥

सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किङ्गोत्रो न्वहमस्मीति सा हैनमुवाच नाहमेतद् वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति स त्वं सत्यकामो जाबालो ब्रुवीथा इति स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्त मिति तं होवाच ॥१॥ किङ्गोत्रो नु सोम्यासीति स होवाच नाहमेतद् वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरं सा मां प्रत्यब्रवीन्नाहमेतद् वेद तात यद्गोत्रस्त्व-

---

"राजा पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः । प्राणविद्यामवाप्यास्मात् परं धर्ममवा-प्तवान्" इति पाद्मे ॥*॥ "संवृङ्क्ते सर्वदेवान् यद् वायुः संवर्ग ईरितः । महिमाऽस्य महानेष यदनाद्योऽत्ति देवताः" इति प्रभञ्जने ।

"दशेति वै सर्वम्" इति श्रुतेः कृतस्य पूर्णात्मकत्वादध्यात्माधिदैवभेदेन[1] पञ्च देवता दशभूताः कृतम् । तस्माद् वायुना सह दशसङ्ख्यापूरणात् सर्वदिक्षुस्थिता देवता वायुना सहान्नमेव । अन्नादी देवता विराड् विष्णुरेव । अनद्यमान इत्यन्यैरनद्यमानः ।

"वायुस्तु सर्वदेवात्ता वायोरत्ता जनार्दनः । न तस्य कश्चिदत्ताऽस्ति स विराडधिरा-

---

१ "दैवतभेदेन" इति प्र. पाठः ।

मसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहं सत्यकामो जाबालोऽस्मि भो इति ॥२॥ तं होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशतं गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणाऽऽवर्तेयमिति स ह वर्षगणं प्रोवास ता यदा सहस्रं सम्पेदुः ॥३॥ अथ हैनमृषभोऽभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रं स्मः प्रापय न आचार्यकुलं ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाच प्राची दिक् कला प्रतीची दिक् कला दक्षिणा दिक् कलोदीची दिक् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान् नाम स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिन् लोके भवति प्रकाशवतो ह लोकान् जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥४॥ अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुद्ध्य समिधमाधाय पश्चादग्नेः प्राङ् उपोपविवेश तमग्निरभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥५॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगव इति तस्मै स होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान् नाम स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिन् लोके भवत्यनन्तवतो ह लोकान् जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥६॥ हंसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङ् उपोपविवेश तं हंस उपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥७॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाचाग्निः कला सूर्यः

---

जनात्" इति च ॥*॥ "आर्जवं ब्राह्मणे साक्षाच्छूद्रोऽनार्जवलक्षणः। गौतमस्त्विवति विज्ञाय सत्यकाममुपानयत्" इति सामसंहितायाम् ॥*॥ "वायुर्वृषभरूपः सन्नग्नि-

कला चन्द्रः कला विद्युत् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान् नाम स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिन् लोके भवति ज्योतिष्मतो ह लोकान् जयति य एवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥८॥ मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङ् उपोपविवेश तं मद्गुरुपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै चतुष्कलः पादो ब्रह्मण आयतनवान् नाम स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिन् लोके भवत्यायतनवतो ह लोकान् जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥९॥ प्राप हाऽचार्यकुलं तमाचार्योऽभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ब्रह्मविदिव वै सोम्य भासि कोऽनु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवांस्त्वेव मे कामे ब्रूयाच्छ्रुतं ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापतीति तस्मै हैतदेवोवाचात्र ह न किञ्चन वीयायेति वीयायेति ॥१॥

॥*॥ इति द्वितीयः खण्डः ॥*॥

उपकोसलो हवै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादशवर्षाण्यग्नीन् परिचचार स ह स्मान्यानन्तेवासिनः समावर्तयंस्तं ह स्मैव न समावर्तयति तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन् परि च चारीन्मा त्वाऽग्नयः परि प्रवोचन् प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे स ह व्याधिनाऽनशितुं

---

हंसश्चतुर्मुखः। मद्गुरूपश्च वरुणः सत्यकामाय होचिरे। प्रकाशानन्ततेजोवत्स्थानवत्संज्ञका[1] हरेः। वासुदेवादिका मूर्तीः प्रत्येकं चतुरात्मनः। दिगादिषु स्थितास्तेषामधिपाश्च तदाख्यकाः। नाऽचार्यबुद्ध्या तैरुक्तमतोऽनुज्ञां गुरोरगात्। उत्तमाचार्यसम्प्राप्त्यै नावराचार्यतः क्वचित्। इच्छेदनुज्ञां श्रुत्वाऽपि नानुज्ञां प्रार्थयेत् ततः। ऋषिभ्यस्तूत्तमा देवा देवेभ्यो वायुरुत्तमः। वायोश्च भगवान् विष्णुर्न तस्मादुत्तमो गुरुः"इत्याचार्यसंहितायाम्।

अत्र ह न किञ्चन वीयाय। देवेभ्यः श्रुत्वा न ते[2] काचिद्धानिरभवदित्यर्थः ॥*॥

---

१ "संज्ञिकाः", २ "नच ते" इति प्र. पाठौ।

दध्रे तमाचार्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति स होवाच बहवो ह्यस्मिन् पुरुषे कामा नानात्यया व्याधिभिः परिपूर्णोऽस्मि नाशिष्यामीत्यथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच विजानाम्यहं यत् प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद् वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ॥१॥ अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥२॥ अथ हैनमन्वाहार्यपचनोऽनुशशासाऽपो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥३॥ अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवं विद्वा-

---

प्राणो ब्रह्म बलरूपं ब्रह्म। कमानन्दरूपम्। खं ज्ञानरूपम्।

"अपरब्रह्म[1] स प्राणः साक्षाद् यो बलदेवता। ज्ञानानन्दात्मकं पूर्णं परं ब्रह्म स्वयं हरिः। नैजानन्दबलोद्रेकः कमित्युक्तो मनीषिभिः। बलज्ञानसमाहारः पूर्णं[2] खमिति शब्दितम्। तदात्मकः परो विष्णुराकाश इति कीर्तितः। एवं प्राणस्तथाऽऽकाशो ब्रह्मणी द्वे प्रकीर्तिते" इति च।

प्राणशब्दस्य वायुरर्थः प्रसिद्धः। कखयोर्भिन्नवस्तुत्वाशङ्क्या[3] "कं च तु खं च न विजानामि" इत्याह। अत एवैक्याभिप्रायेण "यद् वाव कं तदेव खं यदेव खं तदेव कम्" इत्यूचुः॥*॥

"पृथुत्वात् पृथिवी विष्णुरग्निश्चाप्यङ्गनेतृतः। अन्नमत्तृत्वतो नित्यमादित्यश्चाऽदिरूपतः। आप आपालनाच्चैव देशनाद् दिश एव च। अनन्यराजो नक्षत्रमानन्दत्वाच्च चन्द्रमाः। प्राणोऽसौ बलरूपत्वादाकाशः पूर्तिहेतुतः। द्यौः प्रकाशस्वरूपत्वाद् वेदनाद् विद्युदेव च। यः सूर्यसोमविद्युत्सु[4] तत्तन्नामा हरिः परः। अहेयत्वादहंनामा गार्हपत्यादिसंस्थितः" इति तत्त्वसंहितायाम्।

---

१ "अपरं ब्रह्म" २ "पूर्णः खमिति शब्दितः" ३ "भिन्नार्थत्वशङ्कया" ४ "सोमसूर्यविद्युत्सु" इति प्र. पाठाः।

नुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥४॥ ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या चाऽऽचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याऽऽचार्यस्तमाचार्योऽभ्युवादोपकोसला३ इति भगव इति ह प्रतिशुश्राव ॥५॥ ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वाऽनुशशासेति को नु माऽनुशिष्याद् भो इतीहावे व निह्नुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निनितीदमिति ह प्रतिजज्ञे ॥६॥ लोकान् वाव किल सोम्य तेऽवोचन्नहं तु ते तद् वक्ष्यामि तद् यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥ ॥७॥ य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेत्येतस्मिन् न किञ्चन श्लिष्यति तद् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छत्येतं संयद्वाम इत्याचक्षत एतं हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेदैष उ एव वामनिरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥८॥ एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेदाथ यदु चैवास्मिञ्छव्यं

---

जीवैक्यपक्षे आदित्ये पुरुषश्चन्द्रमसि विद्युतीति भेदव्यपदेशो न युज्यते। "पृथिव्यग्निरन्नमादित्यः", "आदित्ये पुरुषः" इत्यादिनाऽऽदित्यादिशब्दवाच्यौ सप्तम्यर्थः प्रथमार्थश्च द्वौ प्रतीयेते। अतो नैक्यमुच्यते। "स एवाहमस्मि" इत्यन्तर्यामिणोः सर्वविशेषाभावज्ञापनार्थः[1]। पूर्वं "सोऽहमस्मि" इत्यभेदे तात्पर्याधिक्यज्ञापनाय।

> "अहमस्म्यादिकाः शब्दा अन्तर्यामिणि मुख्यतः। तत्सम्बन्धाज्जीवगाश्च तस्माद् वेदगता हरौ। अस्मच्छब्दोदितोऽन्तस्थ आत्मा व्याप्तो जनार्दनः। अग्नयो द्विविधं विष्णुमवोचन्नुपकोसले" इति सामसंहितायाम्।

नास्यापरपुरुषाः क्षीयन्ते भृत्यवानेव भवति। लोकी भगवल्लोकी भवति। इह च अवं च इहावे[2]। इहेति मनुष्यलोकस्था उच्यन्ते। अवेति पाताळस्थाः[3]। मानुषासुरौ भगवन्तं निह्नुत एव न वक्तुं समर्थौ। अतो देवा एव मामनुशशासुरित्यर्थः। ईदृशा इति वर्णतो ज्वालावर्णा इति। अन्यादृशाश्च करशिरश्चरणादिमन्तः। चन्द्रादिसर्वनामवत्त्वात् "यो देवानां नामधा एक एव" इति श्रुतेर्विष्णोरेव सर्वनामानि॥*॥ असङ्गभगवत्स्थानत्वाच्चक्षुषोऽसङ्गत्वमुच्यते—

---

१ "ज्ञापनार्थम्" २ "अव च इहावे" ३"पातालस्थाः" इति प्र. पाठाः।

कर्म कुर्वन्ति यदि च नार्चिषमेवाभिसंविशन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ् एति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याचद्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽवर्तन्ते नावर्तन्ते। ॥९॥*॥ इति तृतीयः खण्डः ॥*॥

एष ह वै यज्ञो योऽयं पवत एष यन्निदं सर्वं पुनाति यदेष यन्निदं सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गाताऽन्यतरां स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यपवदत्यन्यतरामेव वर्तनीं संस्कुर्वन्ति हीयतेऽन्यतरा स यथैकपाद् व्रजन् रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान् भवत्यथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यपवदत्युभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतरा स यथोभयपाद् व्रजन् रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान् भवति ॥१॥ प्रजापतिर्लोकानभ्यतपत् तेषां तप्यमानानां रसान् प्राबृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः स एतास्तिस्रो देवता अभ्यतपत् तासां तप्यमानानां रसान् प्राबृहदग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात् स एतां त्रयीविद्यामभ्यतपत् तस्यास्तप्यमानाया रसान् प्राबृहद् भूरित्यृग्भ्यो भुव इति यजुर्भ्यः स्वरिति सामभ्यस्तद् यद्यृक्तो रिष्येद् भूः स्वाहेति गार्हपत्ये जुहुयादृचा-

---

"यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुषु। तस्मै नमो भगवते वामनाय परात्मने" इति च महाकौर्मे।[1]

इमं मानवमावर्तं नाऽवर्तन्ते। मानवा यत्राऽवर्तन्ते स मानवावर्तः। तं मानवावर्तं प्रति नाऽवर्तन्ते। "चक्षुःस्थं वामनं वेद स पुनर्नैव जायते। मुक्तो दुस्तरसंसाराद् वामनं प्राप्नुतेऽचिरात्" इति च ॥*॥ "यज्ञाभिमानी यज्ञाख्यो वायुर्यज्ञे प्रतिष्ठितः। स शुद्धभाव इत्यस्माद् यज्ञयं पावयेद् यतः। अतो वायुर्यज्ञनामा तत्पादौ वाङ्मनःस्थितौ। दक्षिणोऽस्य मनःसंस्थो ब्रह्मर्त्विक् तस्य पूजकः। होत्राद्या वाचि संस्थस्य वामपादस्य पूजकाः। तस्मात् प्रातरनूवाकपरिधान्योर्यदन्तरा। ब्रह्मा चेदुत्सृजेद् वाचं यज्ञपाल्लोपवेद्[2] भवेत्।

---

१ "इति महाकौर्मे" २ "लोपकृत्" इति प्र. पाठौ।

मेव तद् रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टिं सन्दधात्यथ यदि यजुष्टो रिष्येद् भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद् यजुषामेव तद् रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टिं सन्दधात्यथ यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात् साम्नामेव तद् रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टिं सन्दधाति ॥२॥ तद् यथा लवणेन सुवर्णं सन्दध्यात् सुवर्णेन रजतं रजतेन त्रपु त्रपुणा सीसं सीसेन लोहं लोहेन दारु दारु चर्मणैवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टिं सन्दधाति भेषजकृतो हवा एष यज्ञो यत्रैवंविद् ब्रह्मा भवत्येष हवा उदक्प्रवणो यज्ञो यत्रैवंविद् ब्रह्मा भवत्येवंविदं हवा एषा ब्रह्माणमनु गाथा यतो यत आवर्तते तत्तद् गच्छति मानवो ब्रह्मैवैकर्त्विक् कुरूनश्वाऽभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदम् नानेवंविदम् ॥३॥*॥ इति चतुर्थः खण्डः ॥*॥

इति श्रीच्छन्दोगोपनिषदि चतुर्थोऽध्यायः

ॐ॥ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग् वाव वसिष्ठो यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्च ॥१॥

---

वाङ्मनःपादयज्ञाख्यप्रतिमो वायुरीरितः। ध्यायन् वायुं हरिं चैव ततो ब्रह्मा मुनिर्भवेत्। ॥*॥ अग्निर्नासिक्यवायुश्च सूर्यो लोकरसास्त्रयः। अग्ने रसस्तु ऋग्वेदमानी ब्रह्मा प्रकीर्तितः। नासिक्यवायोस्तु रसो यजुर्वेदात्मको हरः। सामवेदाभिमानी तु वायुः सूर्यरसः स्मृतः। वराहसिंहकपिलास्तेषां भूरादिनामकाः। व्याहृतीभिस्ततो जुह्वन् ब्रह्मैवंविद् विरिष्टितः। सर्वान् स ऋत्विजो रक्षेद् ब्रह्मैवंवित् ततो भवेत्" इति च।

उदक्प्रवणः ऊर्ध्वप्रवणः ऊर्ध्वलोकानुसारी। यज्ञस्य दुरिष्ट्या यतो यतः स्थानादावर्तते तत्तत् स्थानमेवंविदा ब्रह्मणा गच्छति। तद् ब्रह्मैव एकर्त्विक्। कुरून् कर्तॄन् यजमानादीनभिरक्षति। अश्वा आशुज्ञानी। "वा गतिगन्धनयोः" इति धातोः। गतिशब्दश्चावगतौ भवति। "दीर्घबिन्दुविसर्गादीनां लोपो वा" इति सूत्रादाशुवैव अश्वा ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीच्छन्दोगोपनिषद्भाष्ये
चतुर्थोऽध्यायः

चक्षुर्वाव प्रतिष्ठा यो हवै सम्पदं वेद सं हास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव सम्पद् यो हवा आयतनं वेदाऽयतनं ह स्वानां भवति मनो हवा आयतनम् ॥२॥ अथ ह प्राणा अहंश्रेयसि व्यूदिरेऽहं श्रेयानस्म्यहं श्रेयानस्मीति॥ ॥३॥ ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति तान् होवाच यस्मिन् व उत्क्रान्त इदं शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकततें मज्जीवितुमिति॥ ॥४॥ यथाऽकला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक् चक्षुर्होच्चक्राम तत् संवत्सरं प्रोष्य पर्येत्योवाच कथमशकततें मज्जीवितुमिति ॥५॥ यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः श्रोत्रं होच्चक्राम तत् सवत्सरं प्रोष्य पर्येत्योवाच कथमशकततें मज्जीवितुमिति ॥ ॥६॥ यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रं मनो होच्चक्राम तत् संवत्सरं प्रोष्य पर्येत्योवाच कथमशकततें मज्जीवितुमिति ॥७॥ यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनोऽथ ह प्राण उच्चिक्रमिषन् ॥८॥ स यथा सुहयः पड्वीशशङ्कून् सङ्खिदे-देवमितरान् प्राणान् समखिदत् तं हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि

ॐ॥ "यः श्रेष्ठज्येष्ठमखिलदेवानां[1] वायुमञ्जसा। वेद स स्वसमानानां ज्येष्ठः श्रेष्ठो विमुक्तिगः। समीपे वसतां श्रेष्ठो वसिष्ठस्यैव वेदनात्। एकस्थाने स्थितिस्तु स्यात् प्रतिष्ठाज्ञस्य चेच्छतः। सम्पद्वेत्तुः सम्पदः स्युर्गृहं चाऽयतनं विदः। ज्येष्ठः श्रेष्ठो वसिष्ठश्च सम्पदायतनं तथा। वायुरेव महांस्तस्य प्रसादादग्निरेव तु। उपचारवसिष्ठः[2] स्यात् प्रतिष्ठैवं रविस्ततः। सम्पदिन्द्रस्तथैवोक्तो रुद्र आयतनं तथा" इति प्राभवे[3]। "सर्वेन्द्रियाणां व्यापारान् प्राण एव करोत्ययम्। इन्द्रियस्थः पृथक् चासौ शक्तोऽपि स्वयमेव तु। षण्मासात् पूर्वबालानां[4] केवलप्राणतो[5] भवेत्। व्यापार्य मनसा सर्वमतः पश्चादसंस्मृतिः। तुरीयायामवस्थायां प्राणादेव विबोधनम्। तथाऽपि संस्मृतिस्तत्र प्राणवश्यतया भवेत्। प्राणस्य वश्यता नाम तद्भक्त्या स्यात् प्रसादतः[6]। प्राणे वश्ये मनो वश्यमिन्द्रियाणि च सर्वशः" इति च।

१ "श्रेष्ठं ज्येष्ठमखिलदेवानाम्" २ "उपचारतो वसिष्ठः" ३ "प्रभावे" ४ "पूर्वं बालानां" ५ "केवलं प्राणतः" ६ "भक्त्या स्यात् तत्प्रसादतः" इति प्र. पाठाः।

मोत्क्रमीरिति ॥९॥ अथ हैनं वागुवाच यदहं वसिष्ठाऽस्मि त्वं तद् वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठाऽस्मि त्वं तत् प्रतिष्ठोऽसीत्यथ हैनं श्रोत्रमुवाच यदहं सम्पदस्मि त्वं तत् सम्पदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ॥१०॥ न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाऽचक्षते प्राणो ह्येवैतानि सर्वाणि भवति, स होवाच किं मेऽन्नं भविष्यतीति यत् किञ्चिदिदमा श्वभ्य आ शकुनिभ्य इति होचुः ॥११॥ तद् वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न हवा एवंविदि किञ्चनानन्नं भवतीति स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तमाद् वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैय्याघ्रपद्यायोक्त्वोवाच ॥१२॥ यद्यप्येतच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीत्यथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेद् वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपत्यमो नामास्यमा हि ते सर्वमिदं स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः स मा ज्यैष्ठ्यं श्रैष्ठ्यं राज्यमाधिपत्यं गमयत्वहमेवेदं

---

अक्षेषु प्रति प्रति स्थितत्वादनः प्रत्यक्षम्।

"प्राणविज्ञानयोग्यस्तु रुद्रो मुख्यतया स्मृतः। तस्मात् स सर्वभोक्ता स्यात् तदन्येषां स्वयोग्यतः" इति च। "सिद्धमेवान्नवस्त्राद्यं विष्णोः स्वातन्त्र्यतः सदा। स्वार्थे समर्पयेद् विष्णौ यथा प्राणे सुराः पुरा" इति कर्मानुपूर्व्याम्। "प्राणस्य वस्त्रबुद्ध्या तु भोजनोभयतः पिबन्। स्वर्गे मुक्तौ तथा दिव्यवस्त्रलाभी भवत्यलम्" इति प्रभञ्जने। "योग्यस्य प्राणविद्यायाः[1] स्थाणोरपि हि तच्छ्रुतेः। पलाशाद्यं भवेदत्र परतो मुक्तिरेवच। विष्णोर्ज्ञानमनुप्राप्य भवेन्नास्त्यत्र संशयः" इति प्राणसंहितायाम्। "ज्येष्ठश्रेष्ठादिकैर्हुत्वा प्राणायात्र परत्र च। ज्येष्ठः श्रेष्ठः समानेभ्यो भवेन्नात्र विचारणा" इति च।

---

१ "प्राणविद्यायां" इति प्र.पाठः।

सर्वमसानीत्यथ खल्वेतयर्चा पच्छ आचामति ॥१३॥ तत् सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठं सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति निर्णिज्य कंसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् ॥१४॥ तदेष श्लोकः यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने तस्मिन् स्वप्ननिदर्शन इति ॥ ॥१५॥*॥ इति प्रथमः खण्डः ॥*॥

श्वेतकेतुर्हाऽरुणेयः पञ्चालानां समितिमेयाय तं ह प्रवाहणो जैबलिरुवाच ॥१॥ कुमार त्वाऽनुशिषत् पितेत्यनु हि भगव इति वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्तन्ता३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति न भगव इति वेत्थ यथाऽसौ लोको न सम्पूर्यता३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति ॥२॥ अथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथं सोऽनुशिष्टो ब्रुवीतेति स हाऽयस्तः पितुरर्द्धमेयाय तं होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् तेषां नैकञ्चनाशकं विवक्तुमिति स होवाच ॥३॥ यथा मा त्वं तातैतानवदो यथाऽहमेषां नैकञ्चन वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥४॥ स ह गौतमो राज्ञोऽर्द्धमेयाय तस्मै ह प्राप्तायार्हां चकार स ह प्रातः सभाग उदेयाय तं होवाच मानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव ब्रूहीति स ह कृच्छ्री बभूव तं ह चिरं वसेत्याज्ञापयाञ्चकार तं होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तु पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥५॥ असौ वाव लोको गौतमाग्नि-

---

सवितुः जगत्प्रसवितुर्विष्णोः सकाशात् वयं भोजनं रक्षां सर्वभोगांश्च वृणीमहे। भगस्य समग्रैश्वर्यादिसर्वगुणस्वरूपस्य विष्णोः पुरुषं तुरं वायुं श्रेष्ठं सर्वधातॄणामुत्तमं च धीमहि ।

"नारायणीयं तं वायुं चिन्तयित्वोत्तमोत्तमम् । जगत्प्रसवितुर्विष्णोः सकाशाद् भोगमामुमः" इति च ॥*॥ "नारायणादयः पञ्च क्रमात् पञ्चाग्नयः स्मृताः । अदना-

स्तस्याऽदित्य एव समिद् रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥६॥ पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुतेर्वर्षः सम्भवति ॥७॥ पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नं सम्भवति ॥८॥ पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् प्राणो धूमो जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति ॥९॥ योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद् यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति ॥१०॥ इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा मासानन्तः शयित्वा यावद् वाऽथ जायते स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥११॥*॥ इति द्वितीयः खण्डः ॥*॥

तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषो-

---

दङ्गनेतृत्वान्नितरामचलत्वतः[1]। समेधनात् समिद् विष्णुर्धूत्काराद् धूम उच्यते। अरं चितत्वादर्चिश्च सोऽङ्गारोऽङ्गरतेरपि। विविधं स्फुरणाच्चैव विष्फुलिङ्ग इतीरितः। पुनर्नारायणाद्यात्मा प्रत्येकं पञ्चरूपवान्। आदित्यः स तथाऽऽदानाद् रश्मिः स रतिरूपतः[2]। तमसाऽहननीयत्वादहश्चन्द्रः परं सुखम्[3]। अनन्यराजो नक्षत्रं वायुर्ज्ञानायुरूपतः। अभ्रमभ्भरणाद् विष्णुर्विद्युद् विद्योतनादपि। अशनादशनिश्चैव[4] निह्लादाद् ध्रादुनिस्तथा। संवत्सरो वासनाच्च स आकाशः प्रकाशनात्। रात्रिश्च रतिदानात् स दिशतीति दिशः स्मृतः। अवान्तरं दिशेद् यस्मादवान्तरदिगुच्यते। वचनाद् वाक् तथा प्राणस्त्वननाच्चक्षुरुच्यते। दर्शनाच्छ्रवणाच्छ्रोत्रं जिह्वा वै होमतः स्मृतः। उपस्थितेरुपस्थः स उपमन्त्रकृदेव सः। योनिर्युनक्ति यस्मात् स स चान्तःकृच्च[5] नन्दनः। असौ लोकः प्रकाशत्वात् प्राणस्थत्वाच्च केशवः। पर्जन्यो जनको यस्मात् पृथिवी प्रथितत्वतः। पुरुषः पुरु यस्मात् स योषा जोष्यो यतोऽखिलैः" इति सामसंहितायाम्।

---

१ "अगनेतृत्वात्" २ "रश्मी रतिशरूपतः" ३ परः सुखम्" ४ "निर्ह्रादात्" ५ "सर्वान्तःकृच्च" इति प्र. पाठाः।

ऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ् एति मासांस्तान्/ मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयति ॥१॥ एष देवयानः पन्था इत्यथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमात् रात्रिं रात्रेरपरपक्षमपरपक्षाद् यान् षड् दक्षिणैति मासांस्तानेति [संवत्सरमभिप्राप्नुवन्ति[१]] ॥२॥ मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद् देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाश-माकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति॥३॥ त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्ते/ ततो वै खलु दुर्निष्प्रपतनं यो यो ह्यन्नमत्ति यो वा रेतः सिञ्चति तद्भूय एव भवति ॥४॥ तद् य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत् ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा/॥५॥ अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत /॥६॥ तदेष श्लोकः । स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्प-मावसन् ब्रह्महा च । एते पतन्ति चत्वारः पञ्चमश्चाऽचरंस्तैरित्यथ ह य एतानेवं पञ्चाग्नीन् वेद न सह तैरप्याचरन् पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥७॥*॥ इति तृतीयः खण्डः ॥*॥

---

"अभ्रधूमादिभावस्तु जीवस्याभ्रादिसंस्थितिः। अभ्रादिमानिरूपं तु ज्ञानप्राप्यं[२] यतो भवेत्" इति च।

परमस्य जन्यमिति पर्जन्यः।

"पञ्चपञ्चस्वरूपेण सूर्यादौ संस्थितो हरिः। स्वर्गादौ चापि तन्नामा तद्योगान्नामिनः परे"

---

१ यद्यपि "नैते संवत्सरमभिप्राप्नुवन्ति" इत्येव प्रचलितः श्रुतिपाठः । परभाष्यादिष्वप्ययमेव पाठः स्वीकृतः। वेदेशीयेऽप्येवम्। तथापि प्राचीनश्रुतिकोशेष्वयं पाठः पठ्यते। व्याख्यातश्च खण्डार्थे—"मासानेति दक्षिणायनमानिलोकं प्राप्नुवन्ति इत्यर्थः। एकवचनं बहुवचनार्थे। ते धूममित्युपक्रमात्" इति । खण्डार्थपक्षे "संवत्सरमभिप्राप्नुवन्ति" इतीयान् न श्रुतिभाग इति भासते। २ "ज्ञानिप्राप्यं" इति प्र. पाठः।

प्राचीनशाल औपमन्यवः सत्ययज्ञो पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्क-राक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसा-ञ्चक्रुः ॥१॥ को न आत्मा किं ब्रह्मेति, ते ह सम्पादयाञ्चक्रुरुद्दालको हवै भग-वन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छामेति तं हाभ्याजग्मुः स ह सम्पादयाञ्चकार ॥२॥ प्रक्ष्यन्ति मामिमे महाशाला महा-श्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति तान् होवा-चाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ता-भ्यागच्छामेति तं हाभ्याजग्मुस्तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार॥३॥ स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नाना-हिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद् भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ते होचुर्येन हैवार्थेन पुरुषश्चरेत् तं हैव वदेदात्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहीति तान् होवाच प्रातर्वः प्रति वक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच ॥४॥ औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यतेऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद् यन्मां नाऽगमिष्य इति ॥५॥ अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव बहु विश्वरूपं कुले दृश्यते प्रवृत्तोऽश्वतरीरथो दासी निष्कोऽत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते ॥६॥ चक्षुष्ट्वेतदात्मन

---

इति च ॥*॥ "प्रत्यब्द्यज्ञकृत् सम्यङ् महाशालः प्रकीर्तितः । वेदवेदार्थवित् सम्यङ् महाश्रोत्रिय उच्यते ॥*॥ क्रीडात्मकत्वाद् द्यौश्चैवं सुतेजाश्चातितेजसा । स्वर्गा-धारं शिरो विष्णोः सर्वरूपातिदर्शनात् । चक्षुस्तु विश्वरूपाख्यमादानादायुषामपि ।

---

१ "द्याख्यं च" इति प्र. पाठः ।

इति होवाचान्धोऽभविष्यो यन्मां नाऽगमिष्य इति ॥७॥ अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैय्याघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वा पृथग् वलय आयन्ति पृथग्रथश्रेणयोऽनुयन्त्यत्त्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद् यन्मां नाऽगमिष्य इति ॥८॥ अथ होवाच जनं शार्कराक्ष्यं शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं बहुलोऽसि प्रजया च धनेन चात्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्दोहस्त्वेष आत्मन इति होवाच सन्दोहस्ते व्यशीर्यद् यन्मां नाऽगमिष्य इति ॥९॥ अथ होवाच बुडिलमाश्वतराश्विं वैय्याघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं रयिमान् पुष्टिमानस्यत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते वस्तिस्त्वेष आत्मन इति होवाच वस्तिस्ते व्यभेत्स्यद् यन्मां नाऽगमिष्य इति ॥१०॥ अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाच॥११॥ एष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्चात्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नाऽगमिष्य इति ॥१२॥*॥ इति चतुर्थः खण्डः ॥*॥

---

आदित्याख्यं च सूर्यस्याप्याश्रयं सर्वदा स्मृतम्। वाय्वादिप्राणशक्यं न यत् तत्कर्ता हरेर्यतः। प्राणस्तेन पृथग्वर्त्मा वायुर्ज्ञानायुरूपतः। वायोरप्याश्रयो नित्यं बहुत्वात् बहुलः स्मृतः। आकाशनामा चाऽदीप्तेर्मध्यदेहो रमापतेः। व्याप्तत्वादाप इत्युक्तो रयी रतिकरत्वतः। वस्तिराकाशवाय्वोश्च तावाधारौ प्रकीर्तितौ। प्रथनात् पृथिवी नाम्ना[1] प्रतिष्ठा च प्रतिष्ठितेः। पादौ भगवतो विष्णोः पृथिव्याश्रय एव च। उत्तमानां हि पादेन सर्वं रूपं हि कथ्यते। विष्णोः पदमिति ह्यस्मात् प्रथितिर्वैदिकी स्मृता ॥*॥

---

१ "पृथिवीनामा" इति प्र. पाठः।

तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ यस्त्वे-
तमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु
सर्वेष्वात्मस्वन्नमत्ति तस्य हवा एतस्याऽत्मनो वैश्वानरस्य मूर्धेव सुतेजाश्चक्षुर्विश्व-
रूपः प्राणः पृथग्वर्त्मा सन्दोहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर
एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥१॥
तद्यद् भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् तां
जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि
तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत् किञ्च
द्यौश्चाऽदित्यश्चाधितिष्ठतस्तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन
तेजसा ब्रह्मवर्चसेनेति ॥२॥ अथ यां द्वितीयां जुहुयात् तां जुहुयाद् व्यानाय
स्वाहेति व्यानस्तृप्यति व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमा-
स्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत् किञ्च दिशश्च
चन्द्रमाश्चाधितिष्ठन्ति तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन
तेजसा ब्रह्मवर्चसेनेति ॥३॥ अथ यां तृतीयां जहुयात् तां जुहुयादपानाय स्वाहे-
त्यपानस्तृप्यत्यपाने तृप्यति वाक् तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ
तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत् किञ्च पृथिवी चाग्नि-
श्चाधितिष्ठतस्तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन
तेजसा ब्रह्मवर्चसेनेति ॥४॥ अथ यां चतुर्थीं जुहुयात् तां जुहुयात् समानाय
स्वाहेति समानस्तृप्यति समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्य-
स्तृप्यति पर्जन्ये तृप्यति विद्युत् तृप्यति विद्युति तृप्यन्त्यां यत् किञ्च विद्युच्च
पर्जन्यश्चाधितिष्ठतस्तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन
तेजसा ब्रह्मवर्चसेनेति ॥५॥ अथ यां पञ्चमीं जुहुयात् तां जुहुयादुदानाय स्वाहे-
त्युदानस्तृप्यत्युदाने तृप्यति वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे
तृप्यति यत् किञ्च वायुश्चाऽकाशश्चाधितिष्ठतस्तत् तृप्यति तस्यानु तृप्तिं तृप्यति

---

प्राणश्चक्षुस्तथाऽऽदित्य इत्येका देवता स्मृता। पूर्वद्वारपतिर्विष्णोर्व्यानः श्रोत्रं च
चन्द्रमाः। दक्षिणद्वारपस्त्वेको वागपानोऽग्निरेव च। पश्चिमद्वारपोऽप्येकः समानो मन
एव च। इन्द्र इत्येक एवोक्त उत्तरद्वाररक्षकः। उदानो वायुरित्येक ऊर्ध्वद्वाराधिपश्च
सः। स एवाऽकाशनामा च लक्ष्म्याविष्टो विशेषतः। पृथिवीनामिका श्रीस्तु द्यौर्दिशो

प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥६॥ अथ स य इदमविद्वानग्नि-होत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात् तादृक् स्यादथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति तस्मादु हैवंविद् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद् वैश्वानरे हुतं स्यादिति ॥७॥ तदेष श्लोकः । यथेह क्षुधिता बाला मातरं पर्युपासते । एवं सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ॥८॥*॥ इति पञ्चमः खण्डः ॥*॥

इति श्रीच्छन्दोगोपनिषदि पञ्चमोऽध्यायः

---

विद्युदेव च । वायुपत्नी समुद्दिष्टा तत्तद्द्वाराधिपाश्च ते । अधितिष्ठन्ति ते सर्वे नारायण-मनामयम् । यद् विष्णुर्ज्ञानरूपत्वात् किमानन्दिस्वरूपतः[1] । एतेषु तृतेषु हरिस्तृप्यत्येषां प्रियो ह्यसौ । सूर्यप्रसादात्तु नराः पूर्वद्वारेण केशवम् । प्राप्नुवन्त्यथ सोमस्य प्रसादात् पितरस्तथा । द्वारेण दक्षिणेनैव गन्धर्वाः पश्चिमेन तु । अग्निप्रसादादृषय उत्तरेणेन्द्र-संश्रयात् । शिवाद्या वायुमाश्रित्य यान्त्यूर्ध्वेन हरिं सुराः । वैश्वानराख्यविष्णोस्तु सम्यग्ज्ञानेन सर्वशः । वैश्वानरज्ञानयोग्याः साक्षादेव सुराः स्मृताः । तस्मात् तेषां फलं सर्वमन्येषां तु स्वयोग्यतः" इत्यादि वैश्वानरविद्यायाम् ॥*॥ "को न आत्मा किं ब्रह्म", "सोऽयमात्मा चतुष्पात्", "स्थूलभुग् वैश्वानरः प्रथमः पादः", "वैश्वानरः साधारणशब्दविशेषात्", "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इत्यादेश्च वैश्वानरो विष्णुरिति सिद्धम् । "स वायुः स आकाशः", "वायुश्चाऽकाशश्चाधिष्ठितः" इति वचनाद् वायो रूपमन्याधिष्ठितमाकाशाख्यं वायोः स्वरूपमिति विज्ञायते । "आकाशनामा विघ्नेशो वायुश्चाऽकाशकः स्मृतः। आकाश इति लक्ष्मीश्च तथाऽकाशो हरिः स्वयम्" इति शब्दनिर्णये । "सुतेजोविश्वरूपादिभेदेनाङ्गानि मापतेः । अभिन्ना-न्यपि कथ्यन्ते लोकदृष्टिविभेदतः" इति च ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीच्छन्दोगोपनिषद्भाष्ये
पञ्चमोऽध्यायः

---

१ "आनन्दस्वरूपतः" २ "इति" इति प्र. पाठौ ।

ॐ॥ श्वेतकेतुर्हाऽऽरुणेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तं ह पितोवाच श्वेतकेतो यन्नु खलु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति ॥१॥ यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥२॥ यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद् वाचाऽऽरम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् ॥३॥ यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यम् ॥ ॥४॥ एवं सोम्य स आदेशो भवतीति न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवांस्त्वेव मे तद् ब्रवीत्विति तथा सोम्येति होवाच ॥५॥*॥ इति प्रथमः खण्डः ॥*॥

---

ॐ ॥ "अधीत्यब्दद्वादशत्वात् द्वादशाब्द इतीरितः। श्वेतकेतुर्भारते तु नोत्पत्तिद्वादशत्वतः" इति वाक्यनिर्णये। "यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयाः। विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च। यथा स्वर्णस्य विज्ञानात् सर्वं लोहमयास्तथा। प्राधान्याद् विष्णुविज्ञानाद् विज्ञातं स्याज्जगत् सदा। अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु। ज्ञायते नखनिकृन्तन्यां यथा सर्वमयोमयम्। किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम्। अनन्याधीनविज्ञानादन्याधीनं तथैव च। मृदयोलोहनाम्नां हि ज्ञानात् साङ्केतिकं यथा" इत्यादि सामसंहितायाम् ॥*॥ "स्वर्णं लोहमणिश्चैव पुरटं चाभिधीयते" इति शब्दनिर्णये।

विकारत्वविवक्षायामेकपिण्डमणिशब्दा व्यर्थाः स्युः। "मृत्तिकेति", "लोहमणिरिति", "कृष्णायसमिति" अत्र इतिशब्दा नामधेयशब्दाश्च व्यर्थाः स्युः। विकारमिथ्यात्वविवक्षायां मृत्तिकैव सत्यं लोह एव सत्यं कृष्णायसमेव सत्यमित्येव स्यात्। नतु नामधेयादिशब्दाः। नच वाचारम्भणमात्रमिति मात्रशब्दोऽस्ति। नचाऽरभ्यस्यारम्भणमिति युज्यते शब्दः। क्रिया ह्यारम्भणम्। अतो वाचा नाम्नामारम्भणं विकारः विविधाकारः विक्रियमाणः; सत्यं नामधेयं सर्वदा विद्यमानं नामधेयं मृत्तिकेत्यादय इत्यर्थः। सत्त्वेन कालतस्ततं ज्ञायते विद्वद्भिरिति नित्यत्वेन प्रसिद्धमेव सत्यमित्यत्र विवक्षितम्। सङ्केतेन क्रियमाणानि ह्यन्यानि नामानि। अतो विकाररूपाणि। विकार-

---

१ "नखकृन्तन्या" २ "कार्ष्णायसमिति" ३ "कार्ष्णायसमेव" ४ "विकारो विक्रियमाणः" इति प्र. पाठाः।

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत इति कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत् त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत् तेजोऽसृजत तत् तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद् यत्र क्वच शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद् यत्र क्वच वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदन्नाद्यं जायते ॥१॥ तेषां खल्वेषां

---

शब्दस्य नियतपुंल्लिङ्गत्वादारम्भणं विकार इति वेदाः प्रमाणमितिवद् युज्यते। नच मृत्तिकादिनामविकारः साङ्केतिकनाम[1]। प्राधान्यमेवात्र मृत्तिकादिनामवद् भगवतो विवक्षितम्। सृष्टिश्च प्राधान्यार्थमेवोच्यते[2] ॥*॥ एकमेवाद्वितीयं स्वगतभेदवर्जितं समानवर्जितं च।

"एकमेवाद्वितीयं तत् समाधिकविवर्जनात्[3]। स्वगतानां च भेदानामभावाद् ब्रह्म शाश्वतम्" इति प्रवृत्ते। "भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः। समाधिकनिवृत्त्यर्थमद्वितीयपदं तथा। भेदाभेदेऽप्येकशब्दो यतोऽवयविनि स्थितः। एकमेवेत्यतः प्राह नारायणमियं श्रुतिः। समे द्वितीयशब्दः स्यादद्वितीयोऽसमत्वतः। अधिकः[4] कुत एव स्यादित्याह परमा श्रुतिः" इति सामसंहितायाम्।

नच विजातीयभेदवर्जनं नाम कुत्रचित् प्रसिद्धम्। तत्प्रमाणाभावाच्च।

"एक एवाद्वितीयो भगवांस्तत्सदृशपरो नास्ति[5]" इति च श्रुतिः। "एको भगवांस्तत्सदृशपरौ न स्तः" इति च।

विजातीयाभावे "येनाश्रुतं श्रुतं भवति" इत्यादिविशेषणं च व्यर्थम्। यस्य कस्यचिज्ज्ञानं तज्ज्ञानमेव भवतीति। अज्ञानमपि ज्ञानमेव भवति। भेदाभावात्। नच मिथ्या सत्यमिति भेदः। तस्यैव विजातीयत्वप्राप्तेः। तद्भेदस्य मिथ्यात्वे तदभेदस्य सत्यत्वप्रसङ्गाच्च। मिथ्यासत्ययोरैक्य इदं मिथ्येदं सत्यमिति[6] भेदाभावाज्जीवेशभेदादेरपि सत्यत्वप्रसङ्गः। अतः परमार्थं ब्रह्मान्यन्मिथ्येत्यपि न युज्यते। अतः सजातीयस्वगत[7]भेदोऽधिकाख्यं विजातीयं चात्र निषिध्यते।

"सर्वोत्तमत्वात् सन्नामा हरिर्नारायणः प्रभुः। सोऽसृजत् प्रथमं देवीं तेजआख्यां श्रियं सतीम्। तत्र[8] स्थितेन रूपेण साऽजैव हि यतः सदा। तेज इत्युच्यते तस्माज्ज्वनेर्वा तत एव तु। यदस्याः सृष्टिकृद् रूपं विद्याख्यं जायते हरेः। मन्वाख्यः प्राण एवास्या अम्नामा जायते हरेः[9]। ब्राह्मणादिचतुर्वर्णस्ततश्चान्नाभिधो हरः। तेजःसंस्था च सा देवी प्राणोऽप्सु स्थित एव च। ततस्तेजस एवाऽपो जायन्तेऽन्नस्थितो हरः। जायतेऽ-

---

१ "साङ्केतिकं नाम" २ "एवात्रोच्यते" ३ "समाभ्यधिकवर्जनात्" ४ "साधिकः" ५ "तत्सदृशः परो नास्ति" ६ "इदं सत्यमिदं मिथ्येति" ७ "सजातीयः स्वगत–" ८ "तते" ९ "जायतेऽथच" इति प्र. पाठाः।

भूतानां त्रीण्येव बीजानि भवत्याण्डजं जीवजमुद्भिज्जमिति सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोद् यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ॥२॥ यदग्ने रोहितं रूपं तेजसस्तद् रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥३॥ यदादित्यस्य रोहितं रूपं तेजसस्तद् रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागादादित्यस्याऽदित्यत्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥४॥ यच्चन्द्रमसो रोहितं रूपं तेजसस्तद् रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागाच्चन्द्रमसश्चन्द्रत्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥५॥ यद् विद्युतो रोहितं रूपं तेजसस्तद् रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागाद् विद्युतो विद्युत्त्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥६॥ एतद्ध स्म वै तद् विद्वांस

---

तोऽद्भ्य एवान्नं पृथिवी त्वन्नरूपिणी ॥*॥ सृष्टेष्वेतेषु भगवानीक्षाश्चक्रे स केशवः। जीवाख्येनैव रूपेण योऽनिरुद्ध इति स्मृतः। तेन रूपेण लक्ष्म्यादीन् प्रविष्टो रूपनामनी। करिष्ये त्रिवृतश्चैतानेकैकं करवाणि च। इति मत्वा प्रविश्याथ तेभ्य इन्द्रादिनामपि। नामरूपाणि कृतवांस्तांश्चान्योन्यप्रवेशिनः। कृत्वाऽग्निसोमसूर्यादिष्वेतांस्त्रीन् निदधे[1] पुनः॥*॥ अतो यल्लोहितं रूपं श्रियस्तद् रूपसम्भवम्। यच्छुक्लं वायुजं विद्यात् कृष्णं चैव शिवोद्भवम्। तस्मादग्नेर्यदञ्चत्वमग्निनामप्रवर्तकम्। लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः। मुख्यैवमाददानत्वमादित्यस्य तदुद्भवम्। अत आदित्यनामैषां[2] नैवाऽदित्यस्य मुख्यतः। यच्चन्द्राह्लादकत्वं च तत् तेषां चन्द्रता तथा। विद्युद्विद्योतनं चैषां ततस्ते सर्वनामिनः। तथैव सर्वरूपं च तद्रूपप्रतिबिम्बितम्। सर्वरूपाश्च ते तस्माल्लोहितादिक्रमेण तु। अतोऽन्यनामधेयं तु वाचाऽऽरम्भणहेतुतः। साङ्केत्येन विकारः स्यात् त्रयाणामेव नित्यता। यथा लक्ष्म्यादिकानां च नाम सङ्केततोऽन्यगम्। वाचाऽऽरम्भणहेतोस्तद् विकारो नैव मुख्यतः। मुख्यं नाम त्रिरूपाणीत्याद्यं वेदोदितं परम्। अतस्तदेव सत्योक्तं मुख्यं सत्यमितीर्यते। इन्द्रादिनामरूपाणि यथैव त्रिषु मुख्यतः। तदधीनत्वतस्तेषामेषामुच्चबलत्वतः। शिवनामानि रूपाणि तथा वायोस्तु मुख्यतः।

---

१ "विदधे" २ "तेषां" इति प्र. पाठौ।

आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ते ह्येभ्यो विदाञ्चक्रुर्यदु रोहितमिवाभूदिति तेजसस्तद् रूपमिति तद् विदाञ्चक्रुर्यदु शुक्लमिवाभूदित्यपां रूपमिति तद् विदाञ्चक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद् विदाञ्चक्रुर्यद्वविज्ञातमिवाभूदित्येतासामेव देवतानां समास इति तद् विदाञ्चक्रुर्यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ।।७।। अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ।।८।। तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वागन्नमयं सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।।९।। दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत् सर्पिर्भवत्येवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवत्यपां सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः

---

तदीयानि तथा लक्ष्म्यास्तदीयानि हरेस्तथा। तस्मात् स एव सर्वेशः सर्वरूपः स एव च। सर्वनामा स एवैकः सर्वशक्तिस्तथैवच। अन्येषां यच्च रूपाद्यं तत् तस्मात् प्रतिबिम्बितम्। एक एवाद्वितीयोऽसावतः सर्वोत्तमत्वतः। मुख्यत्वादेव सन्नामा सत्तज्ञानरूपतः। सत्यमित्युच्यते विष्णुः स त्वं नासि कथञ्चन। अतोऽनूचानमानी त्वं स्तब्धोऽसि कुत एव तु। त्वत्तोऽधिका अपीन्द्राद्यास्तदुच्चाश्च श्रियादयः। सर्वोच्चो भगवान् विष्णुर्न स्तम्भोऽस्यापि हि कचित्। अतो न विद्वन्मानी स्या महानस्मीति वा मनः। न ते स्यान्नैव च स्तम्भो ज्ञात्वा विष्णोर्बलं पर[1]म्। न हि विष्णोर्बलं ज्ञात्वा स्तम्भहेतुः कथञ्चन" इत्यादि सामसंहितायाम् ॥*॥

देवता एव मांसादिशब्दवाच्याः। तत्र प्रवेशात्। अश्यमानाश्चोपजीव्यत्वात्। नच दुःखं तासाम्। ऐश्वर्यात्। "तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृत्" इति प्रस्तुतत्वात्।

"जीव इति भगवतोऽनिरुद्धस्याऽख्या" इति च श्रुतिश्च[2]। "प्राणस्य प्राणश्चक्षुषश्चक्षुर्जीवस्य जीवं[3] प्रधानस्य प्रधानं भगवांश्चतुर्मूर्तिः" इति च। "प्राणाधारो हरेर्नान्यो[4] जीवशब्दस्ततो हरौ। संसारिणो जीवता तु जननाद् वाननेस्तथा[5]" इति च।

---

१ "परं बलम्" २ "इति च श्रुतिः" ३ "जीवः" ४ "हरिर्नान्यः" ५ "वानतस्तथा" इति प्र. पाठाः।

समुदीषति स प्राणो भवति तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग् भवत्यन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥१०॥ षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माऽशीः काममपः पिबाऽपोमयः प्राणो न पिबतो विच्छेत्स्यत इति स ह पञ्चदशाहानि नाऽशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूंषि सामानीति होवाच न वै मा प्रतिभान्ति भो इति तं होवाच ॥११॥ यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात् तेन ततोऽपि न बहु दहेदेवं सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात् तयैतर्हि वेदान् नानुभवस्यशानाथ मे विज्ञास्यसीति स हाऽशाथ हैनमुपससाद तं ह यत् किञ्च पप्रच्छ सर्वं ह प्रतिपेदे तं होवाच ॥१२॥ यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत् तेन ततोऽपि बहु दहेदेवं सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत् साऽन्नेनोपसमाहिता प्राज्वालीत् तयैतर्हि वेदाननुभवस्यन्नमयं सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥१३॥*॥ इति द्वितीयः खण्डः ॥*॥

उद्दालको हाऽरुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्

---

जीवशब्दस्य संसारिविषयत्वे[1] "तत् तेज ऐक्षत" इत्यादिना तेषामेव चेतनत्वावगतेर्नामरूपव्याकरणे जीवान्तरप्रवेशो[2] नापेक्षितः।

"प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः। त्रयोविंशतितत्त्वानां गणं युगपदाविशत्" इति[3] "यावद् बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र। तथोभयेषां त इमे हि लोका[4] बलिं हरन्तोऽन्नमदन्त्यमूढाः। त्वं नः स चक्षुः परिदेहि शक्ता देव क्रियार्थे यदनुग्रहेण" इति तत्त्वानां प्रार्थनानन्तरं भगवत एव तेषु प्रवेशोक्तेर्भागवते। यतश्च "स एष जीवेनाऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति" इति भगवत्येव जीवशब्दः प्रयुज्यते।

नह्यचेतनस्य मोदमानत्वमस्ति। अतोऽन्तर्यामिरूप एव जीवशब्दः।

"भोक्तुस्तु सुखदुःखानामन्तस्थो जीवनामकः। बहिस्थितस्तु सन्नामा भगवान् पुरुषोत्तमः" इति तत्त्वविवेके।

अग्नेरग्निरिति नाम मुख्यतो नास्ति। अग्निनामानि त्रीणि रूपाणीति नामधेयं सत्यमित्यादि॥*॥

---

१ "जीवशब्देन संसारिविवक्षायाम्" २ "जीवान्तरानुप्रवेशः" ३ "इति च" ४ "यथोभयेषां त इमे ह लोकाः" इति प्र. पाठः।

पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति ॥१॥ स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽयतनमलब्ध्वा बन्धनमेवोपाश्रयत एवमेव खलु सोम्य मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपाश्रयते ॥ ॥२॥ प्राणबन्धनं हि सोम्य मन इत्यशनायापिपासे मे सोम्य विजानीहीति यत्रैतत् पुरुषोऽशिशिषति नामाऽप एव तदशितं नयन्ते तद् यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यतीति तस्य क्व मूलं स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥३॥ अथ यत्रैतत् पुरुषः पिपासति नाम तेज एव तत् पीतं नयते तद् यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत् तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यतीति तस्य क्व मूलं स्यादन्यत्राद्भ्योऽद्भ्यः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ॥४॥ यथा खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका

---

स्वप्नान्तः[1] सुषुप्तिः ।

"स्वातन्त्र्यात् स्व इति प्रोक्तो विष्णुः सर्वेश्वरेश्वरः । तं प्राप्नोति मनोनामा संसारी स्वपितीत्यतः" इति च ।

मननान्मनोनामा संसारी ।

"शुङ्गमित्यङ्कुरं प्रोक्तं तन्मूलं भगवान् हरिः। जगतो मूलमप्येष निमित्तं न विकारवान् । बीजजीवो यथा मूलमङ्कुरस्याविकारतः । यथा पिता पुत्रतन्वस्तद्देहो[2] हि विकारवान् । एवं हरिर्मूलमपि न विकारी[3] कथञ्चन" इति च ।

प्राथम्याच्च तेजआद्या लक्ष्म्यादय इति सिद्धम् ।

"तेजोऽभिमानिनी लक्ष्मीः प्राणस्त्वबभिमानवान् । अन्नाभिमानी रुद्रश्च तिस्रस्ता देवताः पुरा" इति च ब्रह्माण्डे ।

"यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति" इति संसारिणो ब्रह्मप्राप्तिमुक्त्वा "स यथा शकुनिः सूत्रेण प्रबद्धः" इति तस्योपपादनात्, मनोनामा पुरुषः, प्राणनामा

---

१ "स्वप्नस्यान्तः" इति प्र. पाठः । २ "पुत्रतन्वाः" इति प्र. पाठः । तन्वम् इतिवत् तन्व इत्यपि इत्यादि समाधेयम् । ३ "विकारः" इति प्र. पाठः ।

भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत् त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥५॥ यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसानां समवहारमेकतां गमयन्ति ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः प्रजाः सति सम्पद्य न विदुः सति सम्पत्स्यामह इति ॥६॥ त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत् तदा भवन्ति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत् त्वमसि श्वेतकेतो इति भूय एव मा भगवान्

---

भगवान्। "सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्युपसंहारात्। प्रजाशब्दश्च चेतनेष्वेवं प्रसिद्धः।

"प्रजानां सुखदुःखेन राजाऽऽप्नोति शुभाशुभम्" इत्यादेश्च। "शरीरधातुकृत्त्वेन लक्ष्म्याद्याश्च मुमुक्षुणा। ध्येयास्तदीशितृत्वेन भगवान् पुरुषोत्तमः" इति वचनादनुसन्धानकर्तव्यताज्ञापनार्थं "तदुक्तं पुरस्तात्" इत्युक्तम्। मुक्तावुमा तु वागाख्या रुद्रं याति मनोऽभिधम्। वायुं याति शिवश्चापि वायुस्तेजोऽभिधां श्रियम्। वायुमादाय सा देवी याति विष्णुं परात् परम्। द्वारमात्रा तु सा देवी वायुप्राप्यो जनार्दनः। मृतिकाले च मुक्तौ च पुरुषा वाचमाप्नुयुः" इति सत्तत्त्वे। "योऽसौ नियमनाद् विष्णुः सारत्वात् स इति स्मृतः। अणिमा सूक्ष्मतो गम्य ऐतदात्म्यं च तद्वशम्। परानन्दत्वतः सत्यं[3] आत्मा पूर्णगुणत्वतः। सत्यतो नासि तत् त्वं हि मा भूत् ते स्तब्धता ततः। असुराः स्तब्धतां याता ब्रह्माहमिति मानिनः। असत्यं जगदित्याहुः सिद्धोऽहं बलवानिति। अनीश्वरं जगच्चाऽहुरप्रतिष्ठं तथैव च। चेतनैकत्वविषयान् वेदानाहुश्च सर्वशः। कुतर्कपरमा नित्यं न सहन्ते गुणान् हरेः। शास्त्रतत्त्वमविज्ञाय ब्रूयुर्वेदेषु चैकताम्। यान्ति चैव तमो घोरं परमात्मविनिन्दकाः। आलम्ब्य तन्मतं न त्वमेकत्वं विद्धि विष्णुना। एकताभावतो नैव भवेथाश्च महामनाः। तन्निष्ठा हि प्रजा यस्मात् तत्प्रतिष्ठाश्च मोक्षगाः। तन्मूलाश्च यतस्तासां तद्भावैः कुत एव तु ॥*॥ यदि स्वतोऽन्यः परमो देहेऽस्मिन् संव्यवस्थितः। न दृश्यते कुत इति भूयः पप्रच्छ पुत्रकः।

---

१"**सर्वाः प्रजाः**" इति प्र.पाठः। श्रुतिपाठोऽप्येवम्। परन्तु प्राचीनकोशेषु "**इमाः प्रजाः**" इत्येवासकृद् दर्शनात् तथैव श्रुतिपाठोऽपि सम्मतो भवेत्। एकत्र तु "सर्वाः प्रजाः" इत्यपि प्रतीकमग्राहि। २"**प्रजाशब्दश्चेतनेष्वेव**" ३ "**सत्यं**" ४ "**जगत् प्राहुः**" इति प्र. पाठाः। ५ "**देवेषु**" इति प्र. पाठः। वेदेषु चैकतामैक्यं प्रतिपाद्यं ब्रूयुः इति प्राचीनपाठार्थः। ६ "**एकत्वाभावतः**" इति प्र.पाठः। प्राचीनपाठे एकताया अभावत इति एकताया भावतः भावनया इति वाऽर्थः। ७ "**सद्भावः**" इति प्र. पाठः।

विज्ञापयत्विति तथा सोम्येति होवाच ॥७॥ इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात् समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीत्येवमेव खलु सोम्येमाः प्रजाः सत आगम्य न विदुः सतः आगच्छामह इति ॥८॥ त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत् तदा भवन्ति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत् त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥९॥ अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद् यो मध्येऽभ्याहन्याज्जीवन् स्रवेद् योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनाऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठत्यस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच ॥१०॥ जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत् त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥११॥ न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत् त्वमसि श्वेतकेतो इति भूय एव मा

---

अङ्गैरदृश्यमानोऽपि न भेदो नास्ति पुत्रक। यथा पुष्परसा युक्ता अजानन्तोऽपि भेदिनः। अजानन्तोऽपि पुरुषास्तथा विष्णोर्हि भेदिनः॥*॥ इति पित्रोपदिष्टः सन् पुत्रः पप्रच्छ तं पुनः। चेतनानामविज्ञानं कथमित्येव चिन्तयन्। तं प्रत्याह यथा नद्यश्चेतनाश्च समुद्रगाः। स्ववारि[1] नैव जानन्ति प्रजास्तद्वत् प्रजालये॥*॥ स्वतोऽन्योऽस्ति परो देह इति ज्ञायेत मे कथम्। इति पृष्टः पुनः प्राह वृक्षदृष्टान्ततः पिता। अभिमानिनोऽस्वतन्त्रत्वाद् भेदेन ज्ञायते तरौ। हरिः किमु मनुष्येषु शोषो ह्यस्यास्वतन्त्रतः॥*॥ ज्ञायते न कथं स्वमिन् सूक्ष्मे ज्ञाते परो हरिः। तत्रस्थ इति पृष्टः संस्तमा-

---

१ "स्वं वारि" इति प्र. पाठः।

भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥१२॥ लवणमेतदुदकेऽवधा-
याथ मा प्रातरुपसीदथा इति स ह तथा चकार तं होवाच यद् दोषा लवणमेत-
दुदकेऽवधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्ता-
दाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्त्यादा-
चामेति कथमिति लवणमित्यभिप्रास्यैनदथ मोपसीदथा इति तद्ध तथा चकार
तच्छश्वत् संवर्तते तं होवाचात्र वाव किल सोम्यैतमणिमानं न निभालयसेऽत्रैव
किलेति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत् त्वमसि
श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥
॥१३॥ यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने
विसृजेत् स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्राध्मायीताभिनद्धाक्ष आनीतोऽभिन-
द्धाक्षो विसृष्टस्तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं
व्रजेति स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गान्धारानेवोपसम्पद्येतैवमेवेहा-
ऽचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सत् सम्पत्स्यत
इति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत् त्वमसि श्वेतकेतो
इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥१४॥ पुरुषं
सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न
वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जाना-
त्यथ यदाऽस्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां
देवतायामथ न जानाति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स
आत्माऽतत् त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा
सोम्येति होवाच ॥१५॥ पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयम-

होद्दालकः सुतम्। वटबीजे यथा सूक्ष्मे महान्यग्रोधभावयुक्। न दृश्यतेऽभिमानी स एवं जीवगतो हरिः ॥*॥ कथं दृश्येत तच्छक्तिः पृथक् तस्य ह्यदर्शने। इति भावयुतं प्राह पुत्रमुद्दालकः पुनः। यथाऽप्सु लवणं व्याप्तं रसदृष्टयैव दृश्यते[1]। एवं चेतनगो विष्णुस्तद्भिन्नोऽपि न दृश्यते। कथं स ज्ञायते विष्णुर्भिन्न इत्यत्र चाब्रवीत्। यथैवान्योपदेशेन बद्धाक्षः स्वं गृहं[2] व्रजेत्। तथाऽऽचार्योपदेशेन भिन्नमीशं व्रजेत् पुमान् ॥*॥ यथा पुंसोऽस्वतन्त्रत्वं तज्ज्ञापयतु मा भवान्। इत्युक्त आह ज्ञाने हि दृष्टैवास्यास्व-

१ "रसदृष्टौ न दृश्यते" २ "स्वगृहं" इति प्र. पाठौ।

कार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनाऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यतेऽथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनाऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते स यथा तत्र न दह्यत ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत् त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति तद्धास्य विजज्ञाविति ॥१६॥
॥*॥ इति तृतीयः खण्डः ॥*॥

इति श्रीच्छन्दोगोपनिषदि षष्ठोऽध्यायः

---

तन्त्रता ॥*॥ अभेदज्ञानिनां दोषः कीदृशः स्यादितीरिते। प्राह यस्मात् परस्वानां हर्ता राज्ञा निहन्यते। किमु राज्ञोऽपहर्तैवं ब्रह्मस्तेनो हि हन्यते[1]। सर्वेषां शास्तृ यद् ब्रह्म तत् स्वरूपतया स्मरन्। ब्रह्मस्तेनो हि हन्येत[2] तमस्यन्धे सदैव हि। दोषा ह्यज्ञानपूर्वास्तु बद्ध्वा पुरुषमीशितुः। विष्णोर्हेतेति बाधन्ते चाभिमानकृतास्पदम्। ततो विचारय-न्त्येनं देवता हरिणा सह। नाहं विष्णुर्न स्वतन्त्रो नच पूर्णगुणोऽस्म्यहम्। मम स्वामी हरिर्नित्यं स्वतन्त्रः पूर्णसद्गुणः[3]। एवं दार्ढ्यं शपथवद् यदा कुर्यादयं तदा[4]। जीवन्नेवं[5] न तापी स्यादनन्तानन्दभोगतः[6]। तदा तेभ्यो मोचयित्वा हत्वा मिथ्याभिशंसिनः। स्वकीयं कुरुते विष्णुरन्यथा तैः सह प्रभुः। तमस्यन्धे पातयति महाकारागृहोपमे। महान्धे वा पातयति हस्तच्छेदादिसम्मिते। ततोऽधरे वा तद्योग्यं दृढाभेदं वधोपमे। तस्मादाचार्यतो ज्ञात्वा विष्णोर्भेदेन पूर्णताम्। उपासीत ततो मुक्तिं याति नास्त्यत्र संशयः" इत्यादि सामसंहितायाम्।

स्वयम्भूरिति विष्णुजत्वाद्धि विरिञ्चं[7] उच्यते। नहि विरिञ्चादेव विरिञ्चो जातः। "यो ब्रह्माणं विदधाति पूर्वम्" इत्यादिश्रुतेः। आत्मा भगवान्। ततो भूतत्वादात्मभूः। "दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्" इति वचनात्। अ इति विष्णुः। तज्जातत्वादजः। "अ इति ब्रह्म" इत्यादिश्रुतेः। "वासुदेवात् परो नैव ब्रह्मशब्दोदितो भवेत्" इत्यादेश्च। अतः स्वशब्दो विष्णा-वेव प्रसिद्धः। ततः "स्वमपीतो भवति" इति युज्यते। अप्ययो नामाविज्ञेयत्वेन प्रवेशः।

"अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यते। यथा नद्यः समुद्रे तु यथा विष्णुं लये प्रजाः" इति शब्दनिर्णये।

नच जीवस्य तद्भावोऽस्ति। उत्थितस्य सुप्तिसंसारयोः परामर्शदर्शनात्—

"अहं विश्वं भुवनमभ्यभवाम्", "आजन्ममरणं स्मृत्वा मुक्ता हर्षमवाप्नुयुः" इति। तद्भावस्यापरामर्शाच्च।

"प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरम्" इत्यादिश्रुतेश्च।

---

१ "निहन्यते" २ "निहन्येत" ३ "पूर्णषड्गुणः" ४ "सदा" ५ "जानन्नेव" ६ "अन्तरानन्दभोगतः" ७ "विष्णुजत्वाद् विरिञ्चः" इति प्र. पाठाः।

"सुषुप्त्युत्क्रान्त्योर्भेदेन" इति च भगवद्वचनम्। "सन्मूलाः सोम्येमाः सर्वा[1]ः प्रजाः सदायतनाः सत्प्रतिष्ठाः", "सति सम्पद्य न विदुः सति सम्पत्स्यामह इति", "सत आगम्य न विदुः सत आगच्छामह इति", "स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति", "अण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति"[2], "लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तं होवाच यद् दोषा लवणमेतदुदकेऽवधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्त्यादाचामेति कथमिति लवणमिति", "अत्र वाव किल सोम्यै[3] न निभालयसेऽत्रैव किलेति", "एतां दिशं गन्धारा एतां दिशं व्रजेति", "तेजः परस्यां देवतायां तावज्जानाति[4]", "अपहार्षीत् स्तेयमकार्षीत्" इत्यादि नवकृत्वोऽपि भिन्नस्य[5] वस्तुनो भेदापरिज्ञानादनर्थं सूक्ष्मत्वाद् भेदस्य दुर्विज्ञेयत्वं[6] च सदृष्टान्तं तात्पर्येणाऽऽह।

नचाभेदे कश्चिद् दृष्टान्त उक्तः। नहि शकुनिसूत्रयोर्नानावृक्षरसानां नदीसमुद्रयोर्वृक्षपरात्मनोर्धानापरात्मनोर्लवणोदकयोः[7] पुरुषगन्धारयोर्नियतज्ञानानियतज्ञानयोश्चोरापह्रियमाणयोश्चाभेदोऽस्ति। महातात्पर्यविरोधश्चाभेदे। विष्णोः परमोत्कर्षे हि सर्वप्रमाणानां महातात्पर्यं भगवताऽभिहितम्—

"क्षरः[8] सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। यस्मात् क्षरमतीतोऽहमक्षरादपिचोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः। यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स सर्वविद् भजति मां सर्वभावेन भारत। इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ। एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत" इति। "भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति", "ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः। यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते", "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव",

---

१ अत्रैकत्रैव मूलकोशेषु "सर्वाः" इति पदं पठ्यते। अन्यत्र सर्वत्रापि पुरेव "इमाः प्रजाः" इतीयदेव। एवमुत्तरत्रापि। २ "महान् न्यग्रोधः" इति विगृहीतपाठस्थाने प्राचीनकोशेष्वेवं समस्तं पठ्यते। निश्चीयते श्रुतिपाठोऽप्येवमिति। तत्वनिर्णयादिषु सर्वत्र संवादात्। ३ प्राचीनकोशेष्वेवमेव पठ्यते। "अत्र वाव किल सत् सोम्य" इति प्रचुरः श्रुतिपाठः। "अत्र वाव किल सोम्यैतमणिमानम्" इति तु प्राचीनश्रुतिकोशेषु तत्वनिर्णये च। ४ "तावन्न जानाति" इति प्र.पाठः श्रुतिविरुद्धः। ५ "नवकृत्वो भिन्नस्य" ६ "दुर्ज्ञेयत्वं" ७ "वृक्षपरमात्मनोर्धानापरमात्मनोः" इति प्र. पाठाः। ८ प्र. पाठे इतः पूर्वं "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च" इत्यर्धमधिकं पठ्यते।

"राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्। प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्। अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप। अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि। मया ततमिदं सर्वं जगदव्यक्तमूर्तिना। मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः। नच मत्स्थानि भूतानि पश्य मे योगमैश्वरम्", "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो मम भूतमहेश्वरम्। मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहनीं[1] श्रिताः। महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्", "यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते", "परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्। यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः", "मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्। सम्भवः सर्वभूतानां ततो भवति भारत", "ये मां ज्ञात्वा गुणैः पूर्णं न चलन्ति ततः क्वचित्। तैरेवाऽप्यो नचैवान्यैरहं सर्वेश्वरेश्वरः। ये तु मद्गुणसम्पूर्तौ ज्ञानस्नेहस्थिरात्मकाः। तेषां हस्तगतो मोक्षो मामेव स्मरतां सदा। ये मन्यन्ते गुणापूर्तिं तमस्तेषां परायणम्। नच तेभ्योऽप्रियो मह्यं यश्च स्यात् गुणपूर्तिवित्। स मामाप्नोति नियतं नच तस्मात् प्रियो मम। प्रमाणान्यखिलान्येव तर्काश्चैतत्पराः सदा। एतद्विरुद्धं यन्मानं तर्कश्चाऽभास एव सः[2]" इत्यादि[3]। "तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुः", "भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते। तस्माद् भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः", "असुन्वन्तं समं जहि दूणाशं यो न ते मयः। अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते", "सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये", "एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः", "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते", "सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः। बन्धमोक्षौ च कथ्यन्ते यस्योत्कर्षप्रसिद्धये। यस्योत्कर्षप्रसिद्ध्यर्थं सर्ववेदाश्च[4] युक्तयः। ज्ञात्वैव च यदुत्कर्षं मुच्यन्ते स हरिः परः", "अद्धा तमस्य महिमानमायवोऽनुष्टुवन्ति पूर्वथा" इत्यादिश्रुतिश्च विष्णोरुत्कर्षे महातात्पर्यं कथयति। "महातत्परता विष्णोरुत्कर्षेऽवान्तरा ततः। अन्यत्र सर्ववाक्यानां युक्तीनां च विशेषतः" इति ब्रह्माण्डे। "भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति", "ब्रह्मदृष्टिरुत्कर्षात्" इत्यादि च निर्णयात्मकं[5] भगवद्वचनम्।

नच शारीरपराभेदे तात्पर्यमित्यत्र किञ्चिन्मानम्। "अतत् त्वमसि" इति भेदस्य नवकृत्वोऽभ्यासाच्च।

"भेदव्यपदेशात्", "भेदव्यपदेशाच्चान्यः", "अनुपपत्तेस्तु न शारीरः", "शारीर-

१ "मोहिनीं" २ "एव तु" ३ "इत्यादौ" ४ "सर्वे वेदाश्च" ५ "इत्यादि निर्णयात्मकं" इति प्र. पाठाः।

श्चोभयेऽपि हि भेदेनैनमधीयते", "पृथगुपदेशात्" इत्यादिना सर्वत्र भेदस्यैव भगवता निर्णीतत्वाच्च। "पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यमिति[1]। पुरुषेणैवेदं सर्वं व्याप्तं यद् भूतं यच्च भाव्यम्। न भगवान् गोत्वेन मनुष्यत्वेन वा भवति। आ तृणादा करीषात् सर्वं भगवानिति मिथ्यादृष्टिरेषा। दधिसक्तवो घृतोदनमित्यादिषु व्याप्ति-शब्दाभावेऽपि व्याप्तिशब्दोऽवगम्यते। यथा[3] दधिसिक्ताः सक्तवो घृतसिक्तमोदनम्" इति च श्रुतिः[4]। "पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यमिति पुरुषेण हीदं नेनीयते[5]" इति च।

अतः सर्वप्रमाणानां भगवदुत्कर्ष एव महातात्पर्याच्छारीराभेदं वदतां महातात्पर्यविरोधः।

"आज्ञानदुःखसम्बन्धाद् यावज्ज्ञानं शरीरिणः। सर्वदा ज्ञानकं विष्णुमहमस्मीति ये विदुः। अज्ञानदुःखमन्तारस्ततस्ते नीचताविदः। विष्णोरुत्कर्षहातॄणां[6] नैव तेषां सुखं क्वचित्", "योऽन्यथा सन्तमीशेशं स्वरूपं प्रतिपद्यते। किं तेन न कृतं पापं चोरेणे-शापहारिणा", "ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः। शास्त्रतत्त्वमविज्ञाय तथा वादबला जनाः। कामक्रोधाभिभूतत्वादहङ्कारवशं गताः। ब्रह्मस्तेना निरालम्बा[7] अपक्वमनसोऽशिवाः। याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः। वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते। तेषां तमःशरीराणां तम एव परायणम्। यतः स रूप-तश्चान्यो[8] जातितः श्रुतितोऽर्थतः। कथमस्मि स इत्येव सम्बद्धः[9] स्यादसंहितः" इति। "बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु। को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति। वैशम्पायन उवाच—नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह। बहूनां पुरुषाणां हि यथैका योनिरुच्यते। तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्" इति मोक्षधर्मवचनाच्च। "हंनाम हन्यमानत्वाज्जीवस्य समुदाहृतम्। जीवादन्यो यतो विष्णुरहंनामा ततः स्मृतः। स्मीति जीवः समुद्दिष्टः स्मीत्यल्पं सुमितत्वतः। पूर्णत्वादस्मिनामाऽसौ पूर्णपूर्णत्वहे-तुतः। ब्रह्मास्मीत्युच्यते विष्णुर्बृहत्पूर्णो यतः सदा। असौ सूर्यगतो विष्णुर्दूरस्थत्वात् प्रकीर्तितः। अहंनामा जीवगतो नित्याहेयत्वहेतुतः" इति ब्रह्माण्डे। "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुषः[10] स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा", "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा", "यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता",

---

१ प्राचीनकोशे तु "भाव्यमिति" इति दीर्घः पठ्यते। पौरुषे तु सूक्ते भव्यमित्येव पाठः। २ प्र. पाठे श्रुति-रियमेवं पठ्यते—"पुरुष एवेदं सर्वमिति च पुरुषेणेदं सर्वं व्याप्तं यद् भूतं यच्च भव्यम्। न च भगवान्–"इत्यादि। ३"घृतौदनमित्यादौ व्याप्तशब्दाभावेऽपि व्याप्तशब्दोऽवगम्यते। दधिसिक्ताः–" ४ "इति श्रुतिः" ५ 'सर्वं नेनीयते" ६ "नीचतां विदुः। विष्णोरुत्कर्षहर्तॄणां" ७ "निरानन्दाः" ८ "स्वरूपतश्चान्यः" ९ "सम्बन्धः" १० "उत्तमः पुरुषः" इति प्र. पाठाः।

"एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत् साम गायन्नास्ते", "स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्धये-वाऽत्मनो यद्यत् कामयते तत्तत् सृजते", "ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः", "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति", "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति", "[1]नानात्वेनाभिसम्बुद्धास्तदा तत्काल-भाविना । प्रकृतौ करणातीताः स्वात्मन्येव व्यवस्थिताः । संयोगः प्रकृतेर्नैषां मुक्तानां तत्त्वदर्शनात् । पुरुषान्यबहुत्वेन प्रतीता न प्रवर्तते । प्रवर्तति पुनः सर्गे तेषां सा न प्रवर्तते", "इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः[2]", "न यत्र माया किमुतापरे हरेरनुव्रता[3] यत्र सुरासुरार्चिताः" इत्यादिश्रुतिस्मृतिषु सतात्पर्यं मुक्तानां विष्णोर्भेदस्यै-वोक्तेः । "सन्मूलाः सोम्येमाः प्रजाः[4] सदायतनाः सत्प्रतिष्ठाः", "सति[5] सम्पद्य न विदुः सति सम्पत्स्यामह इति", "सत आगम्य न विदुः" इत्यादौ भेद एव ह्यत्र सतात्पर्यं प्रतिपादितः ।

ताः नद्यः समुद्रादागत्य समुद्रं प्रविशन्ति । स समुद्र एव भवति । न नदीभावं प्राप्नोति । स एव च समुद्रो भवति । समुद्र एव समुद्रो भवति न नद्य इति भेदस्यैवावधारणं क्रियते । नच स्वकी-यस्य ब्रह्मभावस्याज्ञोऽपहर्ता भवति । किन्त्वविद्यमानब्रह्मभावाभिमन्तैवापहर्ता । नहि स्वकीयवित्त-परित्याग्यपहर्ता भवति । किन्तु परस्वहर्तैव । तस्मादविद्यमानब्रह्मभावाभिमन्तैव "अपहार्षीत् स्तेयमकार्षीत्" इति दृष्टान्तपूर्वकमुच्यते । अदुःखित्वपूर्णज्ञानानन्दस्वातन्त्र्यादिब्रह्मस्वभावानानु-भवं स्वात्मनो ज्ञात्वैव[6] तद्भावाभिमतेः स्तैन्यम् । परकीयाभिमतेरपहारः ।

"परस्वभावाभिमतेरपहर्ता स्ववञ्चनात् । स्तेनश्चाभेदवेत्ता तु ब्रह्मणो हन्यते सदा"

इति तत्त्वविवेके ।

न दार्ढ्यमात्रदृष्टान्तोऽयम्[7] । "स यदि तस्य कर्ता भवति", "स यदि तस्य न कर्ता भवति[8]" इति हतिमुक्त्योरपहारानपहारैकहेतुत्वश्रुतेः[9] । अन्यथा यदि दृढो भवति यद्यदृढो भवतीत्युच्येत । नच सत्यासत्यमात्रम् । तदा सत्यानृतवाग्दृष्टान्तेन पूर्तेरपहारदृष्टान्तो न स्यात् । तस्मादभेदज्ञानेन महान्तं विनाशं प्रदर्श्य भेदज्ञानान्मुक्तिपरमेवैतद् वाक्यम् । भिन्नस्यैवोत्कर्षो भवतीति[10] । अभिन्नस्य कुत उत्कर्षः स्यात् ? अज्ञानदुःखयुक्तत्वाच्च । नहि तत्पक्षे परमार्थदुःखिनो भ्रान्त्या दुःखिनश्च तत्काले कश्चिद् विशेषः । अस्वातन्त्र्यं च भ्रान्तस्य निश्चितमेव । न हि भ्रमः स्वेच्छया युज्यते ।

१ "नानात्वेनाभिसम्बद्धाः" इति प्र. पाठः । २ इतः परं प्र.पाठे "सर्गेऽपि नोपजायन्ते प्रळये न व्यथन्ति च" इति श्लोकार्धमधिकं पठ्यते । ३ "हरेरनुव्रताः" ४ "इमाः सर्वाः प्रजाः" इति प्र.पाठौ । ५ "सति सम्पद्य न विदुः, सत आगम्य न विदुरित्यादौ" इतीयदेव प्र. पाठे पठ्यते । ६ "स्वात्मनोऽपि ज्ञात्वैव" ७ "नच दार्ढ्यमात्रे दृष्टान्तोऽयम्" ८ इति प्र. पाठौ । श्रुतौ तु "तत्याकर्ता भवति" इति दृश्यते । अर्थानुवादोऽयम् । तत्वनिर्णये यथाश्रुति प्रतीकग्रहणात् । ९ "हेतुकत्वश्रुतेः" १० "भवति । अभिन्नस्य–" इति प्र.पाठौ

ॐ॥ अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तं होवाच यद् वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद् भगवोऽध्येमि सोऽहं भगवो मन्त्रविदेवास्मि नाऽत्मविच्छ्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति तं होवाच ॥१॥ यद् वै किञ्चैतदध्यगीष्ठा

---

"स्वात्मानं परमं विष्णुं विदित्वाऽपि स राघवः। दैत्यानां मोहनार्थाय दर्शयामास मूढताम्" इति च पाद्मे। "जगद्व्यापारवर्जम्", "प्रकरणात्" इत्यादिनैश्वर्यमर्यादया मुक्तानां ब्रह्मणश्च भेदस्यैव निर्णीतत्वाच्च भगवता। "ब्रह्मसूत्रानुसारेण वेदाद्यं सर्वमेव च। योज्यं न ब्रह्मसूत्राणि दृश्यमानार्थतोऽन्यथा" इति च ब्रह्मवैवर्ते। "चोर-दृष्टान्ततो यस्य ह्यभेदज्ञानतस्तमः। भेदेनोत्कर्षवेत्तुस्तु मुक्तिरेव ह्यचोरवत्" इति च। "सारत्वात् स इति प्रोक्तो ज्ञानत्वाद् य इतीरितः। सर्वस्येष्ट इति ह्येष मानानामण-कोऽणिमा। तत्तन्त्रत्वादैतदात्म्यं स सत्यः साधुरूपतः। तत् ततेः पूर्णतश्चाऽत्मा साधनाच्च स ईरितः। अतत् त्वमसि पुत्रेति य उक्तो गौतमेन तु। नवकृत्वः सदृष्टान्तं सर्वभेदेन केशवः। तस्मै नमो भगवते चिदचित्परमाय ते। पुरुषोत्तमाय देवाय पूर्णा-नन्दैकरूपिणे" इति सामसंहितायाम्।

अतः सर्वचिदचिद्विलक्षणः सर्वोत्तमः सर्वगुणपूर्णो भगवान् पुरुषोत्तम इति सिद्धम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीच्छन्दोगोपनिषद्भाष्ये
षष्ठोऽध्यायः

---

ॐ॥ यद् वेत्थ तेन तदुक्त्वा मामुपसीद।

"पितृलक्षणं तु पित्र्यं स्याद् राशिः स्यात् पूगलक्षणम्। देवतालक्षणं दैवं निधिश्च निधिलक्षणम्। वाकोवाक्यं मूलवेदो वेदसारोपसंहृतिः। एकायनमिति प्रोक्तं देवविद्या त्वमानुषी। देवज्ञेयैव या विद्या ब्रह्मविद्या तथाऽऽरणम्। भूतविद्या भूतचिह्नं क्षत्रविद्या तु नीतिका। नाक्षत्री ज्योतिषकाख्या च सर्पलक्षणमेव च। सर्पविद्येति सम्प्रोक्ता या देवपरिचारगा। सा देवजनविद्या स्यादेता वेद स नारदः" इति सामसंहितायाम्।

"विद्यानां निर्णयाज्ञानादविद्वानुच्यते पुमान्। सर्वविद्याविदप्यद्धा तस्मान्निर्णयवित्तये।

---

१ "विदित्वैव" २ "इति पाद्मे" ३ "इत्यैश्वर्यमर्यादया" ४ "सादनात् स इतीरितः" ५ "सर्वगुण-परिपूर्णः" इति प्र. पाठाः। ६ प्राचीनकोशेषु तु "देवविद्याऽत्यमानुषी" इति पाठो दृश्यते। ७ "ज्यौति-षाख्या च" इति प्र.पाठः।

नामैवैतन्नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥२॥ वाग् वा नाम्नो भूयसी वाग् वा ऋग्वेदं ज्ञापयति यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चापश्च तेजश्च देवांश्च मनुष्यांश्च पशूंश्च वयांसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद् वै वाङ् नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत् सर्वं विज्ञापयति वाचमुपास्स्वेति स यो वाचं ब्रह्मेत्युपास्ते यावद् वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥३॥ मनो वाव वाचो भूयो यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पुत्रांश्च पशूंश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो

---

कुमारमैच्छद् देवर्षिर्नारदो ब्रह्मवित्तमम्" इतिच। "विष्णोर्नाम यतो विद्याः सर्वेनामेत्यतः स्मृताः[1]। नामाभिमानिनी चोषा[2] तस्यां ब्रह्म परं स्मरेत्। यदेषा न त्वमेया स्यान्मीयते ह्युषसि ध्रुवम्। रात्रिमानमजानद्भिस्ततो नामेत्युषा स्मृता[3] ॥*॥ तस्यास्तु भूयसी स्वाहा धर्मज्ञानसुखादिभिः। सर्वैर्गुणैर्विमुक्तौ च तथा बन्धे च सर्वदा। वाचोऽभिमानिनी सैव वाङ्नाम्नी चाञ्चनाद् वसोः ॥*॥ एवं तस्या विमुक्तौ च पर्जन्यः सर्वतो वरः। मनोऽभिमानी सम्प्रोक्तो वृष्ट्या निर्माणतो मनः।

---

१ "स्मृतः" इति प्र. पाठः। इदमत्र सम्भाव्यते। "सर्वेनामेत्यतः स्मृताः" इत्यत्र मूले सर्वपदात् परमप्येको दीर्घः क्षेपणीयः "सर्वा नामेत्यतः स्मृताः" इति। सर्वा अपि विद्या नामेति स्मृता इति। पठ्यत चैव तत्त्वदीपिकायाम्। तेन निश्चीयते यल्लिपिकृद्भिर्लोपितो दीर्घ इति। २ "चोषाः" ३ नामेत्युषाः स्मृता" इति प्र. पाठौ।

ब्रह्म मन उपास्स्वेति स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥४॥ सङ्कल्पो वाव मनसो भूयान् यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि तानि हवा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाऽऽकाशश्च समकल्पन्ताऽपश्च तेजश्च तेषां सङ्क्लृप्त्यै वर्षं सङ्कल्पते वर्षस्य सङ्क्लृप्त्या अन्नं सङ्कल्पतेऽन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते प्राणानां सङ्क्लृप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणां सङ्क्लृप्त्यै कर्माणि सङ्कल्पन्ते कर्मणां सङ्क्लृप्त्यै लोकाः सङ्कल्पन्ते लोकानां सङ्क्लृप्त्यै सर्वं सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति स यः सङ्कल्पं ब्रह्मेत्युपास्ते क्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति यावत् सङ्कल्पस्य गतं तत्रास्य यथाकामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः सङ्कल्पाद् भूय इति सङ्कल्पाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥५॥ चित्तं वाव सङ्कल्पाद् भूयो यदा वै चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि तानि हवा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद् यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद् वा अयं विद्वान् नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान् भवति तस्मा एवोत शुश्रूषन्ते चित्तं ह्येषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमाना-नव्यथमानोऽभिसिद्ध्यति यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद् भूय इति चित्ताद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥६॥ ध्यानं वाव चित्ताद् भूयो ध्यायतीव पृथिवी

---

॥*॥ तथा तस्माद् वरो मित्रो मुक्तौ सङ्कल्पदेवता। अह्नि सङ्कल्पयेद् यस्मात् स्वप्स्यन्ति निशि यत् ततः ॥*॥ तथा मित्राद् वरस्त्वग्निर्मुक्तौ चित्तस्य देवता। चितत्वाच्चित्तनामा च तस्माद् वरुण एव च। ध्यानस्य देवता चासौ तन्नामा च

ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवाऽपो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्यास्तस्माद् य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादांशा इवैव ते भवन्ति ध्यानमुपास्स्वेति स यो ध्यानं ब्रह्मेत्युपास्ते यावद् ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद् भूय इति ध्यानाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥७॥ विज्ञानं वाव ध्यानाद् भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं सामवेद-माथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं वेदविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवांश्च मनुष्यांश्च पशूंश्च वयांसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो ह वै लोकान् ज्ञानवतोऽभिसिद्ध्यति यावद् विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद् भूय इति विज्ञानाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ॥८॥ बलं वाव विज्ञानाद् भूयोऽपीह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन् द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयांसि च तृणवन-स्पतयः श्वापदान्याकीटपतङ्गपिपीलिकं बलेन वै लोकस्तिष्ठति बलमुपास्स्वेति स यो बलं ब्रह्मेत्युपास्ते यावद् बलस्य गतं तत्रास्य कामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद् भूय इति बलाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥९॥ अन्नं वाव बलाद् भूयस्तस्माद् यद्यपि दश

---

निधानतः। सत्यानृतविवेकार्थं तथा तस्मान्निशाकरः। विज्ञानदेवता चासौ तन्नामा च विवेचनात्। सत्यस्य तस्माच्च तथा वायुर्भूतात्मको वरः। बलात्मकस्तथा तस्मादन्न-

रात्रीर्नाश्नीयाद् यद्युह जीवेदथाद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्याऽऽयै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो ह वै लोकान् पानवतोऽभिसिद्ध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद् भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥१०॥ आपो वावान्नाद् भूयस्यस्तस्माद् सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद् द्यौर्यत् पर्वता यद् देवमनुष्या यत् पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकमाप एवेमा मूर्ता अप उपास्स्वेति स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान् कामांस्तृप्तिमान् भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥११॥ तेजो वावाद्भ्यो भूयस्तद् वा एतद् वायुमागृह्याऽऽकाशमभितपति तदाऽऽहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत् पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्लादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत् पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कानभिसिद्ध्यति यावत् तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥१२॥ आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाऽऽह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति स य आकाशं ब्रह्मेत्युपास्त आकाशवतो हवै स लोकान् प्रकाशवतोऽसम्बाधानुरुगायवतोऽ-

देवोऽनिरुद्धकः । अन्ननामाऽनुनादित्वात् तैजसाहम्भवस्ततः । तथा वरिष्ठः प्राणाख्यो वायुः सोऽपां च देवता । अन्नामा देहसंख्यातेस्तथा तस्मात् पुरन्दरः । तेजोऽभिमानी तन्नामा तेजो ह्योज उदीर्यते ॥*॥ तथा तस्मादुमा चैव सा चाऽऽकाशाभिमानिनी ।

१ "इतीर्यते" इति प्र. पाठः ।

भिसिद्ध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद् भूय इत्याकाशाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥१३॥ स्मरो वा आकाशाद् भूयां-स्तस्माद् यद्यपि बहव आसीरन्नस्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन् न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान् विजानाति स्मरेण पशून् स्मरमुपास्स्वेति स यः स्मरं ब्रह्मेत्युपास्ते यावत् स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद् भूय इति स्मराद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥१४॥ आशा वाव स्मराद् भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्रांश्च पशूंश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्वे कामाः समृद्ध्यन्त्यमोघा ह्यस्याऽशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥१५॥ प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चिद् भृशमिव प्रत्याह धिक् त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै

आकाशनाम्नी दीप्तत्वात् तस्याश्चैव सदाशिवः । स्थिरस्मृत्यभिमानी स सममेव रतेः स्मरः ॥*॥ मुख्यवायुप्रिया तस्मात् परैव सरस्वती । बन्धमुक्त्योः सर्वगुणैः सर्वदाऽऽ-शास्वरूपिणी । शमित्यानन्द उद्दिष्ट आशा पूर्णसुखत्वतः । तस्याः श्रेष्ठो मुख्यवायुः प्रकृष्टानां च नायकः । प्राणनामा ण इत्येव ह्यानन्दः समुदीरितः । आणा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः । प्राण इत्युच्यते वायुः सर्वे त्वेते दशोत्तराः । पर्जन्यमित्र-शिखिनो भूतवायुस्तथैव च । द्विगुणा एवानिरुद्धोऽनिलात् पञ्चगुणाधिकः । पादोनो वरुणादग्निरध्यर्धोनः स सोमतः । शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरौ । सङ्ख्यान्यथात्वं यत्र स्यात् तत्राऽवेशविशेषतः । अवराणां गुणस्यापि परमीयत्वत-स्तथा । प्राणात्तु भगवान् विष्णुरनन्तगुणतोऽधिकः । नित्यमुक्तो नित्यशक्तिर्नित्योद्रिक्त-गुणः प्रभुः" इति तत्त्वविवेके ॥*॥ "सैषाऽऽनन्दस्य मीमांसा भवति" इत्यादेश्च ।

त्वमसीत्यथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषं दहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाऽचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥१६॥ प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद् ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥१७॥*॥ इति प्रथमः खण्डः ॥*॥

---

"अथातः सम्भूतिः परमाद् विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद् बुद्धिर्बुद्धेरिन्द्र इन्द्रात् तैजसप्राणस्तैजसप्राणादनिरुद्धोऽनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमः सोमाद् वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते तेषां परः परो ज्यायान् गुणैरुत्तर उत्तरः प्रत्यवरः परस्मात् परस्मादुत्तर उत्तरो मुच्यते स्वं स्वं भावमापद्यते नैषां पारावर्यमुच्छिद्यते कदाचन नैषां पारावर्यमुच्छिद्यते कुतश्चन पारावर्येण ब्रह्मोपयन्ति पारावर्येणैव मुक्ताः सञ्चरन्ति" इत्यादिश्रुतेश्च। "नामादिमारुतान्तेषु देवेष्वेभ्यश्च भेदतः। उपासितो हरिर्मुक्तिं दद्यान्नास्त्यत्र संशयः" इति सत्तत्त्वे। "उषादिमारुतान्तेषु समः समगुणोऽपि सन्। ध्यातः प्रीतिं हरिर्यायादधिकामुत्तरोत्तरे। उत्तमेषूत्तमा प्रीतिस्तस्य तत्र स्मृतस्ततः। ध्यातुरप्युत्तमां प्रीतिं यायान्नास्त्यत्र संशयः। तारतम्यपरिज्ञानात् तेषु ध्यातो विमुक्तिदः। प्रीतिं नचान्यथा यायादिति शास्त्रस्य निर्णयः" इति तत्त्वविवेके। "नामादिप्राणपर्यन्ताः सप्तम्यर्थाः प्रकीर्तिताः। तृतीयापञ्चमीषष्ठीचतुर्थ्यर्थाश्च सर्वशः। शब्दैस्तैर्ब्रह्मशब्दस्तु सम्बद्ध्येत यदा तदा। ब्राह्मणोऽस्य मुखं यद्वदात्मा वै पुत्रको यथा। यथा च यूप आदित्य एवमेष प्रकीर्तितः। सप्तसु प्रथमा यस्माद् भूयोभूयस्त्वतस्तथा। षट्सु द्वितीया यस्माच्च कारणत्वात् परस्य च। नह्यन्यदन्य इत्येवं ध्यातं स्यात्पुरुषार्थदम्। अनर्थश्च भवेत् तस्माद् भृत्यो राजेति बोधवत्। राजपूजां यदा भृत्ये कुर्याद् राजा हिनस्ति हि। तद्वशत्वात् तथा भृत्य एवं नामादिकं च यः। उपास्ते ब्रह्मरूपेण तं ब्रह्माथेतराणि च। पातयन्ति तमस्यन्धे तस्मान्नेक्षेत तांस्तथा" इति सामसंहितायाम्। "अचेतनमयोग्यं च तथैवातात्त्विकं क्वचित्। नोपासीत परोऽनर्थः स्यात् तथोपासनाकृतः। दर्भचर्मादयश्चातो देवता ह्यभिमानिनः। नह्यचेतनकं किञ्चित् फलदं स्यात् कदाचन। औषधादिषु चैतस्माद् देवा एव वरप्रदाः। औषधादिस्थिता देवास्तेऽज्ञे दृष्टफलप्रदाः। ज्ञानिन्यदृष्टदाश्च स्युर्नादैवं किञ्चिदिष्यते। यथाऽज्ञस्यैवं राज्ञस्तु भोजनं क्लृप्तमिष्यते।

---

१ "तैजसादनिरुद्धः" २ "पारावर्येणैव" इति प्र. पाठौ। ३ "चतुर्थ्यर्थश्च" इति प्राचीनपाठः। मात्रास्खलनं भवेत्। तृतीयादिचतुर्थ्यन्तानां विभक्तीनां योऽर्थः सोऽपि यथायोगं सर्वत्र प्रकरणभागेषु योजनीय इति तत्पुरुषाश्रयेण वा व्याख्येयम्। ४ "शब्दास्ते ब्रह्मशब्देन सम्बद्ध्येयुर्यदा तदा" ५ "नह्यन्यदन्यदित्येव" ६ "यथा भृत्ये" इति प्र. पाठाः। ७ "यथाऽज्ञस्यापि" इति प्र. पाठः। अज्ञस्यैवेति पाठे एवकारः ज्ञाननैयत्यव्यवच्छेदाय। नतु ज्ञस्य भोजनव्यवच्छेदाय।

न क्वचाज्ञाय[1] राजानं ग्रामप्राप्तिस्ततो भवेत्। एवं देवा दृष्टफलं दद्युरज्ञस्य चाल्पतः। किञ्चिज्ज्ञानकृतादृष्टात् तच्च नैवान्यथा भवेत्। अदृष्टाख्यं फलं यत्तु तज्ज्ञस्यैव नचान्यगम्। तस्मादचेतनोपासां न कुर्यात् क्वापि कश्चन। नचासत्यां नचायोग्यां यदीच्छेदुत्तमं फलम्। यदि नेच्छेत् तमो गन्तुं यदि चेच्छेद्धरेः प्रियम्। अथ कर्तव्यकारी च मुमुक्षुरथवा भवेत्। सोऽपीच्छेत हरेः प्रीतिं नात्र कार्या विचारणा" इत्युपासनालक्षणे। "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्", "पयोऽम्बुवच्चेत् तत्रापि" इति च भगवद्वचनम्[2]। "देवेषु चर्मादिनामानि संवादादेः" इति च देवमीमांसायाम्[3]। "अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्" इति सङ्कर्षणसूत्रम्। "ओषधयः संवदन्ते सोमेन सह राज्ञा", "प्रवो ग्रावाणः सविता देवः सुवतु धर्मणा" "न ऋते त्वत् क्रियते किञ्चनाऽरे[4]", "न देवानामति व्रतं[5] शतात्मा च न जीवति", "अनेहसो व ऊतयः सुऊतयो व ऊतयः", "द्यावापृथिवी जनयन्नभि व्रताऽऽप ओषधीर्वेनिनानि यज्ञिया। अन्तरिक्षं स्वारापप्रुरूतये वशं देवासस्तन्वी नि मामृजुः" "अचेतनं चेतनेभ्यो दैवतेभ्यश्च चेतनाः। देवाः प्राणाच्च स प्राणो विष्णोरेव सदैव तु। स्वभावं च प्रवृत्तिं च विकारं च समाप्नुयुः। कश्चिद् भाव ऋते तेषां नैतैः[6] स्याच्च कदाचन। अचेतनप्रवृत्तौ तत्र दृष्टान्तोऽस्ति[7] कश्चन। चेतनानां प्रवृत्तेश्च दृष्टत्वादेव सर्वशः। अदृष्टं दृष्टवज्ज्ञेयं यथाऽदृष्टप्रणेतृकम्। विसर्पत्तण्डुलं दृष्ट्वा कल्प्या तत्र पिपीलिका। न तद्दृष्ट्वैव दृष्टानामपिपीलिकसर्पणम्। एवं दृष्टानुसारेण चिदधीनमचेतनम्। दुर्घटा शक्तिरपि[8] तु पिशाचानां च दृश्यते। देवानां किमु किम्वेव परमस्य हरेः प्रभोः" इत्यादेश्च[9] ब्रह्मतर्के ॥*॥

हृदयज्ञः भगवत्तत्त्वज्ञः। हृद्ययनात् हृदयम्—

"हृदयं ब्रह्मेति शार्कराक्ष्या उपासते" इति श्रुतेः[10] ॥*॥ "कोलं पूगफलं प्रोक्तं कलं ताम्बूलपत्रकम्" इत्यभिधानम् ॥*॥ "भूतानां भौतिकानां च मन्त्राहुतिगणस्य च। अचेतनगणस्यास्य कल्पको मित्रनामकः। प्राणा भूतानि मन्त्राद्याश्चिदचित्त्वविभेदिनः। अचितां कल्पको मित्रस्थितां वाय्वादयः स्मृताः" इति वस्तुतत्त्वे।

सर्वमचेतनं सङ्कल्प्यते ॥*॥

"अस्थिरस्मरणं चित्तं स्थिरं स स्मरणं[11] स्मरः" इति शब्दनिर्णये। "वेदनं ज्ञानमात्रं स्याद् विद्वत्त्वं तु विशेषतः" इति च। "मोक्षे यस्मिन् प्रवेशः स्यात् सा प्रतिष्ठा हि

---

१ "नत्वविज्ञाय" २ "इति भगवद्वचनम्" ३ "देवतामीमांसायाम्" इति प्र. पाठाः। ४ इतः प्र. पाठे "महामर्क मघवन् चित्रमर्च" इत्यधिकम्। ५ "न देवानामति व्रतं" ६ "नैतत्" ७ "प्रवृत्तौ तु न दृष्टान्तोऽस्ति" ८ "अपि हि पिशाचानां हि" ९ "इत्यादि" इति प्र. पाठाः। १० "उदरं ब्रह्मेति शार्कराक्ष्या उपासते। हृदयं ब्रह्मेत्यारुणयः इति श्रुतिः" इति प्र. पाठः। यद्यपीयमेवाऽनुपूर्वी ऐतरेये पठ्यते। तथाऽप्युभयेषां शार्कराक्ष्याणामारुणिनां चोभयवित्त्वज्ञापनायैवं व्यत्यस्य श्रुतिमर्थतोऽनूवादेति ज्ञायते। उक्तं हैतरेयभाष्ये—"उदरस्थं च हृद्धं च ते उभे ब्रह्म तत् परम्। एकमेव यतस्तस्मादुभये ह्यपि तद्विदः" इति। ११ "स्थिरसंस्मरणं" इति प्र. पाठः। प्राचीनपाठे यत् स्थिरं स्मरणं स स्मर इति व्याख्येयम्।

एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥१॥ यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥२॥ यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥३॥ यदा वै श्रद्धात्यथ मनुते

---

मुख्यतः। उपचारतस्त्ववस्थानमिति शब्दविदो विदुः" इति च ॥*। "देवा मनुष्यतां प्राप्ता विज्ञेया देवमानुषाः। ध्यानं कुर्वन्त इव ते नैव स्युर्बहुभाषिणः। ब्रूयुरर्थवतीं वाचं नानर्थां प्रायशो हि ते" इति पाद्मे ॥*॥ "बलं ज्ञानबलं चैव बाह्यं चेति द्विधा मतम्। युक्तिज्ञानाज्ज्ञानबलं तज्ज्ञानादधिकं मतम्" इति तत्त्वसारे ॥*॥ "अन्नं ज्ञानरसान्नं च बाह्यमन्नमिति द्विधा। ज्ञानान्नं ज्ञानबलतः श्रेष्ठं ज्ञानरतिर्हि तत्। यद् बाह्यं तु बलं तस्माद् बाह्यमन्नं विशिष्यते ॥*॥ आपश्च द्विविधाः प्रोक्तास्तृप्तिर्या ज्ञानतो रतेः। ता ज्ञेया आन्तरा आपो बाह्यास्तु द्रवरूपकाः। आन्तरान्नादान्तरापो बाह्याद् बाह्यास्तथा वराः ॥*॥ एवं तेजः प्रातिभाख्यं बाह्यं चेति द्विधा मतम्। प्रातिभं ज्ञानतृप्तेश्च परमाकाश एव च। स्थिरा तु प्रतिभाऽन्तस्थश्छिद्रमेव तु बाह्यगम्। स्थिरा हि प्रतिभा श्रेष्ठा चञ्चलायाः स्मराभिधा। एकधैव स्मृतिः श्रेष्ठाऽऽशाऽपरोक्षदृगात्मकम्। श्रेष्ठं सुखं ततो मोक्षे प्राणाख्यं परमं सुखम्। उत्तरोत्तरमेतद्धि वाय्वन्ताभिमतं सदा। बाह्याद्भयो बाह्यमन्नं च जायतेऽन्यत् तदन्यथा। व्यक्तिरन्तर्गतानां तु विपरीतक्रमाद् भवेत्। तथाऽपि मोक्षगं यस्मात् स्वभावो नित्य एव तु। अतस्तस्मादापरोक्ष्यं कादाचित्कं हि जायते। दृष्ट्यधीना स्मृतिश्चेयं प्रतिभा स्मृतिसम्भवा। स्थैर्यमालम्ब्य तु चलमन्यथा नैव तिष्ठति। प्रतिभातश्च तृप्तिः स्यादतृप्तस्य तु का रतिः। अत एवं क्रमादेव वरिष्ठः प्राणजो गुणः" इति च ॥*॥

योऽसौ प्राणः स प्राणेन परब्रह्मणा याति। स एव भगवान् प्राणं प्रत्यभीष्टं ददाति। "प्राणस्य प्राणम्" इति श्रुतेः। प्राणो वायुः परमात्मानं च ज्ञानेन दर्शयन् ददाति। सर्वस्मादतीतमुत्तमं वदतीत्यतिवादी ॥*॥ "एष तु वा अतिवदति" इति तुशब्दोऽर्थान्तरवाची। अस्ति भगवः प्राणाद् भूय इति प्रश्नोऽप्यध्याहार्यः।

"यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम्। यत्र प्रमाणं वाक्यं चाप्यतिहार्यं न संशयः", "व्यतिहारो विशिंषन्ति हीतरवत्" इति च भगवद्वचनम्। "अतिवादी प्राणवादी

---

१ "युक्तिज्ञता ज्ञानबलं सा ज्ञानादधिका मता" इति प्र. पाठः। २ "प्रतिभाऽन्तस्था च्छिद्रमेव तु बाह्यगः" इति प्र.पाठः। प्राचीनपाठे स्थिरा प्रतिभाऽन्तस्थ आकाशः। यत्तु बाह्यगं छिद्रं स बाह्यग आकाश इति। क्वचित् "प्रतिभाऽन्तस्थः छिद्रमेव तु बाह्यगः" इत्युभयत्रापि पुंलिङ्गपाठो दृश्यते। ३ "तत एवं" ४ "प्रश्नो व्यतिहार्यः" ५ "वा व्यतिहार्य" इति प्र. पाठः।

नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥४॥ यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठन् श्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥५॥ यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥६॥ यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥७॥ यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमात्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥८॥ यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमाऽथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद् विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यं स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित इति ॥ ॥९॥*॥ इति द्वितीयः खण्डः ॥*॥

---

विष्णुवादी विशेषतः । स सत्यो भगवान् विष्णुर्यन्निर्दोषो नियामकः । विशिष्टज्ञानरूपश्च सामान्यज्ञानरूपकः । नित्यश्रद्धास्वरूपश्च तथैव स्थैर्यरूपकः । स एव सर्वकर्ता च सुपूर्णानन्दरूपकः। स च सर्वगुणैः पूर्णो भूमेत्युच्चार्यते ततः । यदधीनं विना नान्यत् किञ्चिदस्ति कुतश्चन । स भूमोक्तोऽतिपूर्णत्वादन्यदल्पमुदीर्यते । स सर्वगुणसम्पूर्णः सर्वदेशेषु सर्वदा । स्वतन्त्रः सर्ववस्तूनि तदधीनानि सर्वशः। पूर्णत्वात् सुखरूपोऽसौ सर्वकर्ता सुखत्वतः । कर्तृत्वात् सुस्थिरश्चासौ स्थिरत्वादास्तिकस्तथा। आस्तिकत्वाच्च[1] मन्ताऽसौ विज्ञाता च ततो हरिः । विज्ञातृत्वाच्च निर्दोषः[2] सर्वस्यापि नियामकः । भूमा नारायणाख्यः स्यात् स एवाहङ्कृतिः स्मृतः । आकार्योऽहमिति ह्येष ततोऽहङ्कार उच्यते। जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः। सोऽप्यणुत्वेऽपि संव्यापी परमैश्वर्ययोगतः। यथा बालतनौ विष्णौ मार्कण्डेयेन धीमता। प्रविश्य नान्तोऽधिगत एवं व्याप्तो हरिः परः । अणुरूपोऽपि भगवान् वासुदेवः परो विभुः । आत्मेत्युक्तः स च व्यापी नच भेदो हरौ क्वचित्" इति परमसारे ॥*॥

भूमप्रसादं विना नाल्पे सुखमस्ति । मर्त्यं च पूर्वम्।

"अल्पाऽपि ह्यमृता देवी श्रीः पूर्णाऽतिप्रियत्वतः" इति च ॥*॥

---

१ "आस्तीकत्वाच्च" इति प्राचीनकोशेषु पठ्यते । २ "ज्ञातृत्वाच्च स निर्दोषः" इति प्र. पाठः ।

स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वमित्यथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वमित्यथात आत्मादेश एवाऽऽत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मा उत्तरत आत्मैवेदं सर्वमिति ॥१॥ स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवत्यथ येऽन्यथा विदुस्तेऽन्यराजानः क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेष्वकामचारो भवति ॥२॥ तस्य हवा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामाऽऽत्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदं सर्वमिति ॥३॥ तदेष श्लोकः । न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति ॥४॥ स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः ॥५॥

---

आत्मरतिः भगवद्रतिः । स्वो भगवान् । सोऽस्य प्रत्यक्षत आज्ञापिता[1] भवतीति स्वराट् । "आत्मतः प्राण आत्मत आशा" इत्यादि मुक्तः सन् प्राणादीनां सृष्ट्यादिकं पश्यतीत्यर्थः । "सर्वं ह[2] पश्यः पश्यति" इति वाक्यशेषात् । पश्य इति द्रष्टा ।

"यदा पश्यः पश्यते रुग्मवर्णम्[3]" इति श्रुतेः ॥*॥ "भूमोपासनयोग्यस्तु साक्षाद् ब्रह्मैव मुख्यतः । स तद्विद्याबलेनैव विष्णुना रतिमाप्नुयात् । तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनीभवेत् । तदानन्दः स एवास्य राजा भवति नापरः । पश्येच्च प्राणसृष्ट्याद्यं ये तदन्य उपासकाः । ते यथायोग्यमाप्स्यन्ति फलं मुक्तौ न संशयः " इति परमतत्त्वे ।

नच "भूमानं भगवो विजिज्ञासे" इति पृष्टः सन् भूम्नो लक्षणं "स एवाधस्तात् स उपरिष्टात्" इत्यादिना पूर्णत्वं भगवतोऽन्यस्याहङ्कारस्योपदिशतीति युज्यते । नचाहङ्कारस्य पूर्णत्वमस्ति । नच मुख्ये पूर्णत्वे युज्यमान उपचरितं युज्यते । नचाहङ्कारस्य काचित् प्रस्तुतिः[4] । अथशब्दस्तु रूपान्तरापेक्षया युज्यते । अतःशब्दस्तत्प्रसादादिति । आत्मरतिः स्वराळित्यादि[5] । "यो ब्रह्माणं

---

१ "आज्ञापयिता" २ "सर्वं हि पश्यः" ३ "रुक्मवर्णम्" इति प्र.पाठाः। ४ प्राचीनकोशेषु "नाहङ्कारस्य काचित् प्रस्तुतिः" इति चकारं विरहय्य पठ्यते । ५ "स्वराडित्यादि" इति प्र. पाठः ।

शतं च दश चैकश्च सहस्राणि च विंशतिः । आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ॥६॥ स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति ॥७॥ देवर्षये नारदाय भगवान् सनत्कुमारस्तं स्कन्द इत्याचक्षते स्कन्द इत्याचक्षते ॥*॥ इति तृतीयः खण्डः ॥*॥

इति श्रीच्छन्दोगोपनिषदि सप्तमोऽध्यायः

---

ॐ॥ अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश-स्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद् वाव विजिज्ञासितव्यमिति तं चेद् ब्रूयुर्यदिदम-स्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद् वाव विजिज्ञासितव्यमिति ॥१॥ स ब्रूयाद् यावान् वा

---

विदधाति पूर्वम्" इति ब्रह्मणि प्रसिद्धेः[1] स्वयम्भूरात्मभूरित्यादिष्वात्मशब्दः स्वयंशब्दश्च यथा विष्णुवाची तद्वदेवात्राप्यात्मशब्दो विष्णुवाच्येव । नच मुक्तेभ्यः प्राणादिकमुत्पद्यते ।

"जगद्व्यापारवर्जम्" इति निर्णीतत्वाद्[2] भगवता । "आत्मत एष[3] प्राणो जायते" इत्यवधारणान्न भगवतोऽन्यस्मात् प्राणो जायते । "आत्मेति मुख्यतो विष्णुस्तदन्ये तूपचारतः । तथैव स्व इति प्रोक्तस्तस्माद् ब्रह्माऽऽत्मभूः स्वभूः" इति स्कान्दे । "इदंनामाऽतिसामीप्यात् सर्वैः[4] पूर्णगुणत्वतः । भूमाऽहमात्मेति हरिस्त्रिविधोऽपि हि सर्वदा" इति विश्वनिर्णये । "स्त्रीगुणाः पुङ्गुणाश्चैव नपुंसकगुणा अपि । यदधीना व्यत्ययः स्याल्लिङ्गानां तत्र सर्वशः । कः किं कं तत् सर्वमात्माऽदितिर्देवादयस्ततः" इति लिङ्गनिर्णये ॥*॥ "गुरोर्विद्याहृतिर्या तु स आहार इति स्मृतः । तच्छुद्धौ ज्ञान-शुद्धिः स्याज्ज्ञानशुद्धौ स्थिरा स्मृतिः । स्मृतिस्थैर्ये त्वापरोक्ष्यं हरेर्मोक्षस्ततो भवेत्" इति साधननिर्णये ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमच्छन्दोगोपनिषद्भाष्ये
सप्तमोऽध्यायः

---

१ "इति ब्रह्मण उत्पत्तिप्रसिद्धेः" इति प्र. पाठः । प्राचीनपाठस्यायमर्थः—स्वयमेव भवत्यात्मना भवतीत्या-दिव्युत्पत्तिभ्रान्त्या ब्रह्मणि प्रतीत आत्मशब्दः स्वयंशब्दश्च 'यो ब्रह्माणम्' इत्यादिश्रुतिबलाद् यथा विष्णुवाची तद्वदिति । २ "वर्णितत्वात्" इति प्र.पाठः। ३"आत्मत एव" इति प्र.पाठः। "आत्मत एष प्राणः" इत्येव प्रश्नोपनिषदि । नत्वात्मत एवेति । ननु गतं तर्ह्यवधारणम् । न गतम् । कथम् ? वाक्यमेवेदमवधारयति । नत्वेवकारः। कौसल्याय पिप्पलाद उत्तरमुपदिशति हि । नह्येवं वैवं वेति निरवधारण उपदेशो भवति। तथाच कस्मात् प्राणो जायत इति प्रश्ने आत्मत इति पिप्पलादेन निर्धारणादित्यर्थः । ४ "सर्वे" इति प्र. पाठः ।

अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति तं चेद् ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामा यदेनं जराऽवाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामो भवति यं जनपदं यं क्षेत्रभागं

---

ॐ ॥ "यदिदमस्मिन् ब्रह्मपुरे" इति ब्रह्मपुरशब्देन ब्रह्माख्यं पुरम्, पूर्णत्वात् पुरमिति परं ब्रह्म, ब्रह्मणः पुरमिति शरीरं चोभयं विवक्षितम्।

"प्राप्तोऽस्म्यवध्यं[1] ब्रह्मपुरं राजेव निवसाम्यहम्", "अस्मिंश्चेदिदं[2] ब्रह्मपुरे सर्वं समाहितम्", "यदेनं[3] जराऽवाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युः" इत्यादिवाक्यशेषाद्[4] भगवद्वचनाच्च ब्रह्मपुरशब्देन परं ब्रह्मोच्यत इत्यवसीयते। "यत् पुण्डरीकं पुरमध्यसंस्थम्", "यदिदं शरीरं तदेतदाद्यं देवसदनम्" इत्यादेः शरीरं च। "यद् वै तद् ब्रह्मेतीदं वाव तद् योऽयं बहिर्धा पुरुषादाकाशः", "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति" इत्यादिना परब्रह्मण्येव[5] च हृदयं स्थितम्। "दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्", "दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते" इत्यत्राऽऽकाशशब्देन[6] भूताकाशो विवक्षितः।

किं तदत्र विद्यत इत्यस्यायं परिहारः—अस्मिन् भूताकाशे परब्रह्माख्य आकाशो विद्यते। आ समन्तात् काशनादाकाशः। आ समन्तात् कमश्नातीति वा। "अस्मिन् कामाः समाहिताः" इति वाक्यशेषात् आ समन्तात् कामानश्नातीति वा। स च यावान् बहिः परमात्मा व्याप्तोऽस्ति तावानेव विद्यते गुणतः। पूर्णगुणत्वात्। अल्पपरिमाणस्यापि महत्परिमाणत्वं च युज्यते। अचिन्त्यशक्तित्वात्।

"यस्मिन् विरुद्धगतयो[7] ह्यनिशं पतन्ति विद्यादयो विविधशक्तय आनूपूर्व्या" इति वचनात्।

आनुपूर्व्येति श्रुतिप्रमाणादित्यर्थः।

"आनुपूर्वी श्रुतिर्वेद आम्नायश्चेति कथ्यते" इत्यभिधानात्।

अन्यथाऽनिशमित्युक्तिविरोधात्।

---

१ "प्राप्तोऽवध्यं" २ "अस्मिंश्चेद्यदिदं" ३ "यदैतत्" ४ "इति वाक्यशेषात्" ५ "परब्रह्मण्येव हृदयं" ६ "इत्याकाशशब्देन" ७ "विरुद्धगतयोऽप्यनिशं" इति प्र.पाठाः।

तं तमेवोपजीवन्ति तद् यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद् य इहाऽऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवत्यथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥२॥ स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयतेऽथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृ-

"एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा[1]", "एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्याः" इति हृदयस्थस्यैवाणुत्वमहत्त्वोक्तेश्च। "गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का। चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीताः" इति च श्रुतिः। "सुविरुद्धा अश्रुताश्च गुणाः सन्त्येव सर्वशः। दोषा अपि[2] न सन्त्येव श्रुता अपि तु सर्वशः" इति गारुडे।

किं तदत्र विद्यत इति पृष्टत्वाद्दहृत आकाशो हृदयशब्देनोच्यते। हृद्ययनात्। तस्मिन् हृदयाख्य आकाशे ब्रह्माख्य आकाशो विद्यत इत्यर्थः। अन्यथा कथं भूताकाशस्य दहरस्य बहिराकाशसमत्वम्? "दहरोऽस्मिन्नन्तराकाशः" इति च पूर्वोक्ताकाशस्य[3] दहरत्वमुक्तम्। उत्तरस्य तु "यावान् वा अयमाकाशः" इत्यनन्तपरिमाणत्वम्। अतो ब्रह्माकाश एवोत्तरः। पूर्वोक्तस्याभूताकाशत्वे "तस्मिन् यदन्तस्तदन्वेष्टव्यं तद् वाव विजिज्ञासितव्यम्", "तत्रापि दहं[4] गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्", "सहस्रशीर्षं देवम्" इत्यादि कथं युज्येत[5]? नहि भगवदन्तस्थितमेवान्यत् किञ्चिद् विजिज्ञास्यम्[6]। "तद् वाव" इत्यवधारणाच्च। उत्तरस्यापरब्रह्मत्वे च सर्वाधारत्वम्, "नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा" इत्यादि न युज्यते। "किं तदत्र विद्यते यदन्वेष्टव्यं यद् वाव विजिज्ञासितव्यम्" इत्यस्य "य एषोऽन्तर्हृदय आकाशः" इत्येव परिहारः। ननु "उभे अस्मिन् द्यावापृथिवी इत्यादि। तत्तु विजिज्ञासितव्यत्वे हेतुत्वेन सामर्थ्यकथनमेव। नहि द्यावापृथिव्यादेरेव विजिज्ञास्यत्वम्। "तमेवैकं जानथ आत्मानमन्या वाचो मुञ्चथ[7]" इति हि श्रुतिः। उभे अस्मिन् द्यावापृथिवीत्याद्युभयशब्दो[8] मुक्तामुक्तराशिद्व्यपेक्षया। "यच्चास्येहास्ति यच्च नास्ति" इति वाक्यशेषात्। अस्येति संसारिणः। नहि संसारिणो मुक्ता उपकारकाः। यद् यस्य नोपकारकं तत् तस्य नास्तीत्युच्यतेऽन्यस्य सत्त्वेऽपि। यथा वित्तादि। यथायोग्यमेवैनं भगवन्तं प्रजा मुक्ता अन्वाविशन्ति तच्छासनानुसारेण। यं यं कामयते[9] तं तमस्मादेवोपजीवन्ति। तदविदुषां पुण्यानि क्षयिष्णुफलान्येव भवन्ति। "एतांश्च सत्यान् कामान्" भगवदीयान्।

१ "व्रीहेर्वा" २ "दोषाः केऽपि" ३ "इति पूर्वोक्ताकाशस्य" ४ "तत्रापि दहरं" ५ "कथं युज्यते" ६ "विजिज्ञासितव्यम्" ७ "विमुञ्चथ" इति प्र.पाठाः। ८ "द्यावापृथिवी इत्याद्युभशब्दः" इति प्र.पाठः। मूलकोशेषु बहुशोऽपि द्विवचनमप्रगृह्यैव लिख्यते। "भाष्यानुभाष्येऽहं" इति प्रयुञ्जानस्य भगवत्पादस्य सम्मतं चैतत्। "सम्भूतिद्युव्याप्त्याप" इति भगवत्तमोऽप्यप्रगृह्यैव सूत्रयामास। ९ "यं यं कामं कामयते" इति प्र.पाठः।

लोकेन सम्पन्नो महीयते ॥३॥ अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयतेऽथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते ॥ ॥४॥ अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयतेऽथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ॥ ॥५॥ अथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्न-पानलोकेन सम्पन्नो महीयतेऽथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन सम्पन्नो महीयतेऽथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पा-देव समुत्तिष्ठति तेन सम्पन्नो महीयते ॥६॥ त इमे सत्याः कामा अनृतापिधाना-स्तेषां सत्यानां सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभतेऽथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन् न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामास्तद् यथाऽपि हिरण्यनिधिं निहितम-क्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः स वा एष आत्मा हृदि तस्यैतदेतदेव निरुक्तं हृद्यमिति तस्माद्धृदयमहरहर्वा एवंवित् स्वर्गं लोकमेत्यथ य एष

"बृहत्त्वात् पूर्णकामत्वाद् विष्णुर्ब्रह्मपुराभिधः। तस्मिंस्तस्य पुरं देहस्तस्मिन् हृदयमा-स्थितम्। हृदयाकाशगो विष्णुस्तस्मिन् सर्वमिदं स्थितम्। स सत्यकामो भगवान् यदिष्टं तस्य तद् भवेत्। अस्मिन् समाहिताः कामाः सत्याः पुंसामपि ध्रुवम्। तस्यैव ह्यनुसारेण सत्यत्वं नान्यथा क्वचित्। यथा बिम्बानुसारेण प्रतिबिम्बप्रकाशनम्। तस्माद् ये मुक्तियोग्याः स्युस्तेषां कामाः पुराऽपि तु। सत्याः सन्तस्तदज्ञानान्न दृश्यन्ते तथाऽखिलाः। अज्ञानमनृतं प्रोक्तमृ गताविति धातुतः। तस्माद् द्रष्टुं यदिष्टं स्याददृष्टं नियमेन तु। अमुक्तस्य हरेर्लोकं मुक्तो गत्वा हि पश्यति। अज्ञत्वादेव सुप्तौ तु नित्यं यान्तोऽपि माधवम्। नैव पश्यन्त्यसौ विष्णुर्हृदयं नाम हृद्गतेः। एवं हृदयनामानं विष्णुं

१ "तस्मिन्" इति प्र.पाठः। २ "स्यात् तदृष्टिनियमो ननु" इति प्र पाठः। प्राचीनपाठे यदमुक्तस्य अदृष्टं ष्टुमिष्टं च, यच्चामुक्तस्य नियमेनादृष्टम् अयोग्यत्वाददृष्टमेव तत्सर्वं मुक्तः सन् हरेर्लोकं गत्वा नियमेन श्यति पश्यत्येव।

सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति तस्य हवा एतस्य ब्रह्मणो नाम सत्यमिति तानि हवा एतानि त्रीण्यक्षराणि सत् ति यमिति तद् यत् सत् तदमृतमथ यत् ति तन्मर्त्यमथ यद् यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद् यमहरहर्वा एवंवित् स्वर्गं लोकमेति ॥७॥ अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकस्तस्माद् वा एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद् वा एतं सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यते सकृद् विभातो ह्येवैष ब्रह्मलोकस्तद् य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥८॥ अथ यद् यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनु विन्दतेऽथ यत् सत्रायणमित्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येवाऽऽत्मानमनुविद्य मनुतेऽथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तदरश्च हवै ण्यश्चा-

---

जानन् हि नित्यशः। विष्णुलोकगतेः पुण्यमाप्त्वा विष्णुं व्रजेत् तथा। यस्य सम्यक् प्रसादोऽस्ति विष्णोरेव स उच्यते। सम्प्रसादः स उत्थाय शरीरात् प्राप्य केशवम्। यथास्वरूपस्तु भवेद् यं प्राप्यासौ स्वरूपताम्। आप्नोति स परो ह्यात्मा भगवानिन्दिरापतिः। इत्याह सा रमा देवी पश्यन्ती परमं पदम्। सदित्यमृतधर्माणो मुक्ताः श्रीरपि चेरिताः। तीत्युक्ता मर्त्यधर्माणस्तेषां नियमनाद्धरिः। सत्यमित्युच्यते सद्भिः सेतुश्चापि विधारणात्। सितमस्मिन् जगत् सर्वमिति सेतुरितीरितः। एतं सेतुं प्रति पुमानन्यत् तीर्त्वा ह्यदोषवान्। स प्राप्यो ब्रह्मचर्येण मनोवाक्कर्मभिस्तु यत्। चरणं ब्रह्मणि परे ब्रह्मचर्यं हि तत् स्मृतम्। तेनैव ब्रह्मचर्येण भवेयुर्ब्रह्मलोकगाः। ये तेषां[1] ब्रह्मलोकः स्यात् परं ब्रह्मैव लोकनात्। ब्रह्मलोक इति प्रोक्तं तस्य लोकोऽपि कथ्यते। ॥*॥ यज्ञ इष्टं च सत्रं च मौनं चानशनं तथा। परस्य ब्रह्मणो ज्ञानं सर्वमेतदुदीरितम्। परस्य ब्रह्मणो लोके श्वेतद्वीपाभिधे परे। अरो ण्यश्चार्णवौ[2] दिव्यौ चिदानन्दरसात्मकौ।

---

१ "एतेषां" २ "अरण्यौ चार्णवौ" इति प्र. पाठौ।

र्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयं सरस्तदश्वत्थः सोमसवनस्तद-पराजिता पूर्ब्रह्मणः .प्रभुविमितं हिरण्मयं तद् य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥९॥ अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्न-स्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितस्तद् यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मा-दादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्तास्तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवत्यथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानात्यथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमते स ओमितिवाहोद्वामी-यते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद् वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥१०॥ तदेष श्लोकः । शतं चैका च हृदयस्य नाड्य-स्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ् अन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥११॥*॥ इति प्रथमः खण्डः ॥*॥

---

यावानुच्चः स्वर्गलोकस्तावानुच्चतया स च । श्वेतद्वीपो दिविष्ठोऽतस्तत्र मद्यं सरोवरम् । सर्वभोज्यात्मकं दिव्यं तत्राश्वत्थाः सुधास्रवाः । तत्र विष्णोः पुरं दिव्यमपराजितनाम-कम् । विमिताख्यं च पर्यङ्कं विष्णोर्मानेन सम्मितम् । चित्सुवर्णमयं दिव्यं लक्ष्मीस्तत्त-त्स्वरूपिणी । स श्वेदद्वीपगो विष्णुः पर्यङ्कब्रह्मनामकः ॥*॥ स एष हृदि नाडीषु पञ्चरूपः प्रतिष्ठितः । विष्णोरणिम्नो रूपाणि पञ्चनाडीस्थितानि तु । नारायणाख्यं सौषुम्नं मध्यस्थं रक्तवर्णकम् । शुक्लं तु वासुदेवाख्यं नान्दिन्यामग्रतः स्थितम् । पिङ्गलायां पिङ्गलं च रूपं सङ्कर्षणाभिधम् । पश्चिमे वज्रिकायां च पीतं प्रद्युम्ननामकम् । इडायामनिरुद्धाख्यं नीलरूपं व्यवस्थितम् । सूर्येऽप्येवं पञ्चरूपो भगवान् संव्यवस्थितः। आदित्यनामा चाऽदित्वात् तद्व्याप्तं सूर्यमण्डलम् । तद्रश्मिभिस्तथा व्याप्ताः समस्ताः सूर्यरश्मयः । तस्मिन् नाडीषु च प्रोतास्तथा नाडीषु रश्मयः । तन्नाडीसंस्थितं विष्णुं

---

१ प्राचीनेषु प्रमितेष्वपि कोशेषु "सश्श्वेतद्वीपगो विष्णुः" इति द्विस्तालव्यं पठ्यते । बहुधा चैवं दृश्यते । न ज्ञायते किमार्षः सन्धिरेवेदृशः किंव्याकरण इति । २ "नान्दिन्यामग्रतः" ३ "पिङ्गलं तु" ४ "नाडीस्थ-रश्मयः" इति प्र. पाठाः ।

य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥१॥ तद्धोभये देवसुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामानितीन्द्रो हवै देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुस्तौ ह द्वात्रिंशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच ॥ २ ॥ किमिच्छन्ताववास्तमिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो हरन्तो वेदयन्ते तमिच्छन्ताववास्तमिति तौ ह प्रजापतिरुवाच ॥३॥ य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतत् ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥४॥ उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥५॥ तौ होचतुः सर्वमेवेदमावां भगव

मध्ये जीवः प्रपद्यते । तत्तेजसा हि सम्पन्नः सुप्त इत्यभिधीयते । ओमित्येव वहन् नित्यं वायुरोंव इतीरितः[1] । तेन वामत्वमायाति मुक्तिकाले ह्युपासकः । दिव्यचिद्रूपभावो हि वामभाव उदीरितः । यदैनं नेतुमन्विच्छन् मनः क्षिपति मारुतः । आदित्याख्यं तदा विष्णुं याति जीवः स्वविद्यया " इति पर्यङ्कोपासनायाम् ॥*॥ "इन्द्रो विरोचनश्चैव श्रत्वा तं[2] ब्रह्मणोऽक्षिगम् । विष्णुमानन्दरूपं तं[3] सम्यग्ज्ञानविपर्ययौ । आपतुस्तत्र देवेन्द्रो जानन्नपि विरोचनम् । मोहयन्ननुरूपाणि तस्य वाक्यान्युवाच ह । यथा विरोचनो नैव जानीयात् तत्त्वमञ्जसा[4] । स्ववाक्यं चानृतं न स्यात् तथा ब्रह्माऽप्युवाच ह । अयोग्या ह्यसुरा ज्ञाने वक्तव्यं नैव चानृतम्[5] । मच्छापादासुरो भावः प्रह्लादादेर्नतु स्वतः । अयं चासुर[6] एवातो वक्ष्याम्यस्योभयं यथा । इन्द्रस्तु शुद्धभावत्वात् पुनरायास्यति ध्रुवम् । इत्यभिप्रायतः प्रोक्तो ब्रह्मणाऽक्षिगतो हरिः । अयोग्यत्वात्तु तच्छ्रुत्वा प्रतिरूपं विरो-

१ "ओंवाडितीरितः" इति प्र. पाठः । प्राचीनपाठेऽपि ओंव इति ओंवाडिति चानर्थान्तरमिति वक्तव्यम् ।
२ "श्रुत्वा तु" इति प्र. पाठः । ३ यो ब्रह्मणोऽक्षिगस्तं तं तथा श्रुतिप्रसिद्धं श्रुत्वेति तत्पदद्वयार्थः ।
४ "जानीयाद् विष्णुमञ्जसा" ५ "वक्तव्यं चैव नानृतम्" ६ "अयं त्वासुरः" इति प्र. पाठाः ।

आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृताविन्त्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुस्तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्याऽत्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम तेभ्यो हैतामुपनिषदं प्रोवाचाऽत्मैवेह मह्य्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणां ह्येषोपनिषत् प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति संस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥६॥*॥ इति द्वितीयः खण्डः ॥*॥

अथ हेन्द्रोऽप्राप्यैव देवानेतद् भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष

---

चनः। मत्वाऽप्स्वादर्शके चैव पप्रच्छ कतमस्त्विति। तत्रापि तु हरेर्भावं हृदि कृत्वा चतुर्मुखः। दृश्यते ह्येष एवेति तत्त्ववेदिविवक्षया। तथाऽपि योग्यतैवात्र भूयसीति निवेदितुम्। दर्शयन् प्रतिरूपस्य दोषानाह प्रजापतिः। अलङ्कारादिभिर्युक्तः पश्यस्वेति विवेचयन्। यथा देहगुणे गौण्यं दोषे दोषास्तथेति तु[1]। तथाऽप्यशुद्धभावत्वात् प्रतिरूपस्य तद्गुणान्। परस्य ब्रह्मणो जानन् ययौ तुष्टमनाः स्वयम्। असुराणामविश्वासनिवृत्त्यर्थं पितामहः। माध्यस्थ्यं ज्ञापयानश्च जानन् वैरोचनं मनः। प्राहाज्ञानां पराभाव इत्युच्चैश्च पुनःपुनः। तथाऽप्यशुद्धभावत्वादजानन्नेव निर्ययौ। गत्वा चैव परं ब्रह्म प्रतिरूपात्मकं सदा। दिदेश सर्वासुराणां शरीरालङ्कृतेरपि। अलङ्कृतिं ब्रह्मणश्च प्रत्यक्षेणोपलम्भिताम्। अतोऽसुरा न दास्यन्ति न यजन्त्यात्मनः परम्। स्वभोगेनैव तृप्तिः स्यादिति सर्वेऽपि मेनिरे। तत्संस्कारवशेनैव स्वयं ब्रह्मेति वादिनः[2]। अभवन्पतंश्चैव तमोऽन्धे नित्यदुःखिताः ॥*॥ इन्द्रस्तु[3] जानन्नपितु मोहयन्नसुरं तदा। गत्वा

---

१ "दोषास्तथैव तु" २ "वेदिनः" ३ "इन्द्रश्च" इति प्र॰ पाठाः।

पश्यति नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागम इति स होवाच ॥१॥ यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशद्वर्षाणीति स हापराणि द्वात्रिंशद्वर्षाण्युवास तस्मै स होवाच ॥२॥ एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद् भयं ददर्श तद् यद्यपीदं शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥३॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्तीवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच ॥४॥ मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच तद् यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्तीवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाच ॥५॥ एतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशद्वर्षाणीति स हापराणि द्वात्रिंशद्वर्षाण्युवास तस्मै स होवाच तद् यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद् भयं ददर्श नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विना शमेवापीतो भवति नाहमत्र

---

निववृते पश्चादिव पश्यन् सदोषताम्। पुनःपुनश्च मोहाय गत्वा गत्वा निवर्तते। कथञ्चिदेव विज्ञातं मयेत्यज्ञान् विमोहितुम्। तद्योग्यान्येव वाक्यानि ब्रह्माऽप्याह पुनःपुनः। गरीयसी योग्यतेति ज्ञापयन् पूर्ववत् पुनः। सन्दिग्धान्येव वाक्यानि प्रोवाचेन्द्राय चाऽत्मभूः। स्वप्नं प्रदर्शयन् यस्तु पूज्यते सर्वदैवतैः। स एव विष्णुरित्याह तत्राप्याह पुरन्दरः। दर्शयन्नासुरीं बुद्धिं स्वप्नदृश्यविवक्षया। घ्नन्तीवैनमदन्तीव तथा न स्यात् परो हरिः। इत्युक्त आह ब्रह्मैनं सुप्तिस्थो भगवानिति। यत्र सुप्तो ह्ययं जीव

भोग्यं पश्यामीति स समित्पाणिः [श्रोत्रियः] पुनरेयाय तं ह प्रजापतिरुवाच ॥ ॥६॥ मघवन् यच्छान्तहृदयः प्राव्राजीः किमेवेच्छन् पुनरागम इति स होवाच नाहं खल्वयं भगव एवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विना शमेवापीतो भवति नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद् वसापराणि पञ्च वर्षाणीति स हापराणि पञ्च वर्षाण्युवास तान्येकशतं सम्पेदुरेतत् तद् यदाहुरेकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास तस्मै स होवाच ॥७॥ ॥*॥ इति तृतीयः खण्डः ॥*॥

मघवन् मर्त्यं वाव इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्याऽत्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतोऽशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराणि वा एतानि तद् यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते ॥ १ ॥ एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि-

---

इत्युक्तं प्राह[1] वासवः । नाहं जानामि मत्तोऽन्यं सुप्तो[2] नान्योऽपि दर्शयेत् । अहमस्मीति भूतानि नच पश्यन्ति कानिचित् । यदि जीवः परात्मा चाथोन्योन्यस्मिन्नपीतताम्[3] । गतौ तदाऽप्यपीतस्तु शं विनैव भवेदिति । उक्तो ब्रह्माऽब्रवीच्छक्रं ज्ञापयंस्तत्त्वमञ्जसा ॥*॥ योऽयं शरीरसम्बन्धी जीव इत्यवधार्यताम् । भूतेष्यद्वर्तमानेषु यस्य नो देहसङ्गतिः । सोऽशरीरः परो विष्णुरमृतो नित्यपूर्तिमान्[4] । अधिष्ठाय तथापीमं देहमास्ते स ईश्वरः । जरामृत्युपरीतोऽयं जीवात्मा देहसङ्गतेः । परेणेयं सुखं प्रोक्तं प्रियमित्येव पण्डितैः। परेणेयमभद्रं यदप्रियं तदुदीरितम् । न जीवस्य तयोर्हानिः कदाचिद् विद्यते द्वयोः[5] । अशरीरं परं ब्रह्म नैव ते स्पृशतः क्वचित् । अभ्रनामा भगवान् विष्णुर्व्याप्तत्वात् परमेश्वरः । तेनैव भ्रियमाणत्वाद् ब्रह्माऽभ्रमिति कीर्तितः । वायोः पत्नी विद्युदुक्ता विशेषद्युतिहेतुतः । ब्रह्माणी स्तनयित्नुः स्यात् सर्वशब्दात्मिका यतः । एतेषां ज्ञानवैशेष्यान्नाति देहेन सङ्गतिः । अतः प्रियाप्रिये तेषामपि न ब्रह्मणः किमु । विष्णवीयं हि सुखं तेषां स्वभर्त्रीयमथापि च । नह्यन्येयं सुखं तेषामतस्ते प्रियवर्जिताः। यथा ते परमाकाशात् विष्णोरेव समुत्थिताः। तमेव प्राप्य संयान्ति नैजमानन्दमूर्जितम् ।

---

१ "इत्युक्तः प्राह" इति प्र. पाठः। उक्तमिति पाठे उक्तमुक्तवन्तं ब्रह्माणम् । उक्तं वचनमुद्दिश्य वा॥
२ "सुप्तौ" ३ "वाऽप्यन्योन्यस्मिन्नपीतताम्" ४"नित्यमूर्तिमान्" ५ "विद्यते क्वचित्" इति प्र.पाठाः।

निष्पद्यते स उत्तमपुरुषः ॥२॥ स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रायोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तोऽथ यत्रैतदाकाशमनु- विषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥३॥ अथ यो वेदेदं मन्वानीति स आत्मा [मननाय] मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात् तेषां सर्वे च लोका आत्ताः सर्वे च कामाः सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापति- रुवाच प्रजापतिरुवाच ॥४॥*॥ इति चतुर्थः खण्डः ॥*॥

एवं सम्यक् प्रसादेन विष्णोर्मुक्तोऽपि योऽपरः । यं प्राप्य ते निजानन्दमाप्नुवन्ति स केशवः । तं प्राप्य रमते मुक्तः स्त्रीभिर्यानैश्च बन्धुभिः । यथैव सारथिर्यान एवं देहे च मारुतः । यथा रथी तथा विष्णुर्जीवोऽन्यरथगो यथा । यदाश्रितानीन्द्रियाणि प्राणश्चापि यदाश्रयः । यदाश्रयोऽप्ययं जीवो यो वेदैषां प्रवर्तनम् । दर्शनं श्रवणं घ्राणं जिह्वां स्पर्शं मनस्तथा । तदीयान् विषयांश्चैव यो वेदाखिलमञ्जसा । स विष्णुः परमो ज्ञेयो देवताः करणानि च । स एतैरिन्द्रियैर्विष्णुर्भोगाननुभवत्यजः । स्वरूपेणैव शक्तोऽपि जीवदेहस्थितो हरिः । भुङ्क्ते तदिन्द्रियैर्भोगांश्छुरितैरिन्द्रियैः स्वकैः । जीवं तदिन्द्रियाण्येवं प्राणं च व्याप्य कृत्स्नशः। भुङ्क्ते तत्तद्गुणान् विष्णुर्नैव दोषान् कदाचन। तमेवं देवताः सर्वा वाय्वाद्याः समुपासते । तस्माद् देववशा लोकाः सर्वकामाः सजी- वकाः । तमेतं यो यथा ज्ञात्वा पश्येद् विष्णुं सनातनम् । आप्नोति सर्वकामांश्च सर्व- लोकांश्च कामतः" इति सामसंहितायाम् ॥*॥

"उभौ लोकाववाप्नोति" इति वचनान्न लोकायतिकमतं विरोचनोक्तम्[2] । किन्तु बिम्बप्रतिबिम्बा- भिमान्यैक्याभिप्रायेण[3] जीवात्मैव महय्य इति मायावाद एव । नचान्यत्र[4] जीव आत्मशब्दोक्तः । "तदस्यामृतस्याशरीरस्याऽत्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै[5] सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इतीशजीवयोः सतात्पर्यं भेदाभिधानात् । नहि जीवादन्यस्य प्रियाप्रियानुभवोऽस्ति । नच मुक्तस्यापि प्रियाप्रियापहति- रस्ति । नच विष्णोरत्र विवक्षितं प्रियम् । पराधीनरतिप्राप्तिः[6] प्रियमत्र विवक्षितम् । नहि तद् भगवतः । मुक्तानां तु भगवदधीनरतित्वात् प्रियमस्त्येव ।

१ "तमेतं" २ "विरोचनेनोक्तम्" ३ "बिम्बप्रतिबिम्बयोरभिमान्यैक्याभिप्रायेण" ४ "नचात्र" ५ "न हवै" ६ "प्राप्तिर्हि" इति प्र. पाठाः ।

"जीवा मुक्ता अमुक्ताश्च पराधीनरतित्वतः। न प्रियापहतिः क्वापि स्वातन्त्र्यान्न हरेः प्रियम्। पराधीनरतिर्यस्मात् प्रियमित्युच्यते बुधैः। हरेरधीनता तु स्याद् यद्यपि ब्रह्मवायुवोः। तदन्यवशताभावादप्रियाविति तौ श्रुतौ। यथा राज्ञः स्वराट्छब्दो रुद्रस्येश्वरता तथा। यथा शक्रस्य चेन्द्रत्वं तद्वदप्रियता तयोः। यथा राज्याः स्वराज्ञीत्वं यथैवोमेश्वरी स्मृता। विद्युतः स्तनयित्नोश्च तथैवाप्रियता श्रुता" इति च परमश्रुतौ।

"स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति मुक्तस्य तत्प्रसादात् तत्प्राप्त्या निजानन्दानुभवश्रुतेश्च। "स उत्तमपुरुषः" इति तस्य जीवादुत्तमत्वश्रुतेश्च। अवरपुरुषापेक्षया ह्युत्तमपुरुषशब्दो भवति। अन्यथोत्तमशब्द एव स्यात्।

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इति च। "ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते। तद् यत्स्वभावः कैवल्यं स भवान् केवलो हरे", "परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति", "इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः", "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति", "एतमानन्दमयमात्मानमुपसङ्क्रम्य। इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्", "न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः", "कृष्णो मुक्तैरिज्यते वीतमोहैः" इत्यादेश्च। "स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्" इत्यत्रापि भेदेनावस्थानश्रुतेः।

उपशब्दादन्तशब्दाच्च मुक्तस्य परञ्ज्योतिःसमीपावस्थानावगतेश्च। नच जीवमात्रं देवा उपासते।

"ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते" इति हि श्रुतिः। "भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा" इत्यादेश्च। "भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः। भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलङ्कृषीष्ट भगवान् वचांसि मे" इत्यादौ भगवत एवेन्द्रियैर्भोगोक्तेश्च। "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे" इति च। "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" इति भगवद्वचनम्। "इदं पश्यामि जिघ्राणीत्यपि जीवा न वै विदुः। द्रव्याणामपि च ज्ञानाद् वेदासौ पुरुषोत्तमः" इति च। "स उत्तमपुरुषः" इति भगवत एवायं परामर्शः। "अन्यार्थश्च परामर्शः" इति भगवद्वचनात्। "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इति च। "जगद्व्यापारवर्जम्" इत्यल्पैश्वर्यं च मुक्तस्य भगवताऽभिहितम्।

अतो यं प्राप्य जीवः स्वेन रूपेणाभिनिष्पद्यते स भगवानुत्तमपुरुष इति परामर्शः। "स्वप्ने महीयमानश्चरति", "यत्रैतत् सुप्तः" इति पुरस्तादपि भेदोक्तेः। "नहि महीयमान एव जीवश्चरति ॥*॥

१ "राज्याश्च राज्ञीत्वं यथा वोमेश्वरी" २ "उत्तमः पुरुषः" ३ "ज्ञानमुपाश्रित्य" ४ "अनुव्रताः" ५ "उपशब्दादन्तरशब्दाच्च" इति प्र.पाठाः। ६ प्र. पाठे "इति च" इति नास्ति। ७ "भगवद्वचनं च" ८ "द्रव्याणामपरिज्ञानात्" ९ "उत्तमः पुरुषः इति प्र. पाठाः। १० यद्यपि प्राचीनकोशेषु "अन्यार्थस्तु परामर्शः" इति पठ्यते। तथाऽप्ययमत्र प्रमादात् पतितः पाठ इति सम्भाव्यते। सूत्रभाष्ये "अन्यार्थश्च" इत्येव पाठदर्शनात्। ११ "अल्पैश्वर्यत्वं मुक्तस्य" १२ "उत्तमः पुरुषः इति प्र.पाठौ।

श्यामाच्छबळं प्रपद्ये शबळाच्छामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति ॥१॥ आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म तदमृतं स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनु प्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कं श्वेतं लिन्दुमाभिगां लिन्दुमाभिगाम् ॥२॥ तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते नच पुनरावर्तते नच पुनरावर्तते ॥३॥*॥ इति पञ्चमः खण्डः ॥*॥

इति श्रीच्छन्दोगोपनिषदि अष्टमोऽध्यायः

---

समाप्ता चेयमुपनिषत्

---

प्रायोग्यः सारथिः। प्रयोगेन यानस्य।

"यन्ता सारथिरानेता प्रायोग्य इति कीर्त्यते[1]" इत्यभिधानात्। "अन्येभ्यो दीप्यमानत्वाद् दैवं चक्षुर्मनः स्मृतम्" इति च।

"य एते ब्रह्मलोके" तेषु "रमते"। अनुविद्य शास्त्राचार्यानुसारेण विदित्वा विजानात्यापरोक्ष्येण। "वेदनं शास्त्रतो ज्ञानं विज्ञानं ब्रह्मदर्शनम्" इति च ॥*॥ "श्यामो हृदि स्थितो विष्णुः शबळो[2] विश्वरूपवान्। जीववर्णो जीवगतो लोहितश्चक्षुषि स्थितः" इति मानसे। "हयग्रीवमुखोत्थानि यानि वाक्यानि तानि तु। रमा ददर्श तान्येव ब्रह्मा तान्येव नारदः। यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु। तान्युत्तरेषां वाक्यानि भविष्याण्यवदद्धरिः। एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्धि सा" इति सामसंहितायाम् ॥*॥ "आकाशोऽतिप्रकाशत्वान्नामरूपे ऋते स्थितः। ब्रह्माख्यो भगवान् विष्णुस्तद्वेश्म प्राप्नुयामहम्। यशोऽहं सर्ववर्णानां मत्तो ह्येषां[3] यशो भवेत्। सोऽहं मम यशोदात् यशसां यश उत्तमम्। विष्ण्वाख्यं परमं ब्रह्म श्वेतं श्वसनगं यतः। अदत्कमद्यमानं कं स्वानन्दानुभवात्मकम्। लिन्दु तद् रतिदं यस्मात् तदहं प्राप्नुयां सदा ॥*॥ उपदिष्टः परेणैव त्वेवमाह चतुर्मुखः। उवाच च मनोर्विद्यां प्रजाभ्यो मनुरेव च।

---

१ "कीर्तितः" २ "शबलः" ३ "मत्तोऽन्येषाम्" इति प्र. पाठाः।

तस्मात् सर्वेन्द्रियाणीशे निधाय पुरुषोत्तमे। दृष्ट्वा तं परमं विष्णुं तल्लोकं प्रतिपद्यते। नाऽवर्तते पुनस्तस्मात् कदाचित् केनचिद्धरेः[1]" इति च ॥*॥

पूर्णानन्दमहोदधिः परतमो नित्यः परस्मात् सदा
सर्वज्ञः सकलेशिता गुणनिधिर्नित्योत्सवस्तद्विदाम्।
सर्वस्मादधिकं मम प्रियतमः स्विष्टादपीष्टोत्तमः[2]
सर्वस्माच्च हितात् सदा हिततमः प्रीतो भवेन्मे हरिः॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत्।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि॥

"हनशब्दो ज्ञानवाची हनूमान् मतिशब्दितः रामस्य ह्यृतरूपस्य[3] वाचो नेता गुणोदधिः। भूतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः। ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम्। प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः। मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्। मध्व आनन्दतीर्थः स्यात् तृतीया मारुती तनुः। इति सूक्तगतं रूपत्रयमेतन्महात्मनः। यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः" इति सद्भावे।

आनन्दतीर्थ इति तु यस्य नाम द्वितीयकम्[4]।
पूर्णप्रज्ञेन तेनेदं कृतं भाष्यं हरेः पियम्॥

नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीच्छन्दोगोपनिषद्भाष्ये
अष्टमोऽध्यायः

---

समाप्तं चेदं भाष्यम्

---

१ "केनचित् कचित्" २ "पियतमस्त्विष्टादपीष्टोत्तमः" ३ "स्मृतरूपस्य" ४ "तृतीयकम्" इति प्र.पाठाः।

# श्रीतलवकारोपनिषद्भाष्यम्

ॐ॥ केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः। केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥१॥ श्रोत्रस्य श्रोत्रं मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः। चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥२॥ न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः। न विद्म न विजानीमो यथैतदनुशिष्यात् ॥३॥ अन्यदेव तद् विदिता-दथो अविदितादधि। इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे ॥४॥

॥*॥ इति प्रथमः खण्डः ॥*॥

यद् वाचाऽनभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमु-पासते [यदिदमुपासते] ॥१॥ यन्मनसा न मनुते येनाऽहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥२॥ यच्चक्षुषा न पश्यति येन चक्षूंषि

---

ॐ॥ अनन्तगुणपूर्णत्वादगम्याय सुरैरपि।
सर्वेष्टदात्रे देवानां नमो नारायणाय ते॥

"वैजयन्ते समासीनमेकान्ते चतुराननम्। विष्णोर्विविदिषुस्तत्त्वं पर्यपृच्छत् सदाशिवः। यदि सत् पुरुषावश्यं[1] तत्र तत्र पतेन्मनः। केन तत् प्रेरितं याति प्राणः सर्वोत्तमस्तथा। चक्षुः श्रोत्रं तथा वाचं को देवो विनियोजयेत्। इति पृष्टस्तदा ब्रह्मा प्राह देवमुमापतिम्। ध्यात्वा नारायणं देवं सर्वाधारमनूपमम्। सर्वज्ञं सर्वशक्तिं च सर्वदोषविवर्जितम्। यः प्राणस्य प्रणेता च चक्षुरादेश्च सर्वशः। अगम्यं सर्वदेवैश्च[2] परिपूर्णत्वहेतुतः। प्राणादीनां प्रणेता च सर्ववेत्ता च सर्वशः। सर्वोत्तमश्च सर्वत्र स विष्णुरिति धार्यताम्। यं सम्यङ् नैव जानाति कश्चिन्निरवशेषतः। सर्वात्मना विजानामीति यस्य[3] मतं

---

१ "यदिदं पुरुषावश्यं" इति प्र. पाठः। प्राचीनपाठे हे पुरुष ब्रह्मन् इदं मनः पुरुषेणावश्यं सदपि यदि तत्र तत्र अवश्यं पतेत् पतत्येव—इत्यावृत्त्या बह्वर्थमिदं वाक्यम्। २ "अगम्यः सर्वदेवैश्च" इति प्र. पाठः। प्राचीनपाठे यः प्राणस्य चक्षुरादेश्च प्रणेता तं सर्वदेवैरगम्यं नारायणं ध्यात्वेति पूर्वेणान्वयः। तेन प्राणादीनां प्रणेता चेत्यनेनापुनरुक्तिश्च साधिता भवति। ३ "विजानामीति तु यस्य" इति प्र. पाठः।

पश्यति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥३॥ यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥४॥ यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥५॥*॥ इति द्वितीयः खण्डः ॥*॥

यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् । यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते ॥१॥ मन्ये विदितं नाहमन्ये सुवेदेति नो न वेदेति वेद च । यो नस्तद् वेद तद् वेद नो न वेदेति वेद च ॥२॥ यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥३॥ प्रतिबोधविदितं मतममृतत्वं हि विन्दते । आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥४॥ इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः। भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥५॥*॥ इति तृतीयः खण्डः ॥*॥

ब्रह्म ह देवेभ्यो विजिग्ये । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त ॥१॥ त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति । तद्धैषां विजज्ञौ ॥२॥ तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानत किमिदं यक्षमिति ॥३॥ तेऽग्निमब्रुवन् जातवेद

---

भवेत् । तस्याज्ञातः स भगवान् यो नैवं मन्यते सदा । ज्ञातस्तस्य तथाऽस्यैव निःशेष-मननं[1] कृतम् । इति यो मन्यते नास्य मतः स पुरुषोत्तमः । नातिवेद्यो नचावेद्यस्तस्मात् स परमेश्वरः । नेदं जीवस्वरूपं तद् ब्रह्म विष्ण्वाख्यमव्ययम् । किन्तु यत् ते समीपस्थ-मास ते विनियामकम्[2] । तदेव ब्रह्म विद्धि त्वं विष्ण्वाख्यं परमव्ययम् । नियामकं तद् देवानां मर्त्यानां किमुतोत्तमम् । तत्प्रसादं विना जीवे मन्तव्या न प्रवृत्तयः । किमु जीवस्य तद्भावो न मन्तव्य इतीर्यते । इत्यत्राऽऽख्यायिकां वच्मि शृणु तां त्वं महेश्वर । स्थित्वा देवेषु तद् ब्रह्म व्यजयद् दैत्यदानवान् । देवेभ्योऽर्थाय विजयं तं देवा मेनिरे स्वयम्[3] । आविष्टा असुरैस्तेषां प्रबोधाय जनार्दनः। यक्षरूपः प्रादरभूदुमाशिवसमन्वितः। ब्रह्मणा चापि सहित एतेभ्योऽपि परो ह्यहम् । एतेऽपि मे भृत्यभूताः परिवार्य व्यवस्थिताः। इति ज्ञापयितुं विष्णुः सह तैरप्युपागतः। यूयमेतानपि

---

१ "निःशेषं मननं" २ ते इत्यस्य उपेत्यनेनान्वयविवक्षया समीपस्थमिति व्याख्यातम् । अर्थान्तरं चोच्यते ते विनियामकमिति । ते स्वरसम्बधीति । नियामकत्वं च सम्बन्धः । आसत इत्येकं वा पदमास्त इत्यर्थे ।
३ "मेनिरे स्वकम्" इति प्र. पाठः। प्राचीनपाठे स्वयं स्वीयं स्वयं कृतं मेनिर इत्यर्थः ।

एतद् विजानीहि किमेतद् यक्षमिति । तथेति तदभ्यद्रवत् तमभ्यवदत् कोऽसीति ॥४॥ अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति । तस्मिन् त्वयि किं वीर्यमित्यपि ॥५॥ इदं सर्वं दहेयं यदिदं पृथिव्यामिति । तस्मै तृणं निदधावेतद् दहेति ॥६॥ तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुम् । स तत एव निववृते नैतदशकं विज्ञातुं यदेतद् यक्षमिति ॥७॥ अथ वायुमब्रुवन् वायवेतद् विजानीहि किमेतद् यक्षमिति । तथेति तदभ्यद्रवत् तमभ्यवदत् कोऽसीति ॥८॥ वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति । तस्मिन् त्वयि किं वीर्यमित्यपि ॥९॥ इदं सर्वमाददीयं यदिदं पृथिव्यामिति तस्मै तृणं निदधावेतदादत्स्वेति ॥१०॥ तदुपप्रेयाय सर्वजवेन तन्न शशाकाऽऽदातुम् । स तत एव निववृते नैतदशकं विज्ञातुं यदेतद् यक्षमिति ॥११॥ अथेन्द्रमब्रुवन् मघवन्नेतद् विजानीहि किमेतद् यक्षमिति । तथेति तदभ्यद्रवत् तस्मात् तिरोदधे ॥१२॥ स तस्मिन्नेवाऽऽकाशे स्त्रियमाजगाम । बहु शोभमानामुमां हैमवतीं तां होवाच किमेतद् यक्षमिति ॥१३॥*॥इति चतुर्थः खण्डः॥*॥ ब्रह्मेति होवाच ब्रह्मणो वा एतद् विजयेऽमहीयध्वमिति । ततो हैव विदाञ्चकार ब्रह्मेति ॥१॥ तस्माद् वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते[1] ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति । तस्माद् वा

---

ज्ञातुमशक्ताः किमु मामिति । तज्ज्ञानार्थं हुताशश्च नासिक्यो वायुरेव च । इन्द्रश्च क्रमशो जग्मुस्तं ज्ञातुं नैव चाशकन् । तत्रेन्द्रोऽधिकबुद्धित्वात् पृच्छतीति जनार्दनः । मत्तः शिवाद् ब्रह्मणश्च श्रोतुं नैवापि शक्तिमान् । इति ज्ञापयितुं तत्र नादृश्यत स केशवः । एषैव ज्ञानदाने ते योग्योमेति व्यदर्शयत् । उमा सा सम्यगाचष्ट तस्मै विष्णुं परं पदम् । यस्माद् ब्रह्मा च वायुश्च शेषवीन्द्रौ शिवस्तथा । सभार्या गर्विणो माऽसन् सुरेभ्यस्तेऽधिकास्ततः । इन्द्रस्तु प्रथमं ब्रह्म व्यजानात् तेन तूत्तमः । दक्षादिभ्यस्तथा कामः स ज्ञातुं[2] पूर्वमुक्तवान् । दक्षो बृहस्पतिश्चैव मनुः कामात्मजस्तथा । सूर्याचन्द्रमसौ धर्मो वरुणश्च पुरोमिति[3] । नासिक्यवायुरग्निश्च प्रथमं तदपश्यताम् । सर्वदेवाधिकास्तस्माद् (एते देवाः प्रकीर्तिताः । एतेभ्यश्चेन्द्रकामौ तु ताभ्यां ब्रह्मादयोऽधिकाः एतेषामवमो वह्निः परमो विष्णुरुच्यते । अन्तराले स्थितास्त्वन्ये )[4]

---

१ पस्पृशुरिति वक्तव्ये च्छान्दसं पस्पर्शुरिति । पस्पृशुरित्येवमपि पाठं पठन्ति । २ "कामस्तज्ज्ञातुं" इति प्र. पाठः । ३ "वरुणश्चोत्तुरोमिति" इति प्र. पाठः । प्राचीनपाठे पुरा ओमिति इति च्छेदः । उक्तवन्त इति वर्तते । ४ ( ) एतावान् भागः प्राचीनपाठे नोपलभ्यते ।

इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥२॥ तस्यैष आदेशो यदेतद् विद्युतो व्यद्युतदा३ इति । न्यमीमिषदा३ इत्यधिदैवतम् ॥ ३ ॥ अथाध्यात्मं यदेतद् गच्छतीव च मनोऽनेन चैनदुपस्मरत्यभीक्ष्णं सङ्कल्पस्तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम् । स य एतदेवं वेदाभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥४॥ उपनिषदं भो ब्रूहीत्युक्ता त उपनिषत् । ब्राह्मीं वाव त उपनिषदब्रूमेति ॥५॥ तस्यै तपो दमः कर्मेति प्रतिष्ठा । वेदाः सर्वाङ्गानि सत्यमायतनम् ॥६॥ यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ७ ॥

॥*॥ इति पञ्चमः खण्डः ॥*॥

इति श्रीतलवकारोपनिषत् समाप्ता

---

ब्रह्माद्याः पूर्वमीरिताः । अग्निः पश्चाद् व्यजानात् तदिन्द्रवाक्याद् ततोऽवमः। तस्माद् विष्ण्वभिसम्बन्धात् पारावर्यं सुरेष्विदम् । व्यद्योतयद् विद्युदादीन् कपिलाख्यस्तु यो हरिः। अक्ष्णोर्निमीलनं[1] कृत्वा यः शेते क्षीरसागरे। स एवैकः परं ब्रह्मेत्येवं[2] तस्योपदेशनम्। अधिदैवे तथाऽध्यात्मे यं मनो गच्छतीव च । सम्यङ् न गच्छति क्वापि मनो येन स्मरत्यपि । सोऽनिरुद्धाख्य ईशेशः परं ब्रह्मेति कीर्त्यते। स विष्णुस्तद्वनं नाम ततत्वाद् वननीयतः । एवमेनं तु यो वेद भवेत् सर्वैरपेक्षितः । एतच्छ्रुत्वा हरोऽपृच्छद् ब्रह्माणं पुनरेवतु । विद्याकारं मम ब्रूहीत्युक्तो ब्रह्माऽऽह तं पुनः । विद्यावेद्यं तव प्रोक्तमास्थानं ते वदाम्यहम् । तपोदमस्वधर्मेषु ये स्थिरास्तेषु[3] तिष्ठति । विद्या स्थानानि तस्यास्तु वेदा अङ्गानि निर्णयः । वेदैतामेवमखिलां[4] यो विष्णौ प्रतितिष्ठिति " इत्यादि ब्रह्मपारे[5] ॥*॥

विद्युत्सूर्यादिप्रकाशानां[6] समन्ताद् व्यद्युतत् प्रकाशयत्[7] ।

" यदादित्यगतं तेजो जगद् भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम् " इति वचनात् । " तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति " इति च ।

न्यमीमिषदा[7] । आ समन्तान्निमीलिताक्षमभवत्—

---

१ "अक्ष्णोर्निमेषणम्" २ "ब्रह्मेत्येवम्" ३ "ये स्थितास्तेषु" ४ "एवमखिलम्" ५ "ब्रह्मसारे" ६ " विद्युतः सूर्यादिप्रकाशान् " इति प्र.पाठाः । ७"प्राकाशयत्" इति प्र. पाठः। प्राचीनपाठे अडभावश्छान्दस इति वक्तव्यम् । ७ "न्यमीमिषत् आ समन्तात्" इति प्र.पाठः ।

"स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि । अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मा निशि सुप्तशक्तिषु " इति वचनात् ।

(पूर्णत्वाच्च आः ।)[1] अभीक्ष्णं सङ्कल्प इति मनसो विशेषणम् । सङ्कल्पकमित्यर्थः[2] । सप्रतिष्ठां सायतनामुपनिषदं ब्रूहीत्युक्ते; सम्यगेव मयोपनिषत्स्वरूपमुक्तम्; तत्र वक्तव्यं नास्ति । तपो दमः कर्म च विद्यायाः प्रतिष्ठा । तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थः । सत्यमिति मीमांसा ।

"निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् । श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयैतया । सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चया " इति शब्दनिर्णये । "ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम् । मूलरामायणं चैव पुराणं भगवत्परम् । वेदा इत्युच्यते सद्भिः शैक्षाद्यं[3] स्मृतयस्तथा । अङ्गानि सत्यं मीमांसा तद् विद्यायतनं त्रयम् " इति विद्यानिर्णये ॥*॥

यश्चिदानन्दसच्छक्तिसम्पूर्णो भगवान् परः ।
नमोऽस्तु विष्णवे तस्मै प्रेयसे मे परात्मने[4] ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
श्रीतलवकारोपनिषद्भाष्यं[5]
सम्पूर्णम्

❋

१ ( ) इदं वाक्यं प्राचीनकोशेषु न दृश्यते । २ प्राचीनकोशेषु **"सङ्कल्पमित्यर्थः"** इति श्रूयते । ककारच्युतिर्वा स्यात् । सङ्कल्पयतीति मनोविशेषणत्वान्नपुंसकत्वं वा स्यात् । ३ **"शिक्षाद्यं"** ४ **"प्रेष्ठाय प्रेयसां च मे"** इति प्र. पाठौ । ५ केनोपनिषदिति स्वाद्यपदेन प्रथितेयमुपनिषत् सामशाखीयतवलकारब्राह्मणे नवमाध्यायत्वेन पठ्यते । तेन तलवकाराणामियमुपनिषत् ।

# श्रीकाठकोपनिषद्भाष्यम्

ॐ॥ उशन् हवै वाजश्रवसः सर्ववेदसं ददौ। तस्य ह नचिकेता नाम पुत्र आस। तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धा विवेश ॥१॥ पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः। अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ॥२॥ स होवाच पितरं तात कस्मै मां दास्यसीति द्वितीयं तृतीयम्। तं होवाच मृत्यवे त्वा ददानीति ॥३॥ बहूनामेमि प्रथमो बहूनामेति मध्यमः किं स्विद् यमस्य कर्तव्यं यन्मयाऽद्य करिष्यति ॥४॥ अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे। सस्यमिव मर्त्यः पच्यते सस्यमिवाऽऽजायते पुनः ॥५॥ वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्। तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥६॥ आशाप्रतीक्षे सङ्गतं सूनृतां चेष्टापूर्ते पुत्रपशूंश्च सर्वान्। एतद् वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे ॥७॥ तिस्रो रात्रीर्यद्वात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः। नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान् वृणीष्व ॥८॥*॥ इति प्रथमं ब्राह्मणम् ॥*॥

शान्तसङ्कल्पः सुमना यथा स्याद् वीतमन्युर्गौतमो माऽभि मृत्यो। त्वत्प्रसृष्टं माऽभि वदेत् प्रतीत एतत् त्रयाणां प्रथमं वरं वृणे ॥१॥ यथा पुरस्तात् भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः। सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तम् ॥२॥ स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति। उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ ३ ॥

---

ॐ॥ ॐ[1] नमो भगवते तस्मै सर्वतः परमाय ते।
सर्वप्राणिहृदिस्थाय वामनाय नमो नमः॥

---

१ "नमो भगवते तस्मै" इत्येव प्र.पाठः ओङ्कारविरहितः। प्राचीनपाठे तु नवाक्षरः पादः। "ओमित्येतत्" इति वक्ष्यमाणत्वात् तद्ग्रहणम्।

स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्वं भजन्त एतद् द्वितीयेन वृणे वरेण ॥४॥ प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन्। अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥५॥ लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा। स चापि तत् प्रत्यवदद् यथोक्तमथास्य मृत्युः पुनरेवाऽह तुष्टः ॥६॥

॥*॥ इति द्वितीयं ब्राह्मणम् ॥*॥

तमब्रवीत् प्रीयमाणो महात्मा वरं तवेहाद्य ददानि भूयः। तवैव नाम्ना भविताऽयमग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥१॥ त्रिनाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत् तरति जन्ममृत्यू। ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥२॥ त्रिनाचिकेतस्त्रयमेतद् विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम्। स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥३॥

---

"अग्नौ विष्णुं सदा ध्यायंस्त्रिशोऽग्निं नाचिकेतकम्। यश्चयीत स तु प्राप्य स्वर्गं तत्र भयातिगः। उष्य मन्वन्तरं कालममृतत्वं भजेत् क्रमात्" इति ब्रह्मसारे। "इच्छन् वाजश्रवोनत्ता ददौ सर्वस्वदक्षिणाम्। उद्दालकः स्वर्गलोकं ददौ गाश्च निरिन्द्रियाः। मां दत्वाऽपि न ते गावो दातव्या ईदृशा इति। उवाच पुत्रस्तं बालस्तं शशाप पिता स्वयम्। स जगाम यमं बालो ब्रह्मचारी यमस्य तु। पत्न्या सम्पूज्यमानोऽपि जग्राहार्घ्यादिकं नतु। आगते तु यमे प्राह यमं सोदकमाहर। इत्युक्तः स यमस्तं तु सम्पूज्यादाद् वरत्रयम्। सौमनस्यं पितुश्चैव नाचिकेताग्निगं हरिम्। मृते[१] स्थितं च तं विष्णुमिति प्रादाद् वरत्रयम्" इति गतिसारे। "अग्र्यत्वादग्निनामाऽसौ नाचिकेताग्निगो हरिः। लोको विष्णोरनन्तस्य तज्ज्ञानान्नित्य आप्यते। प्रतिष्ठा सर्वलोकस्य स विष्णुः सर्वहृद्गतः। स एव सर्वलोकादिस्तं ज्ञात्वा मुच्यते ध्रुवम्" इति च।

या इष्टकाः या इष्टकादेवताः[२]।

"इष्टकादेवतां विष्णुं षष्ट्युत्तरशतत्रिकम्। यथावदेव विज्ञाय मुच्यते कर्मबन्धनात्" इति[३]।

त्रिभिरेत्य सन्धिम्। वेदैरविरुद्धम्[४]। वेदोक्तप्रकारेण भगवत्तत्त्वादिकं जानन्नित्यर्थः। त्रिकर्मकृत् यज्ञदानतपःकर्ता।

"यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्" इति वचनात्।

"त्रयमेतत्" या इष्टका इत्यादि।

---

१"मुक्ते स्थितं"२"या इष्टका इष्टकादेवताः"३"इति च" इति प्र.पाठाः। ४ "वेदैरविरुद्धः इति प्र.पाठः। प्राचीनपाठे क्रियाविशेषणम्।

एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण। एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥४॥*॥ इति तृतीयं ब्राह्मणम् ॥*॥

येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद् विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वृतस्तृतीयः ॥१॥ देवैरत्रापि विचिकित्सितं पुरा नहि सुज्ञेयमणुरेष धर्मः। अन्यं वरं नचिकेतो वृणीष्व मा मोप रोत्सीरति मा सृजैवम् ॥२॥ देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुज्ञेयमात्थ। वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥३॥ शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान्। भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥४॥ एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च। महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥५॥ ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामान् छन्दतः प्रार्थयस्व। इमा रामाः सरथाः सतूर्याः नहीदृशा लम्भनीया मनुष्यैः ॥६॥ आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं माऽनुप्राक्षीः ॥७॥ श्वोऽभावा

---

"ब्रह्मेति वेद उद्दिष्टस्तस्माद् व्यक्तो यतो हरिः। ब्रह्मजस्तेन कथितः स एव ज्ञोऽखिलज्ञतः" इति नामनिरुक्ते[1]।

अनेकरूपां सुवर्णमयीम्[2]—

"बहुरूपं च पुरटं कार्तस्वरमितीर्यते" इत्यभिधानात्। "यमोऽनुवादसन्तुष्टो वह्नेस्तन्नामतामपि। सृङ्कां[3] स्वर्णमयीं चैव कण्ठमालामदाद् विभुः" इति पाद्मे।

लोकादिः प्रतिष्ठा ब्रह्मजज्ञोऽनन्तलोकाप्तिरित्यादिविशेषणैश्च भगवानेव। "स्तोममहदुरुगायं प्रतिष्ठाम्" इति परामर्शाच्च। भगवतो ह्युरुगायनाम प्रसिद्धम्। गुहानिहितत्वं च तस्यैव विशेषतः प्रसिद्धम्। नचाग्निपरिज्ञानमात्रेणानन्तलोकाप्तिर्भगवज्ज्ञानं विना।

"तद् वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद् भवति" इत्यादिश्रुतेः।

नच मुख्ये सम्भवत्यमुख्यार्थो[4] युज्यते ॥*॥ प्रेते मुक्ते मनुष्ये नियामकत्वेन भगवानस्तीति ज्ञानिनो वदन्ति। नास्तीत्यज्ञाः। तस्य नियामकस्य रूपं[5] यथावदहं विद्याम्। "अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः। देहाद् विमुच्यमानस्य किमत्र परिशिष्यत एतद् वै तत्" इति परिहाराच्च मुक्ते स्थितो भगवान् पृच्छयत इति सिद्धम्। देहाद् विशेषेण मोचनं नाम मुक्तिरेव। मुक्तेरपि मरणात्मकत्वान्मरणमित्यपि भवति। स्थूलदेहपरित्यागस्तु विस्रंसमानस्येत्यनेनैवोक्तो भवति।

---

१"नामनिरुक्तौ" २"स्वर्णमयीम्" ३"शङ्काम्" ४"मुख्ये सत्यमुख्यार्थः" ५"स्वरूपम्" इति प्र.पाठाः।

मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः। अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥८॥ न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत् त्वाम्। जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥९॥ अजीर्यताममृतानामुपेत्य जीर्यन् मर्त्यः क्वधस्थः[1] प्रजानन्। अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥१०॥ यस्मिन्निदं विचिकित्सन्ति मृत्यो साम्पराये महति ब्रूहि नस्तत्। योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥११॥*॥ इति चतुर्थं ब्राह्मणम् ॥*॥
अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः। तयोः श्रेय आददानस्य साधु भवति हीयते अर्थाद् य उ प्रेयो वृणीते ॥१॥ श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमान् वृणीते ॥२॥ स त्वं प्रियान् प्रियरूपांश्च कामानभिध्यायन् नचिकेतोऽत्यस्राक्षीः नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥३॥ दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता। विद्याभीप्सितं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त[2] ॥४॥ अविद्याया-

---

"अग्निस्थं परमात्मानं सामान्याज्ज्ञानतोऽपि तु। अजानतस्तु मुक्तौ च जीवान्तस्थितमीश्वरम्। नियामकं च जीवानां मुक्तानामपि सर्वदा। गुणान् सर्वोत्तमत्वादीनविज्ञाय हरेस्तथा। नैव मुक्तिर्भवेत् तस्मात् कृच्छ्रात् तदवदद् यमः। तस्य गोप्यत्वविज्ञप्त्यै तथाऽप्यग्निस्थवेदनात्। सुखाधिक्यं भवेन्मुक्तौ तस्मात् तत् पृथगीरितम्" इति तत्त्वसारे। "स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्" इत्युक्त्वा "य एव[3] सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः" इति वचनाच्च जीवेषु स्थितो भगवान् पृच्छ्यत इति सिद्धम्।
मृतजीवे स्थितो मुक्तजीवे स्थितश्चोभयात्मको भगवान् विवक्षित इत्येतस्माच्चाविरोधः।
"गुह्यं तत् परमं ब्रह्म म्रियमाणशरीरिणम्[4]। सम्प्राप्तमपि जीवेषु जागर्ति स्वपितेष्वपि" इति ब्रह्माण्डे।
धारकत्वाद् धर्मो भगवान्। मरणे स्थितभगवन्तं[5] माऽनुप्राक्षीः। महति साम्पराये मुक्तौ ॥*॥

---

१ क्वथस्थ इत्यर्थः। क्वथनतीक्ष्णे नरके स्थितः थकारस्थानेऽतिशयार्थे तृतीयवर्णो धकारः। "अधा ते विष्णो" इतिवदित्यादि प्राचीनटीका। व्यासतीर्थप्रभृतयोऽर्वाक्तनटीकाकाराः सर्वेऽपि "क्वाधस्थः" इति पठित्वाऽधस्थः क्वेति व्याचक्षते। वरदतीर्थीये तु च्छान्दसमडभावमाश्रित्य धस्थः अधस्थः नरकाद्यधोदेशस्थित इतिव्याख्यातम्। "अतः क्वधस्थ इत्येव पाठः" इति विश्वाधीश्वरतीर्थाः। २ "नालोलुपन्त नैवाचालयन्" इति पूर्वाचार्याः। "लोलुपन्तः" इति तु प्रचलितटीकाकृतां च सम्मतः पाठः। ३ "य एषु" ४ "शीर्यमाणं शरीरिणम्" ५ "स्थितं भगवन्तं" इति प्र.पाठाः।

मन्तरे वर्तमानाः स्वयन्धीराः पण्डितम्मन्यमानाः । दन्द्रम्यमाणाः[1] परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥५॥ न साम्परायः प्रति भाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनःपुनर्वश-मापद्यते मे ॥६॥ श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥७॥ न नरेणावरः प्रोक्त एष सुज्ञेयो बहुधा चिन्त्यमानः । अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् ॥८॥ नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ । यां त्वमापः सत्यधृतिर्बतासि त्वादृङ् नो भूयान्नचिकेतः प्रष्टा ॥ ॥९॥ जानाम्यहं शेवधिरित्यनित्यं नह्यध्रुवैः प्राप्यते हि ध्रुवं तत् । यतो मया नचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥१०॥ कामस्याऽप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् । स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥११॥ तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥

---

सृङ्कां[2] शृङ्खलाम् । अन्यो भगवानन्योऽहमित्यजानन्ननन्यः । तेन प्रोक्ते गतिर्ज्ञानं नास्ति । "प्रोक्ताऽ-न्येनैव सुज्ञानाय प्रेष्ठ" इति वाक्यशेषात् ।

"जीवानां चैव विष्णोश्च यो न वेत्ति भिदां पुमान् । तदनुव्रताश्च ये केचित् तेषां ज्ञानं न जायते" इति ब्रह्मवैवर्ते ।

आख्यं विष्ण्वाख्यं नित्यं शेवधिरिति जानामि । नित्यमाख्यविषयैर्द्रव्यैः[3] मनआदिभिः । आख्यनित्य विषयैर्विष्ण्वाख्यनित्यविषयैर्द्रव्यैः । नित्यं भगवन्तं प्राप्तवानस्मि । ध्रुवो भगवान् अध्रुवैस्तद्भक्तिव-र्जितैर्न प्राप्यते । क्रतोरानन्त्यहेतुम् । स्तोमैरपि सर्वात्मना प्राप्तुमशक्यम्[4] । स्तोमेभ्योऽपि महान्तम् । उरगायमित्युक्तत्वाच्च न जीवविषयोऽयं प्रश्नः ।

"शरो ह्यात्मा ब्रह्म तल्लक्षमुच्यते[5]", "शरवत् तन्मयो भवेत्", "अभयं तितीर्षतां पारम्", "तादृगेव भवति" इत्यादौ सर्वत्र भेदस्यैवोक्तेश्च न जीवाभेदः । "नाचिकेतं शकेमसि" इत्युक्तत्वाच्च नाचिकेताग्निस्थो[6] भगवानेवात्रोच्यत[7] इति सिद्धम् ।

उरुगायं दृष्ट्वा कामस्याऽप्तिमत्यस्राक्षीः । नच मृत्वा यमं प्राप्तस्य नचिकेतसो मृतोऽस्ति[8] नास्ति

---

१ दन्द्रम्यमाणाः सम्यग् द्रुमायमाणा द्रुमवन्मोघं जीवन्तः। "तरवः किं न जीवन्ति" इत्यादिवचनादिति प्राचीनटीका। २ "शृङ्कां" इति प्र.पाठः। ३ "आख्यविष्णुविषयैः" इति प्र. पाठः । यद्यपि प्राचीनकोशेषु केषुचित् "नित्यमाख्याविषयैः" इति पाठो दृश्यते ; प्रमाद इति सम्भाव्यते । ४ प्राचीनकोशेषु "प्राप्तुं शक्यम्" इति पठ्यते। नञः स्खलनं स्फुटम्। ५ "तल्लक्ष्यमुच्यते" इति प्र.पाठः। ६ प्राचीनकोशेषु "नचिकेताग्निस्थः। इति दीर्घरहितं पठ्यते। ७ "भगवानेवोच्यते" ८ "मृतोऽस्ति नवेति" इति प्र.पाठः ।

॥१२॥ एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य । स मोदते मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये ॥१३॥ अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद् वद ॥१४॥*॥ इति पञ्चमं ब्राह्मणम् ॥*॥

सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं सङ्ग्रहेण ब्रवीमि । ओमित्येतत् ॥१॥ एतद्ध्येवाक्षरं ब्रह्मैतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥२॥ एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते । ॥३॥ न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमानेऽपि देहे ॥४॥ हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥५॥ अणोरणीयान् महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥६॥ आसीनो दूरं व्रजति

---

वेति संशयोऽस्ति । गह्वरे मुक्तजीवे स्थितम् । प्रवृह्य जीवात् पृथक्कृत्य[1] ।

"मुक्तजीवे स्थित विष्णुं विदित्वा जीवतः पृथक् । मोदते मोदनीयं तं प्राप्य मुक्ताः सदैव च" इति महावराहे[2] । "एतद्ध्येवाक्षरं ब्रह्म विष्ण्वाख्यं परमव्ययम् । सर्वस्याऽलम्बनं ज्ञात्वा मुच्यते नात्र संशयः" इति च । "देहोत्पत्तिविनाशाख्यौ ज्ञानिनोऽप्युद्भवाभवौ न कुतश्चिद् यतो विष्णुर्जायतेऽतस्तदीक्षणात् । भावाभावौ न विदुषो यस्माज्जीवो न कश्चन । जायते म्रियते वाऽपि स्वरूपेण कथञ्चन । अजो नित्योऽविकारश्च जीवः पुरमणन्नपि" इति च ।

अयं भगवान् कुतोऽपि न बभूव यस्मादतस्तद्वेत्ताऽपि विपश्चिन्न जायते म्रियते च[3] । यतः कश्चिज्जीवः स्वतो न बभूव । देहसम्बन्धाद्धि जायते । विपश्चितस्तु देहसम्बन्धाभावान्न जायते न म्रियते च । जीवस्यापि स्वतो मरणाभावादुभौ तौ न विजानीतः । एवं नित्यस्य जन्तोर्गुहायां निहितः । एवं विष्णौ[4] क्रतुर्यस्य सोऽक्रतुः । तन्निश्चयः । आत्मनः सकाशान्महिमानं महामानम् ।

"जीवाद् गुणपरीमाणं यस्माद् विष्णोर्महत्तरम् । तस्माज्जीवात् स महिमा विष्णुरित्युच्यते श्रुतौ" इति च ।

ऐश्वर्यादेव "आसीनो दूरं व्रजति" इत्यादि–

---

१ "बृहत् (?) पृथग्भावे" इति धातुपाठ इति प्राचीनाः । २ "महावाराहे" ३ "न जायते न म्रियते च" ४ "प विष्णौ" इति प्र. पाठाः ।

शयानो याति सर्वतः। कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥७॥ अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥८॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥९॥ नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥१०॥ यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥११॥

॥*॥ इति षष्ठं ब्राह्मणम् ॥*॥

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः ॥१॥ यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्। अभयं तितीर्षतां पारं नाचिकेतं शकेमसि ॥२॥ आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव तु ॥३॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥४॥ यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा। तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥५॥ यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा। तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः॥६॥यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः। न स तत् पदमाप्नोति संसारं चाधिगच्छति ॥७॥ यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः। स तु तत् पदमाप्नोति यस्माद् भूयो न जायते ॥८॥ विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः। सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम् ॥९॥ इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धे-

---

"आसीनो दूरं ब्रजति[1] शयानो याति सर्वतः। ऐश्वर्याद् भगवान् विष्णुर्विरुद्धं घटयत्यसौ" इति च ॥*॥ "आत्माऽन्तरात्मेति विभुरेक एव द्विधा स्थितः। विष्णुः स परमे[2] वायौ परेभ्योऽप्यूर्द्धरूपके। शुभान् पिबति भोगान् स च्छायेव विदुषां प्रभुः। आतपः पापिनां नित्यं मर्यादा विष्णुयाजिनाम्। संसारस्य च पारस्थः स विष्णुर्द्विस्वरूपकः। देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः। सोमवित्तपसूर्याप्पा[3] अश्व्यग्नीन्द्रेन्द्रसूनवः। यमो दक्षश्चेन्द्रियेशाः सुपर्णी वारुणी तथा। उमेति चार्थमानिन्यस्तिस्रो द्विद्व्यैकदेवताः[4]। मनोऽभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु। ते श्रेष्ठा

---

१ "व्रजति" २ "स विष्णुः परमे" ३ "सूर्याप्याः" इति प्र. पाठाः। ४ "द्विद्व्येकदेवताः" इति प्र. पाठः। प्राचीनपाठस्यार्थः द्विः द्विवारं द्वौ एकश्चार्थे इति त्रिधा विभक्तानां पञ्चार्थानां तिस्रो देवता इति प्राचीनं टिप्पणम्।

रात्मा महान् परः ॥१०॥ महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥११॥ एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥१२॥ यच्छेद् वाङ् मनसी प्राज्ञस्तद् यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेच्छान्त आत्मनि ॥१३॥*॥ इति सप्तमं ब्राह्मणम् ॥*॥

उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत। क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति ॥१॥ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात् प्रमुच्यते ॥२॥ नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम्। उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥३॥ य इमं परमं गुह्यं श्रावयेद् ब्रह्मसंसदि। प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पत इति ॥४॥*॥ इत्यष्टमं ब्राह्मणम् ॥*॥

इति श्रीकाठकोपनिषदि प्रथमोऽध्यायः

---

पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्। कश्चिद् धीरः प्रत्यगात्मानमैच्छदावृत्तचक्षुरमृतत्वमिच्छन् ॥१॥ पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्। अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥२॥ येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्। एतेनैव विजानाति किमत्र परिशिष्यते एतद्वै तत् ॥३॥ स्वप्नान्तं जागरितान्तं

---

अर्थमानिभ्यस्तेभ्यो बुद्धिः सरस्वती। तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा। तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः। कश्चित् कुतश्चिच्छ्रेष्ठस्तु नास्तीति किमु सा कथा। तस्माद् वागात्मिका देवीरुमाद्यास्तु शिवादिषु। शिवादीन् ब्रह्मवाय्वोस्तु नियच्छेन्महदात्मनोः। तौ रमायां परानन्दे सा विष्णौ[1] परमात्मनि। तद्वशत्वेन तद्ध्यानं नियमो नाम नापरः। कुतस्तु मानुषो देवान् नियच्छेद् विनियामकान्[2] " ॥*॥ स्वभार्यायाः परत्वं सिद्धमिति महतः परमित्येवोक्तम्[3] ॥*॥

"तृणु कात्करणे" इति धातुः। इदं गुह्यं वक्ष्यामि[4]; यथा मरणं प्राप्य जीवो भवति तच्च वक्ष्यामि[5] जीवेश्वरभेदज्ञापनाय। यः कर्मफलभोक्ता सुप्त्यादिमान् स जीवः। यः प्रळयादिषु जीवेषु सुप्तेषु

---

१ "तां विष्णौ" इति प्र. पाठः। प्राचीनपाठे सा विष्णौ नियता नियन्तव्येति वा व्याख्येयम्। २ इतः परं प्र. पाठे "इति च" इत्यधिकम्। ३ इतः परं प्र. पाठे "इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीकाठकोपनिषद्भाष्ये प्रथमोऽध्यायः" इत्युपसंहारः पठ्यते। ४ "गुह्यं ब्रह्म प्रवक्ष्यामि" ५ "प्रवक्ष्यामि" इति प्र. पाठौ।

च उभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥४॥
य इमं मध्वदं वेदाऽत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो
विजुगुप्सते । एतद् वै तत् ॥५॥ यः पूर्वं तपसोऽजातमद्भ्यः पूर्वमजायत ।
गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत एतद् वै तत् ॥६॥ या प्राणेन
सम्भव[संविश]त्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत ।
एतद् वै तत् ॥७॥ अरण्योर्निहितो जातवेदा गर्भ इव निभृतो गर्भिणीभिः ।
दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥८॥ यतश्चोदेति सूर्योऽस्तं
यत्र च गच्छति । तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन । एतद् वै तत् ॥९॥
यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव

---

जागर्ति स विष्णुः परं ब्रह्मेत्यर्थः । नहि जीवस्य योन्यादिगमनं ब्रह्म । जीवाद् भेदेन ज्ञातं हि ब्रह्म यथावज्ज्ञातं भवति । जीवस्यान्तिके । नहि स्वस्य स्वयं जीवोऽन्तिके भवति । वस्त्वन्तरस्य हि दूरत्वमन्तिकत्वं वा ।

"अद्भ्यामभ्यश्च भूतेभ्यस्तपोनाम्नः शिवादपि । पूर्वं यो जनयामास पूर्वजातं चतुर्मुखम् । स्वात्मानं च गुहासंस्थं सर्वभूतैः सहाभिभूः । यः पश्यति सदा विष्णुः स एष हृदि संस्थितः " इति च ।

यथा "मुखादिन्द्रश्चाग्निश्च" इत्यादिना जाता एवेन्द्रादयः काश्यपात्[2] पुनर्जायन्ते न तथा भगवतो ब्रह्मा । किन्त्वजातमेवाद्भ्यः पूर्वमजायत जनयामास । अजायतेति "जज्ञे बहुज्ञम्" इतिवदन्तर्णीतणिच्[3] ।

"अदनाददितिर्विष्णुर्यः प्राणसहितः स्थितः । उत्तमो देवताभ्यश्च सोऽत्मानं विविधात्मना । मत्स्यकूर्मादिरूपेण गुहासंस्थमजीजनत् । भूतैः सह महाविष्णुः परमात्मा युगे युगे " इति च ।

देवतामयी देवतोत्तमः[4] । प्राणेन सह स्थितो भवति[5] । गुहां प्रविश्य तिष्ठन्ती[6] स्वात्मानं भूतैः सह विविधं जनयामास ।

"सर्वज्ञो भगवान् विष्णुररण्योर्गुरुशिष्ययोः । सुभृतः स्तूयते नित्यं जानद्भिः पुरुषोत्तमः" इति च ।

आर्यते रण आभ्यामित्यरणी[7] ।

"यः प्रादुर्भावगतो[8] विष्णुर्देहादिषु च संस्थितः । स एव मूलरूपश्च साक्षान्नारायणा-

---

१ प्राचीनकोशेषु "भेदेन ज्ञानम् (?)" इतीव पठ्यते । २ "कश्यपात्" इति प्र.पाठः । कश्यप एव काश्यपः । ३ "अन्तर्णीतणिच्" ४ "देवतोत्तमा" ५ "प्राणेन सहितो भवति" ६ "तिष्ठन्तं" इति प्र. पाठाः । ७ "अर्यते ण आभ्यामित्यरणी" इति प्र. पाठः । प्राचीनपाठे - आर्यत व्यचार्यत रणः आनन्दबलरूपः । रमित्यानन्दः । णकारो बलम् । ८ "प्रादुर्भावगो विष्णुः" इति प्र. पाठः ।

पश्यति ॥१०॥ मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥११॥ अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सत एतद् वै तत् ॥१२॥ अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद् वै तत् ॥१३॥ यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान् पृथक् पश्यंस्तानेवानु विधावति ॥१४॥ यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ॥१५॥*॥ इति प्रथमं ब्राह्मम् ॥*॥ पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय न शोचति विमुक्तश्च विमुच्यत

---

भिधः । मूलरूपश्च यो विष्णुः प्रादुर्भावादिकश्च सः । गुणतः स्वरूपतो वाऽपि विशेषं योऽत्र पश्यति । अत्यल्पमपि मृत्वा स तमोऽन्धं यात्यसंशयम् । भेदाभेदं चात्र तथा तमो याति न संशयः । तथैवावयवानां च गुणानां च परस्परम् । क्रियाणां तेन चैतेषां भेदविच्चोभयं विदुः । यान्त्येवान्धन्तमो नात्र कार्या काचिद् विचारणा " इति च । "भवेदेकत्र संयोग इवशब्दो विरुद्धयोः । धर्मयोरुपमायां वा स्वल्पत्वे चाविवक्षिते " इति शब्दनिर्णये ।

अतो नानेवेतीवशब्दो भेदाभेदविषयश्च । प्रथमं " य इह नानेव पश्यति " इति स्वरूपभेदनिषेधार्थम् । " नेह नानाऽस्ति किञ्चन " इति किञ्चनशब्दात् अवयवानां गुणानां क्रियाणां च परस्परं तद्वतां च भेदनिषेधार्थः । भेदाभेद एव निषिद्ध्यते नतु भेद इत्याशङ्कां निवर्तयितुं " एवं धर्मान् पृथक् पश्यन् " इति भगवद्धर्माणामवयवगुणकर्मणां भेददर्शने पृथग् दोषमाह । पर्वतेषु दुर्गे शिखरे वृष्टमधो विधावति । एवं विष्णोर्धर्मान् पृथक् पश्यन्नधोऽन्धं तमो विधावति । विजानतो मुनेरात्मा वायुरपि तादृगेव भवति । नतु स एव भवति । किम्वन्ये जीवाः ।

" सर्वेषां ज्ञानिनामात्मा देवानां च विशेषतः । मुक्तो वायुश्च सादृश्यमेव विष्णोस्तु गच्छति । नतु तद्रूपतां याति किम्वन्ये देवमानुषाः। आभासाभासरूपास्तु वायोर्देवस्य सर्वशः " इति भविष्यत्पर्वणि ॥*॥

इदं पुरं भगवदधीनमित्यनुष्ठाय । अजस्येदं पुरं स्थितमिति स्थितिं कृत्वा ।

" विमुक्तो निरभीमानात् पूर्वमेवापरोक्षवित् । मुख्यतो मुच्यते पश्चाद् दुःखाद्याभास-

---

१ "प्रादुर्भावादिगश्च" २ "भेदाभेदविदश्चात्र तमो यान्ति" ३ "उभयं विदः" इति प्र. पाठाः। ४ "स्वल्पत्वे वा विवक्षिते" इति प्र. पाठः। प्राचीनपाठेऽर्थो न स्फुटं प्रतीयते। अयं तु सम्भाव्यते-यत्राविवक्षितमप्युच्यते तदिवशिरस्कमुच्यत इति। यथा प्राज्ञ इव भाषते। अत्र हि विवक्षितमप्राज्ञत्वं प्राज्ञपदेनेवशिरस्केन बोध्यते। प्राज्ञपदस्य प्राज्ञत्वमविवक्षितोऽर्थं इतीवशब्दो वक्ति । नन्वियमुपमैव स्यात् । स्यादपि । उपमायाः सादृश्यगर्भत्वमस्य तु विरोधगर्भत्वमित्यान्तरो भेदः। ५ "निषेधार्थम्" ६ "निवारयितुम्" ७ विष्णोश्च धर्मान्" ८"पश्यन्नन्धन्तमः" ९ "अधिष्ठाय" १० "पुरमिति स्थितिं कृत्वा" इति प्र.पाठाः।

एतद् वै तत् ॥१॥ हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद् वरसदृतसद् व्योमसदब्जा गोजा अद्रिजा ऋतं बृहत् ॥२॥ ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वे देवा उपासते ॥३॥ अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः । देहाद् विमुच्यमानस्य किमत्र परिशिष्यत एतद् वै तत् ॥४॥ न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥५॥ हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा [च] मरणं प्राप्याऽऽत्मा भवति गौतम ॥६॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥७॥ य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः । तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते । ॥८॥ तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद् वै तत् ॥९॥ अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥१०॥ वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो

---

हानतः" इति च । "नित्यं हीनोऽखिलैर्दोषैः साररूपो यतो हरिः । हंस इत्युच्यते तस्माद् वायुस्थः शुचिषन्मतः[१] । वरसुर्वसुरित्युक्तः स एवाप्यन्तरिक्षगः । होता सश्चेन्द्रियादिस्थो[२] वेद्यां पूज्यश्च वेदिषत् । अत्यन्नंश्चातिथिः प्रोक्तो यस्माद्दन्नंथमुच्यते । स द्रोणकलशे सोमे स्थित उक्तो दुरोणसत् । नृषु स्थितश्च देवेषु वरेष्वपि स एव तु । ऋतरूपे तथा वेदे व्योमाख्यप्रकृतावपि । व्योतं जगदिदं यस्यां सा व्योम श्रीरुदाहृता । अब्जगोजाद्रिजेष्वेव आस्ते अब्जादिकस्ततः[३] । तथैवर्तेषु मुक्तेषु गतास्ते विष्णुमित्यृताः । वेदैर्मुख्यतया प्रोक्त ऋतमित्येव चोच्यते । बृहत् पूर्णगुणत्वाच्च स एव पुरुषोत्तमः । न केवलं प्राण एव चेतनानां विधारकः । किन्तु विष्णुं समाश्रित्य प्राणो जीवान् बिभर्त्ययम् । अतो मुख्याश्रयो विष्णुश्चेतनानां स्वतन्त्रतः । अग्निर्यथैको लोकेषु प्रविष्टोऽन्यो न विद्यते । पाकादिकर्ताऽथाप्यस्य देवस्य प्रतिरूपकाः[४] । रूपं रूपं प्रति ह्येते सन्त्यचेतनवह्नयः । एवं देवो वायुरपि धारकोऽन्यो न विद्यते । रूपं रूपं तथाऽप्यस्य प्रत्यभूत् पररूपकः । अचेतनः स्पर्शगम्यो योऽयमेव जनार्दनः[५] । एकः स्वतन्त्रो नान्योऽस्ति सर्वजीवान्तरस्थितः । रूपं रूपं प्रति ह्यस्य

---

१ "शुचिषत् स्मृतः" इति प्र.पाठः । २ "सर्वेन्द्रियादिस्थः" इति प्र. पाठः। प्राचीनपाठे 'स चेन्द्रियादिस्थ' इति वक्तव्ये सश्चेति यद्याकरणकं रूपमति मृग्यम् ! क्वचित् कोशे 'स चेन्द्रियादिस्थः' इत्यपि पठ्यते । सश्चेति पाठः "एषो ह्यात्माऽध्युद्गतो मानशक्तेः" इत्यादिवत् कथञ्चिदुपपादनीयः । ३ "एवमास्ते सोऽब्जादिकस्ततः" ४ "प्रतिरूपकः" ५ "योऽयमेवं जनार्दनः" इति प्र.पाठाः।

बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥११॥ सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥१२॥ एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥१३॥ इति द्वितीयं ब्राह्मणम् ॥*॥

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥१॥ तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्। कथं नु तद् विजानीयां किमु भाति न भाति वा ॥२॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति ॥३॥*॥ इति तृतीयं ब्राह्मणम् ॥*॥

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः। तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते॥१॥ तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन। एतद् वै तत् ॥२॥

---

प्रतिबिम्बाख्यचेतना[1]ः। बाह्याश्च ते ततो नास्य स्वरूपं ते कथञ्चन। अनादिप्रतिबिम्बाश्च बभूवुस्ते ह्यनन्तकाः। सूर्यो यथाऽऽन्तरश्चक्षुः[2] प्रतिबिम्बोऽस्य बाह्यकः[3]। बाह्यचक्षुर्गतैर्दोषैरन्तश्चक्षुर्न लिप्यते। अन्तश्चक्षुर्देवता तु बाह्यचक्षुरचेतनम्। एवं बाह्यः स्वतन्त्रत्वाज्जीवेभ्यः पुरुषोत्तमः। अस्वतन्त्रस्य जीवस्य दुःखैर्नैव हि लिप्यते। चेतनाभासको जीवः परमश्चेतनो हरिः। स्वतन्त्रत्वात् स्वतन्त्रो हि नैव दोषेण लिप्यते" इति महाकौर्मे[4]।

स एक एव सर्वभूतान्तरात्मा। तस्य रूपं रूपं प्रति प्रतिरूपाख्यो[5] जीवो बभूव। बहिश्चासौ परमात्मनः। नितरां भिन्नः। परतन्त्रत्वात्। "आत्मैवेदमग्र आसीत्" इत्यादिवदनादित्वापेक्षया।

"आत्मनि स्थं हरिं जानन् मुच्यते नात्र संशयः। जीवैक्येन तु तं जानंस्तमस्यन्धे[6] पतेद् ध्रुवम्" इति च।

एतदेव भगवद्रूपं परमं सुखम्। ज्ञानिसुखं तु तद्विप्लुण्मात्रम्।

"ब्रह्मादीनां च मुक्तानां सुखं विष्णुसुखस्य तु। प्रतिबिम्बस्तु विप्लुट्को विष्णोरेव परं सुखम्। सम्यग् भाति न भातीति जानीयां[7] तत् कथं न्वहम्। तत्प्रसादमृते दिव्यमनिर्देश्यं परं सुखम्" इति च महावराहे[8] ॥*॥ "सर्वोच्चो भगवान् विष्णुर्मूलं भूमिव-

---

१ "प्रतिबिम्बाश्च चेतनाः" प्र. पाठः। क्वचित् कोशे "प्रतिबिम्बास्य चेतनाः" (?) इति। २ "आन्तरं चक्षुः" ३ "बाह्यकम्" ४ "इति कौर्मे" ५ "रूपं रूपं प्रतिरूपाख्यः" ६ "ध्यायंस्तमस्यन्धे" इति प्र.पाठाः। ७ प्राचीनकोशेषु "जानीयात्" (?) इति पठ्यते। ८ "महावाराहे" इति प्र. पाठः।

यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम्। महद्भयं वज्रमुद्यतं य एतद् विदुरमृतास्ते भवन्ति ॥३॥ भयादस्याग्निस्तपति भयात् तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥४॥ इह चेदशकद् बोद्धुं प्राक्छरीरस्य विस्रसः। ततः स्वर्गेषु लोकेषु शरीरत्वाय कल्पते ॥५॥ यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके। यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥६॥ इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत्। पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥७॥ इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम्। सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥८॥ अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। तं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ॥९॥ न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम्। हृदा मनीषा मनसाऽभिक्लृप्तो य एवं विदुरमृतास्ते भवन्ति ॥१०॥ यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥११॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्। अप्रमत्तस्तदा भवति योगो हि

---

दस्य तु। जगदाख्यस्य वृक्षस्य शाखा देवास्ततोऽधमाः[१]। वृक्षमूलं रमादेवी सोऽश्व आशुगतो हरिः[२]। तद्व्याप्तत्वात् तदन्नत्वादश्वत्थोऽयं प्रकीर्तितः। प्रवाहतश्चाऽदितश्च[३] मुख्यतस्त्वमृतो हरिः। मुख्यामृतः स एवैको जगन्नित्यं प्रवाहतः। प्राणाख्ये तु गतौ[४] सर्वमेजत्यस्माच्च निःसृतम्[५]। वज्रवद् भयदं चैव स्वधर्मस्यातिलङ्घने। जीवे स्थितस्तु भगवान् दृश्यते ज्ञानदृष्टिभिः। आदर्शे मुखवत् सम्यङ् न तथा पितृलोकगः। ततः किञ्चित् स्पष्टतया गान्धर्वे दृश्यते हरिः। नात्यातपे न च्छायाया यथैवाहनि दृश्यते। स्पष्टं तथा ब्रह्मलोके दृश्यते पुरुषोत्तमः" इति च।

पुनरिन्द्रियेभ्यः परं मन इत्यादि देवतानां तारतम्यज्ञानपूर्वकं[६] भगवतः सर्वोत्तमत्वज्ञान एव सर्ववाक्यानां महातात्पर्यमिति ज्ञापयितुम्।

"तारतम्यपरिज्ञानपूर्वकं सर्वतो हरेः। आधिक्ये सर्ववाक्यानां तात्पर्यं महदिष्यते" इति च। प्रादुर्भाविष्वृते[७] विष्णुमिन्द्रियैर्नैव पश्यति। प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति। तदैव मुच्यते जीवो[८] न दुष्टैरिन्द्रियैः क्वचित्" इति च।

---

१ "ततोऽवमाः" २ "आशुगतेर्हरिः" ति प्र. पाठौ। ३ "प्रवाहतस्त्वनादिश्च" ति प्र. पाठः। प्राचीनपाठे आदितः आदिमत्वाद्धेतोः प्रवाहत एवायं सनातनः। न मुख्यतः। मुख्यतस्तु भगवानेवेति। ४ "प्राणाख्ये तु हरौ" इति प्र पाठः। प्राचीनपाठे गतौ निर्गतौ सृष्ट्यारम्भे चास्मान्निःसृतं सदेजतीति। ५ "अस्मात्तु निःसृतम्" ६ "देवतातारतम्यज्ञानपूर्वकम्" ७ "प्रादुर्भावानृते" ८ "मुच्यते योगी" इति प्र.पाठाः।

प्रभवाप्ययौ ॥१२॥ नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १३ ॥ अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥१४॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥१५॥ यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः । अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥१६॥ शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ् अन्या उत्क्रमणे भवन्ति ॥१७॥ अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥१८॥ मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्म प्राप्तो विरजोऽभूद् विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥१९॥*॥ इति चतुर्थं ब्राह्मणम् ॥*॥

इति श्रीकाठकोपनिषदि द्वितीयोऽध्यायः

---

समाप्ता चेयमुपनिषत्

---

प्रभवाप्ययौ प्रति योगः[1] । भगवतः सकाशात् प्रभवाप्ययौ ।

"अधिकः सतोऽयं भगवान् सर्वस्मादेव[2] केशवः । अस्तीतिनामकस्तस्माज्ज्ञातव्यः स तथैव च । अनाधिक्यं जानतां तु कथं स उपलभ्यते । प्रकृतेः पुरुषाणां च तत्त्वं भ्रामयैति[3] स्फुटम् । तत्त्वभावस्ततो विष्णुस्तत्प्रसादात्तु तस्य हि । आधिक्यं ज्ञायते सत् तत्प्रसादश्च[4] तथाविदः। अनादिकालादाधिक्यं सर्वस्माज्ज्ञानतो हरेः । पुनःपुनर्वृद्धिमेति तज्ज्ञानं हि भवे भवे । येषामाधिक्यविज्ञानं नैव पूर्वं हरेर्भवेत् । तेषां पश्चाच्च नैव स्यादभिभूतं तु तत् पुनः । व्यञ्जकाद् व्यक्तिमभ्येति तस्मात् तज्ज्ञानमुत्तमम्" इति च । "अन्तःकरणकामानां त्यागो व्यक्तिश्चिदात्मनाम् । कामानां तु तदा मुक्तो मृतिं नैवाथ[5] यास्यति । मिथ्याज्ञानग्रन्थिभिस्तु नितरां मुच्यते यदा । तदाऽमृतत्वमेवैति तदर्थं चानुशासनम् । शरीरभूतो विष्णोस्तु जीवस्तद्वशगो यतः । अधिष्ठितश्च तेनैव विजानीयात् पृथक् ततः । स्वाख्याच्छरीराज्जीवात्तु प्रवृहेद् विष्णुमव्ययम्" इति च ।

"यस्याऽत्मा शरीरम् । य आत्मानमन्तरो यमयति" इति च ।

"जनानां हृदये" इत्युक्तत्वाच्च जीवात् पृथग्घरिरिति सिद्धम् ।

---

१ "प्रति हि योगः" २ "सर्वस्मादपि" इति प्र.पाठौ । ३ "तत्त्वं भावयति" इति प्र. पाठः । प्राचीनपाठेऽपि स एवार्थः ।उत्पादनं हि भावनम् । सृष्ट्यादिना संसारे भ्रामयतीति च स एवार्थः । ४ "सत्त्वः प्रसादश्च" ५ "नैवाभिया स्यति" ति प्र. पाठौ ।

"देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि। जीवस्य स तु विज्ञेयो जीवाद् भेदेन मुक्तये" इति च।

संसारिशरीरेणाभेदो वादिनाऽपि केनचिन्नाङ्गीकृतम्[1]। नच लोकसिद्धो[2]। जनानामिति भेदात्। न जीवोऽङ्गुष्ठमात्रः। अतो जीवाद् भेद उक्तः[3]। अतः सर्वोत्तमो विष्णुरिति सिद्धम् ॥*॥

नमो भगवते तस्मै विष्णवे प्रभविष्णवे।
यस्याहमाप्त आप्तेभ्यो यो म आप्ततमः सदा॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
श्रीकाठकोपनिषद्भाष्यं
सम्पूर्णम्

---

१-२ "नाङ्गीकृतः। नच लोकसिद्धः" इति प्र. पाठः। स्वरसान्वयः। प्राचीनकोशेषु सर्वत्राप्येवं विलिङ्गः पाठः। संसारिशरीरेणाभेद इति केनापि वादिना नाङ्गीकृतम्। नचापीयं लोकसिद्धा वाचोयुक्तिरिति अभिदेति वा व्याख्येयम्।
३ "अतो विष्णोर्जीवाद्भेद उक्तः" इति प्र. पाठः।

# आथर्वणोपनिषद्भाष्यम्

ॐ॥ ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥१॥ अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥२॥ शौनको हवै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ। कस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥३॥ तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति। परा चापरा च ॥४॥ तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः। शीक्षा कल्पो व्याकरणं निरुक्तं

---

ॐ ॥ आनन्दमजरं नित्यमजमक्षयमच्युतम्।
अनन्तशक्तिं सर्वज्ञं नमस्ये पुरुषोत्तमम् ॥

"मनोर्वैवस्वतस्याऽदावथर्वा ब्रह्मणोऽजनि। मित्रश्च वरुणश्चाथो प्रहेतिर्हेतिरेव च। ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः सुतः[1]। सनकाद्यास्तु वाराहे ब्रह्मा विष्णोः सुतोऽग्रजः" इति ब्रह्माण्डे। "ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः। ता एव परमा विद्या यदा विष्णोस्तु वाचकाः" इति परमसंहितायाम्। "ऋग्भिर्होत्रेण[2] शंसन्ति तथौद्गात्रे[3] स्तुवन्ति ये। विष्णवे च तथा[4] तस्मै यजुर्भिरपि जुह्वति। स्तुवन्त्याथर्वणैश्चैनं सेतिहासपुराणकैः। न विष्णुसदृशं किञ्चित् परमं वाऽपि[5] मन्यते। सर्वोत्तमं तं जानन्तस्ते हि भागवतोत्तमाः", "वेदे रामायणे चैव पुराणे भारते तथा। आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते", "एतदन्ते च मध्ये च ब्रह्मैवोक्त्वा विजानताम्। ऋगादिपञ्चधा संस्थं शब्दब्रह्म प्रशाम्यति", "यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च। स्तुवन्ति सत्यकर्माणं सत्यं सत्येषु सामसु", "सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं सङ्ग्रहेण प्रवक्ष्ये", "वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाहम्" इत्यादि च भारते[6]। "चतुर्दश विद्यास्थानानि[7] वेदितव्यानि भवन्ति" इति च मूलश्रुतिः।

---

१ "प्रथमजः स्मृतः" इति प्र.पाठः। २ "हौत्रेण" इति प्र.पाठः। होत्रेणेत्यपि स एवार्थः। ३ "तथौद्गात्रैः" ४ "विष्णुमेव तथा" ५ "न विष्णोः सदृशं किञ्चित् परमं चापि" ६ "इति च भारते" ७ "महाविद्यास्थानानि" इति प्र. पाठः।

छन्दो ज्योतिषमिति ॥५॥ अथ परा यया तदक्षरमधिगम्यते । यत् तदद्रेश्यम-ग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम् ॥६॥ तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः ॥७॥ यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथाऽ-क्षरात् सम्भवतीह विश्वम् ॥८॥ तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।

"पञ्चरात्रमृगाद्याश्च सर्वमेकं पुराऽऽभवत् । मूलवेद इति ह्याख्या काले कृतयुगे तदा । नैवक्सामादिनामानि तदा वेदस्य चाभवन् । नैव चेन्द्रादिनामानि विष्णोरन्यत्र कुत्रचित् । ब्रह्मरुद्रेन्द्रपूर्वैस्तु नामभिः प्रोच्यते हरिः । देवतात्वेन चेज्यः स ब्रह्माद्या मनुनामकाः । वक्तृत्वेन पितृत्वेन कारित्वेनैव चाऽदरात् । इज्यन्ते देवताः सर्वा न तु देवतया क्वचित् । अनन्ययाजिनस्त्वेते[1] तस्मात् कार्तयुगा जनाः । प्राप्नुवन्ति हरिं तं च तस्माद् वेदे न किञ्चन । पारावर्यं हरेर्यस्मादुत्थितास्तुरगाननात् । ऋगाद्या अनुव्याख्यान्तास्तस्मात् सर्वैर्हरिं यजेत् । तस्माद् ब्रह्मादयः सर्वे मनवो मानवास्तथा । यजन्ति सर्ववेदैस्तं जानन्ति च विनिश्चयात् । अशक्तः पञ्चरात्रेण ऋगाद्यैर्वाऽथ तं यजेत् । ऋगाद्यैरेव सर्वत्र भिन्नैरिष्टो[2] जनैर्हरिः । द्वापरीयैर्जनैर्विष्णुः पञ्चरात्रैस्तु केवलैः । कलौ तु नाममात्रेण पूज्यते भगवान् हरिः । एको वेदः कृते ह्यासीत् त्रेतायां स त्रिधाऽभवत् । स एव पञ्चधा जातो द्वापरं प्राप्य वै युगम् । उत्सन्नः स कलिं प्राप्य वेदः प्रायेण सर्वशः । मुख्यो धर्मः कार्तयुगो वर्तितव्यः कलावपि । त्रेतादौ तदशक्त्या हि धर्मोऽन्यः सम्प्रवर्तितः[3] । कृते भागवताः सर्वे वेदाश्च पुरुषास्तथा । त्रेतायां भिन्नविषयास्ततस्त्रैविद्यतां गताः । तस्मादेकः सर्ववेदैर्ज्ञेयो विष्णुः सनातनः । पूज्यो यज्ञैः सोपचारैर्ध्येयो वन्द्यश्च सर्वदा" इत्यादि नारायणसंहितायाम् । "वेदवादाश्चानुयुगं ह्रसन्तीति हि नः श्रुतिः"[4] इति च भारते । "वेदैश्च पञ्चरात्रैश्च भक्त्या यज्ञैस्तथैव च । दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि" इत्यादि वाराहे ।

अत्रापि "तदेतत् सत्यम् । मन्त्रेषु कर्माणि कवयो यान्यपश्यन्" इत्यादिना कर्मविषयामपरविद्यामुक्त्वा "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इत्याद्यारभ्या[5]ऽथर्वणानेव

१ "अनन्ययाजिनस्ते तु" इति प्र.पाठः । २ ऋगाद्यैरेव स त्रैतैः" इति प्र. पाठः । प्राचीनपाठे स्वयमर्थः--सर्ववेदैस्तमेव यजन्तीति मूलयुगस्थितिः । त्रेतादिषु पाश्चात्येष्वपि युगेषु मूलधर्मानुष्ठाने तावदशक्तावपि पञ्चरात्रेण वा यजेत् । भिन्नैर्वा वेदैः प्रातिशाख्येन यजेत् । भिन्नैर्वेदैरिज्यत इति पाश्चात्येषु युगेषु सर्वत्राविशिष्टम् । तथाऽपि द्वापरे विशिष्य पञ्चरात्रेण । कलौ च विशिष्य नाममात्रेणेति । ३ "सम्प्रकीर्तितः" ४ "ह्रसन्तीति च नः श्रुतिः इति भारते" ५ "इत्यारभ्य" इति प्र. पाठाः।

अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥९॥ यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥१०॥
॥*॥इति प्रथमः खण्डः ॥*॥ प्रभानं

तदेतत् सत्यम्। मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि। तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके॥१॥ यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने। तदाऽऽज्यभागावन्तरेणाऽहुतीः प्रतिपादयेत् ॥२॥ यस्याग्निहोत्रमदर्शमपौर्णमासमनाग्रयणमतिथिवर्जितं चाहुतम्। अवैश्वदेवमविधिना हुतमा सप्तमांस्तस्य लोकान् हिनस्ति ॥३॥ काळी कराळी च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः ॥४॥ एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन्। तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥५॥ एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति। प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥६॥ प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति

---

मन्त्रान् परविद्यात्वेनाऽह। चातुर्वेदसंस्कारवतामेव च विद्यायामधिकार उक्तः— "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम्" इति। शिरोव्रतमित्युपलक्षणत्वेन।

"स्ववेदव्रतयुक्तस्य सर्ववेदगतास्वपि। अधिकारोऽस्ति विद्यासु नावेदव्रतिनः क्वचित्" इति व्याससमृतौ।

एतद् ब्रह्म चतुर्मुखः॥*॥ तदेतत् सत्यं भगवान्। तत्कामाः कर्माण्याचरथ। तदा साऽपि परविद्या। अन्यथा "प्लवा ह्येते अदृढा यज्ञरूपाः"। भगवद्विषयत्वेन कृते– "एष वः पुण्यः सुकृतो ब्रह्मलोकः"। परब्रह्मलोकः।

"निष्कामं ज्ञानपूर्वं च निवृत्तमिति चोच्यते। निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्" इति हि व्यासस्मृतिः। "स य आत्मानमेव लोकमुपास्ते न ह्यस्य कर्म क्षीयते" इति च श्रुतिः। "सहयज्ञाः प्रजाः सृष्ट्वा" इत्युक्त्वा "एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः। अघायुरिन्द्रियारामो मोघं पार्थ स जीवति" इति च। "यान्ति मद्याजिनोऽपि माम्" इतीति। "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। नतु मामभिजानन्ति

---

१ "चतुर्वेदसंस्कारवतामेव" २ "शिरोव्रतम्" ३ "ज्ञानपूर्वं यन्निवृत्तमिह चोच्यते" ४ "इति व्याससमृतौ" इति प्र. पाठः। ५ "इति च" इति प्र. पाठः। प्राचीनपाठे प्रतीकग्रहणायावान्तरार्थोपसंहरणाय च द्विरितिकरणम्।

मूढा जरामृत्युं ते पुनरेवापियन्ति ॥७॥ अविद्यायामन्तरे वेष्ट्यमानाः स्वयन्धीराः पण्डितम्मन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥८॥ अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः । यत् कर्मिणो न प्रवेदयन्ति रागात् तेनाऽतुराः क्षीणलोकाश्च्यवन्ते॥ ॥९॥ इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वाऽऽविशन्ति ॥ १० ॥ तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा ॥११॥ परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥१२॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् । तदेतत् सत्यम् ॥१३॥*॥ इति द्वितीयः खण्डः ॥*॥

---

तत्त्वेनातश्च्यवन्ति ते " इति च। " यस्त्वात्मरतिः " इत्युक्त्वाऽपि " कुर्याद् विद्वांस्तथाऽसक्तः " इत्येवोक्तत्वाच्च। " ये त्वेदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्। सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः" इति च। " लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ " इत्युक्तत्वाच्च नाऽश्रमान्तरविरोधः[1]।

त्रेतायां बहुधा सन्ततानि। कृते त्वेकप्रकारेणैव सन्ततानि।

" अग्निष्टोमादिभिर्यज्ञैः सर्वदेवस्थितं हरिम्। यजन्ति तांश्च कारित्वाद् वसुस्तस्मात् तथाऽयजत्। पृथक् पृथक् तु[2] त्रेतायां यजन्ते देवता गणाः[3]। यथा कृते तथा प्राज्ञास्त्रेतायां बहुधा ततः " इति पाद्मे। " यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः। यो देवानां देवतमो जनित्रं वायोस्तस्मै सोममेभ्यो जुहोमि ", " एवं वायोः पितरं विष्णुमेव यजन्ति देवैः सह ये कृते जनाः। एवं त्रेतायां केचिदन्ये पृथक् तानिष्ट्वा विष्णावर्पयन्ते नचान्ये " इति च ब्रह्माण्डे।

विष्णोः सर्वेभ्यः किञ्चिदुत्तमत्वं जानन्त इमं लोकमाविशन्ति। साम्यं हीनत्वं वा जानन्तो हीनतरं नामाऽविशन्ति[4]।

" देवेभ्य उत्तमं विष्णुं राजवद् यस्तु मन्यते। याजी स मानुषं याति साम्यहीनत्ववित् तमः " इति च। " त्रैविद्या माम् " इति तु—" येऽप्यन्यदेवताभक्ताः ", " तेऽपि

---

१ **"नात्राऽश्रमान्तरविरोधः"** २ **"पृथक् पृथक् च"** इति प्र.पाठौ। ३ **"देवतागणान्"** इति प्र. पाठः। गणानिति स्वरसप्रतीतिः। तथाऽपि पुरातनकोशेषु सर्वत्रापि 'गणाः' इत्येव पठ्यते इदमिह चैवं घटनीयम्। गणाः सङ्घपतिता जनाः देवताः पृथक् पृथग् यजन्ते। प्राज्ञास्तु यथा कृते तथा हरिमेवेति। ४ **"हीनतरं तम एव विशन्ति"** इति प्र.पाठः।

यथा सुदीप्तात् पावकाद् विष्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥१॥ दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ॥ ॥२॥ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥३॥ अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ॥४॥ तस्मादग्निः समिधो यस्य सूर्यः सोमात् पर्जन्यौषधयः पृथिव्याम् । पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ॥५॥ तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च । संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥६॥ तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि । प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥७॥ सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः । इमे लोका येषु चरन्ति प्राणा गुहाशयां निहिताः सप्त सप्त ॥८॥ अतः समुद्राः गिरयश्च सर्वेऽस्मात् स्यन्दन्ते सिन्धवः सर्वरूपाः । अतश्च सर्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥९॥ पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् । एतद् यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥१०॥*॥ इति तृतीयः खण्डः ॥*॥

इत्याथर्वणोपनिषदि प्रथमोऽध्यायः

---

मामेव कौन्तेय", "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च"[२] इत्युक्तत्वादज्ञानपूर्वयाजिनस्त्रैविद्याः॥*॥ "अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका। अक्षरं परमं श्रीस्तु परतः परमक्षरम्। वासुदेवः परानन्द इति त्रिविधमक्षरम्" इति च। "विष्णवङ्गानां हि नामानि द्युभ्वादीनि तु सर्वशः। क्रीडादिशक्तिरूपत्वात् तज्जत्वादन्यवस्तुषु" इति च। "वासुदेवः पुमान् नाम पूर्णत्वात् स स्वयोषिति। रमायां गर्भमदधात् प्रजास्तस्मात् प्रजज्ञिरे" इति च।

सप्तार्चिषः वृत्तयः। होमाः सम्बन्धाः। लोका गोळकाः[३]। गुहाशयां बुद्धौ। "लोपः समाने" इति सूत्रादेकयकारलोपः। प्रतिपुरुषं सप्त सप्त। भगवतः कर्म चेष्टा तपो ज्ञानं च परामृतब्रह्माख्यः[४]

---

१ इतः परं प्र. पाठे "यजन्ति" इत्यधिकम्। २"सर्वयज्ञानां भोक्तेत्युक्तत्वात्" इत्येवं प्र.पाठः ३ "गोलका इति प्र.पाठः। ४ प्राचीनकोशेषु सर्वत्र "परामृतब्रह्माख्याः पुरुषो भगवानेव" इत्येव पठ्यते। न ज्ञायते किं व्यपदेश्यव्यपदेशकयोरभेदव्यपदेशोऽयमाहो दीर्घः सम्पातायात इति।

आविः सन्निहितं गुहाचरं नाम महत् पदम् । अत्रैतत् सर्वमर्पितमेजत् प्राणन्निमिषच्च यत् ॥१॥ एतज्जानथ सदसद्वरेण्यं परं विज्ञानाद् यद् वरिष्ठं प्रजानाम् । यदर्चिमद् यदणुभ्योऽणु च यस्मिन् लोका निहिता लोकिनश्च ॥२॥ तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः । तदेतत् सत्यं तदमृतं तद् वेद्धव्यं सोम्य विद्धि । ॥३॥ धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत । आयम्य तद्भावगतेन चेतसा लक्षं तदेवाक्षरं सोम्य विद्धि ॥४॥ प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्षमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥५॥ यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो मुञ्चथामृतस्यैष सेतुः ॥६॥ अरा इव रथनाभौ संहता यत्र नाड्यः । स एषोऽन्तश्चरते बहुधा जायमानः ॥७॥ ओमित्येव ध्यायत आत्मानं स्वस्ति वः पाराय तमसः परस्तात् । यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ॥८॥ मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय । तद् विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति ॥९॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥१०॥ हिरण्मये परे कोशे विरजं ब्रह्म निष्कळम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः ॥११॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव

---

पुरुषो भगवानेव ।

"यैषा चेष्टा भगवतो यच्च ज्ञानं परात्मनः। तत् सर्वं भगवानेव ये च धर्मा बलादयः" इति च । " स्वाभाविकी ज्ञानबलक्रिया च " इति श्रुतिः ॥*॥

विज्ञानाद् ब्रह्मणः परम्—

"नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः" इति हि भागवते[1] । "प्राणः प्रणयनाद् विष्णुर्वक्तृत्वाद् वागुदीरितः । मनो मन्तृत्वतो विष्णुः सर्वजीवनियामकः" इति शब्दनिर्णये ।

अमृतस्य मुक्तस्य सेतुः—

"मुक्तोपसृप्यव्यपदेशात्", "मुक्तानां परमा गतिः" इत्यादेः । "हृदयस्थः सदा विष्णुर्बहुधा चैकधाऽभवत्[2] । चरति स्वेच्छयैवान्तः सर्वजीवान् नियामयन्" इति प्रवृत्ते ।

---

१ "इति भागवते" २ "बहुधा चैकधा भवन्" इति प्र. पाठौ ।

भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति ॥१२॥ ब्रह्मैवेदममृतं पुरस्तात् पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥१३॥*॥ इति प्रथमः खण्डः ॥*॥

इत्याथर्वणोपनिषदि द्वितीयोऽध्यायः

---

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥१॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः। ॥२॥ यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥३॥ प्राणो ह्येषः सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी । आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥४॥ सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥५॥ सत्यमेव जयति नानृतं सत्येन पन्था विततो देवयानः । येनाऽऽक्रमन्त्यृषयो ह्याप्तकामा यत्र तत् सत्यस्य परमं निधानम् ॥६॥ बृहच्च तद् दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्

---

"परा अप्यवरा यस्मात् स हि विष्णुः परावरः । ब्रह्माण्डमध्यगो नित्यं तपत्येष रवौ स्थितः" इति च ।

सूर्यादयस्तं न भासयन्ति । इदं ब्रह्मैव विश्वं पूर्णम् । इदमेव च वरिष्ठं[1] सर्वोत्तमम् । इदंशब्दानां बहुत्वाद् ब्रह्मविषय एवेदंशब्दः ॥*॥ स्वादुवत् सर्वदाऽत्ति । नत्वस्वाद्वेव[2] ।

"तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद् यः पितरं न वेद" इत्यज्ञानां स्वादुनिषेधात् । जीवाद्यमेव नाश्नाति भगवान् । नतु नाश्नात्येव । "तस्येदाहुः पिप्पलं स्वादु" इत्युक्तत्वात् ।

"स्वातन्त्र्येणैव भोक्तृत्वाद् दुःखाभोगाच्च सर्वदा । अभोक्ता चैव भोक्ता च भगवान् विष्णुरव्ययः" इति तत्त्वसारे[3] । "नास्तीशोऽस्या यतोऽन्यो हि ततोऽनीशा हरेर्मतिः । तया मुह्यति जीवस्तमन्यं ज्ञात्वा विमुच्यते । जीवादन्यः स्वतन्त्रो यो[4] यतोऽतः पुरुषोत्तमः" इति ब्रह्मसारे ।

पुण्यं चानिष्टं विधूय ।

---

१ "इदमेव वरिष्ठम्" इति प्र.पाठः। २ "नतु स्वाद्वेव" इति प्र. पाठः । प्राचीनपाठेऽयमर्थः- यथा भगवान् स्वाद्वेव भुङ्क्ते तथा जीवोऽस्वाद्वेव भुङ्क्त इति नास्ति । स्वादु च भुङ्क्ते । अस्वादु च भुङ्क्ते । इयान् विशेषः- यदस्वाद्वपि स्वादुवदेव भुङ्क्त इति । ३ "इति च तत्त्वसारे" ४"स्वतन्त्रोऽयं" इति प्र. पाठौ।

सूक्ष्मतरं विभाति। दूरात् सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥७॥ न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कळं ध्यायमानः ॥८॥ एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश। प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ॥९॥ यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्। तं तं लोकं जायते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः ॥१०॥*॥ इति प्रथमः खण्डः ॥*॥

इत्याथर्वणोपनिषदि तृतीयोऽध्यायः

---

स वेदैतत् परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम्। उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥१॥ कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र। पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः।

---

"सत्यो हि भगवान् विष्णुः सद्गुणत्वात् प्रकीर्तितः। असुरास्तद्विरुद्धत्वादनृताः परिकीर्तिताः। तस्य विष्णोर्निधानं तु वैकुण्ठो लोक उत्तमः" इति च।

सर्वगत्वात् दूरेऽन्तिके च[1]।

"नान्यैर्देवैर्हरिं पश्येज्ज्ञानरूपेण वायुना। ब्रह्मणा परमज्ञानरूपेण हरिणा तथा। प्रसन्नेनैव तं पश्येदन्येऽनुज्ञाप्रदायिनः" इति च।

षोडशकलाशरीरो न भवतीति निष्कळः[2]। "यदा पश्यः पश्यते रुग्मवर्णम्", "आनन्दरूपममृतं यद् विभाति" इत्युक्तत्वात् ॥*॥ स आत्मज्ञार्चको ब्रह्मणो धाम प्राणं वेद। यत्र विश्वं पूर्णं ब्रह्म निहितम्।

"प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तितः। उपायैर्यो विजानीयात् प्राणस्थं परमेश्वरम्। तस्य प्राणे हरिर्नित्यमाविष्टो भवति ध्रुवम्। नित्यं प्राणस्थितस्यैव[3] विष्णोरावेश एव हि। प्राणद्वारेण यज्ज्ञानदीपनं ज्ञानिनः सदा। सन्निधानं यथा प्राप्ताः पिशाचाः पुरुषेष्वपि। तत्र स्थित्वाऽपि भुञ्जन्त आविशेयुः पुनश्च ते। मन्त्रादिभिस्तथा विष्णुः सदा प्राणस्थितोऽपि सन्। ज्ञानदीप्त्यादिकं कुर्याज्ज्ञानिनः पुनरेव तु" इति च।

एतच्छुक्रं प्रत्यन्यदतिवर्तन्ते–

"सर्वं तीर्त्वा हरिं शुक्रं प्रति वृत्तिर्भवेत्[4] पुनः। ज्ञानिनः सा हि मुक्तिः स्यात् तन्नैवात्येति कश्चन" इति महावराहे[5]।

---

१ "तद् दूरेऽन्तिके च" २ "निष्कलः" ३ "प्राणे स्थितस्यैव" ४ "प्रतिवर्ती भवेत्" ५ "महावाराहे" इति प्र. पाठाः।

॥२॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥३॥ नायमात्मा बलहीनेन लभ्यो नच प्रसादात् तपसो वाऽप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥४॥ सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः । ते सर्वगं सर्वतः प्राप्य धीरा मुक्तात्मानः सर्वमेवापियन्ति ॥५॥ वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥६॥ गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥७॥ यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति नामरूपेऽविहाय । तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम् ॥८॥ स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव

---

सर्वतो देहादेर्मुक्ताः सन्तः सर्वं[1] भगवन्तं प्राप्य तमेवापियन्ति—

"देहादेः सर्वतो मुक्ताः सर्वगं पुरुषोत्तमम् । प्राप्य तस्मिन् प्रविश्याथ मोदन्तेऽन्तर्बहिस्तथा" इति च ।

ब्रह्मलोकेषु स्थित्वा परान्तकाले परिमुच्यन्ति ।

"अविरोधश्च सादृश्यादेकदेशस्थितिस्तथा[2] । एकीभावस्त्रिधा प्रोक्तो नैकीभावः स्वरूपयोः । कुतोऽभूतस्य भवनं स्वरूपस्यैक्यमेव हि । अतो नदीनां जीवानां विरुद्धानां नृणामपि । अब्धिना हरिणा चैव तथैव च नरान्तरैः । एकीभावस्तु संश्लेषो विरोधस्य च वर्जनम् । स्वरूपैक्यं कुतस्तेषां नित्यभिन्नस्वरूपिणाम् । हरेरपि स्वरूपाणामेकीभावो यदोच्यते । संश्लेष एव सिद्धत्वात् स्वरूपैक्यस्य नो भवः" इति च ।

गताः मुक्ताः[3] । प्राणादिपञ्चदशकलारूपदेवाः अन्ये च प्रतिदेवतासु[4] देवताप्रतिबिम्बभूतासु प्रजासु प्रति प्रति स्थिताः देवाः सर्वे कर्माणि च विज्ञानमयो जीवश्च[5] परमात्मनि प्रविशन्ति ।

"प्रतिबिम्बो हरेः प्राणस्तस्य चान्याः कलाः क्रमात् । कलानां देवता अन्या देवतानां नरा अपि । तस्मात् सर्वेऽपि[6] मुक्तेषु नरेष्वपि नियामकाः । तिष्ठन्ति नात्र सन्देहः परमात्मनि चाखिलाः" इति मुक्तिविवेके[7] । "कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं यतः ।

---

१ "मुक्ताः सर्वगं भगवन्तम्" इति प्र. पाठः । २ "सादृश्यमेकदेशस्थितिस्तथा" इति प्र. पाठः । प्राचीनपाठे त्वयमर्थः—मतौ सादृश्यादेकविषयकत्वरूपादविरोधरूप एकीभाव एकः । तथा स्थानसादृश्यादेकदेशस्थितिरूपोऽपरः । तथा ज्ञानानन्दादिस्वरूपधर्मसाधर्म्यादन्य इत्येकीभावस्त्रिधा प्रोक्त इति । ३ प्राचीनकोशेषु "गताः मम एताः"(?) इति पठ्यते । अर्थस्तु चिन्त्यः । ४ "प्राणादिपञ्चदशकलारूपा देवताः अन्ये च देवाः सर्वे प्रतिदेवतासु" ५ "प्रति प्रति स्थिताः कर्माणि विज्ञानमयो जीवश्च" ६ "सर्वेषु मुक्तेषु" ७ "मुक्तविवेके" इति प्र. पाठः ।

भवति। नास्याब्रह्मवित् कुले भवति ॥९॥ तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥१०॥ तदेष श्लोकः। क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षीन् श्रद्धयन्तः। तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम् ॥११॥ तदेतत् सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते। नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥१२॥

॥*॥ इति प्रथमः खण्डः ॥*॥

## इत्याथर्वणोपनिषदि चतुर्थोऽध्यायः

---

### समाप्ता चेयमुपनिषत्

---

कलाभ्यः पृथगुक्तं तत् पुष्करैः[1] कर्म चोच्यते" इति च[2]।

अन्यथा गता भविष्यन्तीत्यध्याहारो दोषः। नच मूलरूपाणि प्रतिदेवता इत्युच्यन्ते देवानाम्। प्रतिरूपशब्दवद्धि प्रतिदेवताशब्दः।

"विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र", "इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" इति[3]। "यथा सोम्येमाः समुद्रायणाः" इति नदीदृष्टान्तपूर्वकं पुरुषप्राप्तिकथनाच्च मुक्ता देवता[4] एवोच्यन्ते। "स प्राणमसृजत" इत्यादेश्च पुरुषो भगवान्। "अगम्यनामरूपत्वादमुक्तैर्मुक्तिगा नराः। विहीननामरूपास्तु नैतु[5] तद्रहितत्वतः। अशरीरो यथा वायुः सामान्यागम्यदेहतः। एवं नद्यः समुद्रस्थाः सामान्यागम्यरूपतः" इति च। "स्वकीयमुदकं नद्यः समुद्रे नैव जानते। वायुस्तु तत् पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति" इति च।

विमुक्त इत्यमुक्त इत्यर्थः। विप्रिय इतिवत्। अविहायेति च।

"अनन्तं वै नाम" इति च श्रुतिः[6]। "परं ब्रह्म विदित्वा तु बृंहिताच्च स्वयोग्यतः[7]। नायोग्यं किञ्चिदाप्नोति कुत एव हरेर्गुणान्" इति च। "ब्रह्मत्वं बृंहितत्वं स्याज्जीवानां न परात्मता। अस्वतन्त्रस्य जीवस्य कुतो नित्यस्वतन्त्रता" इति स्कान्दे। "यत्रामृतः स पुरुषो ह्यव्ययात्मा", "यत्र तत् सत्यस्य परमं निधानम्", "अमृतस्यैष सेतुः",

---

१ "पुष्करं कर्म चोच्यते" इति प्राचीनपाठः। अयमर्थः सम्भाव्यते--कर्मपदस्थाने क्वचित् पुष्करपदोपादानं च युज्यते। यतः पुष्करमिति कर्म चोच्यते। आपो हि पुष्करम्। "अपो मातरिश्वा दधाति" इत्यादेश्च कर्मवाचिता। [illegible]ः कर्म पुष्करमित्युच्यते। कर्मदेवता च पुष्कर इत्युच्यते। २ प्र. पाठेऽत्र चकारः न पठ्यते। ३ प्र. पाठेऽत्र इतिशब्दो नास्ति। ४ "देवा एवोच्यन्ते" ५ "नहि तद्रहितत्वतः" ६ "श्रुतेः" इति प्र. पाठाः। ७ "बृंहितः स्यात् स्वयोग्यतः" इति प्र. पाठः। प्राचीनपाठे बृंहितादिति बृंहितत्वादित्यर्थः। क्वचित्तु "बृंहितत्वात् स्वयोग्यतः" इत्येव पठ्यते।

"शरवत् तन्मयो भवेत्", "ब्रह्म तल्लक्षमुच्यते"[1], "निरञ्जनः परमं साम्यमुपैति" इत्यादिना मुक्तस्य सर्वत्र भगवत्सकाशाद् भेदस्यैवोक्तत्वाच्च। "मुक्तोपसृप्यव्यपदेशात्", "जगद्व्यापारवर्जम्", "प्रकरणादसन्निहितत्वात्"[2] इत्यादिना भगवताऽपि सर्वत्र भेदस्यैव सूचितत्वात्। "न ते महित्वमन्वश्नुवन्ति","सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा"[3]," ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते। तद् यत्स्वभावः कैवल्यं स भवान् केवलो हरे" इत्यादेश्च। "मुक्तेभ्योऽपि मनुष्येभ्यो देवा एव गुणाधिकाः। तेभ्यो वायुस्ततो विष्णुः परिपूर्णगुणः सदा। ये त्वेतदन्यथा विद्युस्ते हि यान्त्यधरं तमः। ये त्वेतदेवं जानन्ति ते यान्ति परमं हरिम्" इति च। "देवानां सन्ततौ जाताः प्रायशो ज्ञानिनः कृते। बलवद्धेतुतश्चात्र[4] यस्माद् ब्रह्मविदः सुराः। नासंस्ततो[5] ब्रह्मविदो नराणां ज्ञानिनामपि। प्रायशः स्युः सुराणां च नियमोऽयं कृते युगे। तस्मात् स भगवान् विष्णुर्ज्ञेयः सर्वोत्तमोत्तमः। सदा सर्वगुणैः पूर्णो योऽनन्तः पुरुषोत्तमः"[6] ॥*॥

प्रीयतां भगवान् मह्यं प्रेष्ठप्रेष्ठतमः सदा।
मम नित्यं नमाम्येनं परमोदारसद्गुणम् ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
आथर्वणोपनिषद्भाष्यं
सम्पूर्णम्

---

*

---

१ "लक्ष्यमुच्यते" इति प्र. पाठः। २ "प्रकरणादसन्निहितत्वाच्च" इति प्र. पाठः। सूत्रपाठोऽपि चकारगर्भ एव। मूले तु विचकारमेव सूत्रैकदेशप्रतीकमग्राहीति ग्राह्यम्। ३ "सह ब्रह्मणा विपश्चिता" ४ बलवद्धेतुतश्चान्ये" ५ "न सन्ततौ ब्रह्मविदः" इति प्र. पाठौ। ६ इतः परं प्र. पाठे "इति च" इत्यधिकम्।

# षट्प्रश्नोपनिषद्भाष्यम्

ॐ॥ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी गार्ग्यः कौसल्यश्चाऽश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनः। ते हैते ब्रह्मपरा ब्रह्मनिष्ठा ब्रह्मान्वेषमाणाः ॥१॥ एष ह वै तत् सर्वं वक्ष्यतीति। ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥२॥ तान् ह स ऋषिरुवाच। भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ ॥३॥ यथाकामं प्रश्नान् पृच्छत। यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥४॥ अथ कबन्धी कात्यायन उपेत्य पप्रच्छ भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति। तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत ॥५॥ स मिथुनमुत्पादयते रयिं च प्राणं चेति। एतौ मे बहुधा प्रजाः करिष्यत इति ॥६॥ आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः। रयिर्वा एतत् सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः ॥७॥ अथाऽदित्य उदयन् यत् प्राचीं दिशं प्रविशति। तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते ॥८॥ यद् दक्षिणां यत् प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत् सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते। स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते ॥९॥ तदेतदृचाऽभ्युक्तम्। विश्वरूपं

---

ॐ॥ नमो भगवते तस्मै प्राणादिप्रभविष्णवे।
अमन्दानन्दसान्द्राय वासुदेवाय वेधसे॥

"प्रजानां पालनाद् विष्णुः प्रजापतिरितीरितः। स वायुं सूर्यनामानं चन्द्रनाम्नीं सरस्वतीम्। सूर्याचन्द्रगतौ देवः ससर्ज पुरुषोत्तमः। तावाविश्य स्वयं विष्णुः सर्वसृष्टिं[1] करोत्यजः। अमूर्तस्थः स वायुस्तु मूर्तसंस्था सरस्वती। आदित्यस्थः स वायुस्थः[2] प्राणानात्मनि सन्नयेत्। प्राच्यप्राणास्तथेन्द्राद्या दक्षिणाश्च यमादयः। प्रतीच्या वरुणाद्यास्तु सोमाद्या उत्तराः स्मृताः। शेषमित्रावववाचीनौ वीन्द्रकामावुदक्नौ। सभार्याः

---

१ "सर्वसृष्टीः" २ "स वायुस्तु" ति प्र. पाठौ।

कृरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥१०॥*॥ इति प्रथमः खण्डः ॥*॥

संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च । तद् ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते ॥१॥ त एव पुनरावर्तन्ते । तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते ॥२॥ एष वै रयिर्यः पितृयाणोऽथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽदित्यमभिजयन्ते। एतद् वै प्राणानामायतनमेतदमृतमेतदभयमेतत् परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः ॥३॥ तदेष श्लोकः । पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् । अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षळर आहुरर्पितमिति ॥४॥*॥ इति द्वितीयः खण्डः ॥*॥

मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणः । तस्मादेते ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् ॥१॥ अहोरात्रे वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ॥२॥ ब्रह्मचर्यमेव तद् यद् रात्रौ रत्या संयुज्यते । अन्नं वै प्रजापतिस्ततो ह वै तद् रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥३॥ तद् ये ह वै तत् प्रजापतिव्रतं चरन्ति । ते मिथुनमुत्पादयन्ते ॥४॥ तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्। तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥५॥*॥ इति तृतीयः खण्डः ॥*॥

इति श्रीषट्प्रश्नोपनिषदि प्रथमोऽध्यायः

---

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजा विधारयन्ते कतर एतत् प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥१॥ तस्मै स होवाच ।

---

कोणपैः सार्धं चत्वारो दिशि दिश्यपि। संवत्सरस्थो भगवान् वागीरावयनस्थितौ। मासस्थितः स भगवान् पक्षयोर्वाक् च मारुतः। अहोरात्रे तु भगवान् प्राणोऽह्न्यथ च वाङ् निशि[1]। दम्पत्योर्भगवान् विष्णुर्भार्यास्था तु सरस्वती। भर्तृस्थः स स्वयं वायुरेवं जानन् विमुच्यते" इति प्रजापतिसंहितायाम् ॥*॥

---

१ "प्राणो ह्यहनि वाङ् निशि" इति प्र. पाठः।

आकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ् मनश्चक्षुः श्रोत्रं च ॥२॥ ते प्राकाश्या अभिवदन्ति । वयमेतद् बाणमवष्टभ्य विधारयाम इति ॥३॥ तान् वरिष्ठः प्राण उवाच। मा मोहमापद्यथ ॥४॥ अहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद् बाणमवष्टभ्य विधारयामीति । तेऽश्रद्दधाना बभूवुः ॥५॥ सोऽभिमानादूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामति । अथेतरे सर्व एवोत्क्रमन्ते ॥६॥ तस्मिंश्च प्रतिष्ठमाने । सर्व एव प्रतिष्ठन्ते ॥७॥ तद् यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रमन्ते । तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते ॥८॥ एवं वाङ् मनश्चक्षुः श्रोत्रं च । ते प्रीताः प्राणं स्तुवन्ति ॥९॥ एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष पृथिवी रयिर्देवः सदसच्चामृतं च यत् । अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् । ऋचो यजूंषि सामानि यज्ञाः क्षत्रं च ब्रह्म च ॥१०॥ प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे । तुभ्यं प्राण प्रजास्त्विमा यत् प्राणैः प्रतितिष्ठसि ॥११॥ देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा । ऋषीणां चरितं सत्यमथर्वाङ्गिरसामपि ॥१२॥ इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता। त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥१३॥ यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः । आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति । ॥१४॥ व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः । वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः ॥१५॥या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि । या मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥१६॥ प्राणस्यैतद् वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम् । मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥१७॥*॥ इति प्रथमः खण्डः ॥*॥

इति श्रीषट्प्रश्नोपनिषदि द्वितीयोऽध्यायः

---

अथ हैनं कौसल्य आश्वलायनः पप्रच्छ। भगवन् कुत एष प्राणो जायते ॥१॥ कथमायात्यस्मिञ्छरीरे। आत्मानं वा प्रविभज्य कथं प्रतिष्ठते ॥२॥ केनोत्क्रमते कथं बाह्यमभि धत्ते कथमध्यात्ममिति। तस्मै स होवाच ॥३॥ अतिप्रश्नान् पृच्छसि ब्रह्मिष्ठो भवसीति तस्मात् तेऽहं ब्रवीमि। आत्मत एष प्राणो जायते॥४॥

---

"वायुरग्निः" इत्यत्र भूतवायुः[1] । प्राणशब्देन प्रधानवायुः ॥*॥ आत्मतः परमात्मतः ।

---

१ "भूतवायुरुच्यते" इति प्र. पाठः ।

यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम् । मनोकृतेनाऽयात्यस्मिञ्छरीरे ॥५॥ यथा सम्राडेवाधिकृतान् विनियुङ्क्त एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेति । एवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते ॥६॥ पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते । मध्ये तु समान एष ह्येतद्धुतमन्नं समं नयति ॥७॥ तस्मादेताः सप्तार्चिषो भवन्ति । हृदि ह्येष आत्मा ॥८॥ अत्रैतदेकशतं नाडीनां तासां शतमेकैकस्यां द्वासप्ततिं द्वासप्ततिं प्रतिशाखानाडीसहस्राण्यासु व्यानश्चरति । अथैकयोर्ध्व उदानः पुण्येन पुण्यं पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥९॥ आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानस्तेजो हवा उदानः ॥१०॥ तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः । यच्चित्तस्तेनैष प्राणमायाति । प्राणस्तेजसा युक्तः सहाऽत्मना यथासङ्कल्पितं लोकं नयति य एवं विद्वान् प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति ॥११॥ तदेष श्लोकः । उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा । अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥१२॥*॥ इति प्रथमः खण्डः ॥*॥

इति श्रीषट्प्रश्नोपनिषदि तृतीयोऽध्यायः

---

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत् सुखं भवति ॥१॥ कस्मिन् सर्वे सम्प्रतिष्ठिता भवन्तीति । तस्मै स होवाच ॥२॥ यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति । ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै तत् सर्वं परे देवे मनस्येकीभवति ॥३॥ तेन तर्ह्येष

---

"विष्णोर्वायुः समुत्पन्नो वायोः सर्वाश्च देवताः । प्राणाद्यास्तान् नयन् प्राण आज्ञापयति राजवत् । स्वयं च पञ्चरूपः सन् दद्यान्मोक्षादिकं प्रभुः" इति प्रभञ्जने ॥*॥ "रश्मीनामविशेषेऽपि ह्यन्यदृष्ट्यपेक्षया । सूर्यस्य मण्डलं यान्तीत्युच्यन्ते तदृदर्शनात् । एवं विष्णोस्तु सामीप्याद् देवानां सुप्तिगस्य तु । व्यवहाराकरत्वाच्च एकीभाव ईर्येर्यते" इति च ।

---

१ "ह्यक्षदृष्ट्यपेक्षया" २ "एकीभाव इतीर्यते" इति प्र. पाठौ ।

पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽदत्ते नाऽनन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते। प्राणाग्नय एवैतस्मिन् पुरे जाग्रति गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद् गार्हपत्यात् प्रणीयते ॥४॥ प्रणयनादाहवनीयः प्राणो यदुच्छ्वासनिश्वासावेतावाहुती समं नयति स समानो मनो ह वाव यजमान इष्टफलमेवोदानः। स एनं यजमानमहरहर्ब्रह्म गमयत्यत्रैष देवः स्वप्ने महिमानमनुभवति ॥५॥ यद् दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति। दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥६॥ स यदा तेजसाऽभिभूतो भवत्यत्रैष देवः स्वप्नान् न पश्यति। अथ यदेतस्मिञ्छरीरे सुखं भवति ॥७॥ स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते। एवं ह वै तत् सर्वं परे आत्मनि सम्प्रतिष्ठते ॥८॥ पृथिवी च पृथिवीमात्रा च आपश्च आपोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा च आकाशश्च आकाशमात्रा च। चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसं च रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यं च हस्तौ च दातव्यं च पादौ च गन्तव्यं च पायुश्च विसर्जयितव्यं च उपस्थश्च आनन्दयितव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं च अहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च। ॥९॥ एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः। स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वं भवति ॥१०॥ तदेष श्लोकः। विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र। तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाऽविवेशेति ॥११॥*॥ इति प्रथमः खण्डः ॥*॥

इति श्रीषट्प्रश्नोपनिषदि चतुर्थोऽध्यायः

---

भगवतः शरीरवत् सादृश्ययुक्ते जीवे सुखं भवति। "कस्यैतत् सुखं भवति" इति पृष्टत्वात्। नह्यचेतनस्य शरीरस्य सुखं भवति।

"यस्याऽत्मा शरीरम्" इति च श्रुतिः। "सादृश्याद् देहवज्जीवो विष्णोस्तस्य सुखं भवेत्। सुप्तौ तस्य सुखार्थं हि भगवान् सुप्तिमानयेत्" इति च ॥*॥

अथ हैनं शैब्यः सत्यकामः पप्रच्छ । स यो ह वै तद् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति ॥१॥ तस्मै स होवाच । एतद् वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद् विद्वानेतेनैवायनेनैकतरमन्वेति ॥२॥ स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते ॥३॥ स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति । अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥४॥ यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते । एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् ॥५॥ स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते ॥६॥ तदेतौ श्लोकौ भवतः । तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः । क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥७॥ ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत् तत् कवयो वेदयन्ते । तमोङ्कारेणायनेनान्वेति विद्वान् यत् तच्छान्तमजरममृतमभयं परं चेति ॥८॥*॥ इति प्रथमः खण्डः ॥*॥

इति श्रीषट्प्रश्नोपनिषदि पञ्चमोऽध्यायः

---

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत। षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवम् । ॥१॥ नाहमिमं वेद यद्यहमिममवेदिष्यं कथं ते नावक्ष्यमिति । समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यहमनृतं वक्तुम् । स तूष्णीं रथमारुह्य प्रवव्राज ॥२॥ तं त्वा पृच्छामि क्वासौ पुरुष इति । तस्मै स होवाच ॥३॥ इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति । स ईक्षाञ्चक्रे ॥४॥ कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि । कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥५॥ स प्राणमसृजत । प्राणाच्छ्रद्धां खं

---

"प्रणवेन हरिं ध्यायन् ब्रह्मलोकं समेत्य च । ज्ञानं चतुर्मुखात् प्राप्य मुच्यते नात्र संशयः" ॥*॥

वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च ॥६॥ स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति । भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते ॥७॥ एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति ॥८॥

---

"कर्मेति पुष्करः प्रोक्त उषा नामाभिमानिनी । लोकाभिमानी पर्जन्यः स्वाहा वै मन्त्रदेवता । तपोऽभिमानी वह्निश्च वरुणो वीर्यदेवता । अन्नस्य देवता सोमो मनोनामाऽनिरुद्धकः । इन्द्रियेशाश्च सूर्याद्याश्चक्षुराद्यभिमानिनः । रुद्रो वीन्द्रः शेषकामौ मनसस्त्वेव देवताः। श्रद्धेति वायोः पत्नी स्यात् सर्वेषां प्रभवाप्यया। तस्याश्च कारणं प्राणः सर्वेषामुत्तमोत्तमः। तस्यापीशः कारणं च वासुदेवः परोऽव्ययः । न तस्य सदृशः कश्चित् कुत एवोत्तमो भवेत् । तं ज्ञात्वा मुच्यते जन्तुर्विदित्वैवं परावरम्[१]" इति तत्त्वविवेके । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी " (इति)[२] मन्त्रोक्त एव क्रमः ।

नहीन्द्रियेभ्यो मनः पश्चात् । "तत्प्राक्छ्रुतेश्च" इति च भगवद्वचनम्[३] ।

"विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः । तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता । ततश्च वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः । आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् । तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः । ततः पर्जन्य उद्भूतः स्वाहाऽतो मन्त्रदेवता । उदकात्मको बुधस्तस्या[४] उषा नामात्मिका[५] ततः । ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः । क्रमात् प्रत्यवरा एते मुक्ताः सर्वगुणैरपि । नित्यमुक्तस्तथा[६] विष्णुः प्राणादप्युत्तमोत्तमः " इति च ।

समुद्रे इत्येवं प्रोच्यते । पुरुषे इत्येवं प्रोच्यते । "भिद्येते तासां नामरूपे", "भिद्येते चासां नामरूपे" इत्युक्तत्वात् । अज्ञैरनवगतान्यपि समुद्रे स्थितानां नदीनां विष्णौ स्थितानां मुक्तानां च भिन्नान्येव नामरूपाणि सन्त्येवेत्यर्थः । नच भेदशब्दो नाशे प्रयुज्यमानः क्वचिद् दृष्टः[७] । घटादावपि बहुभाव एव भेदशब्दः प्रयुज्यते । नाशस्त्वर्थत एवावगम्यते । नचात्रार्थतोऽपि नाशोऽवगम्यते । नहि नामानि रूपाणि च कपालवद् बहुधाभूतानि तिष्ठन्ति । अतो भिद्येते[८] इति पृथक्त्वमेवोच्यते । "अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः " इति वाक्यशेषाच्च । अतः पुरुषे भिन्नानि[९] प्रतिष्ठितानीत्येवार्थः । अस्तगमनं त्वादित्यवदज्ञानामविज्ञेयत्वमेव ।

---

१ "परात् परम्" इति प्र.पाठः। २ प्राचीनकोशेषु इतिपदं न पठ्यते । ३ "इति भगवद्वचनम्" इति प्र.पाठः। ४ प्राचीनपाठेषु "बुधस्तस्य" इति पठ्यते। दीर्घस्य स्खलनं सम्भाव्यते। तस्य मन्त्रस्येति वा व्याख्येयम् । ५ "नामात्मिका" ६ "ततो विष्णुः" ७ "क्वापि दृष्टः" इति प्र. पाठाः । ८ प्राचीनकोशेषु "भिद्येतेति" [?] इति पठ्यते। ९ "भिन्नानि नामरूपाणि प्रतिष्ठितानि" इति प्र. पाठः।

तदेष श्लोकः । अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः । तं वेद्यं पुरुषं वेदयथा मा वो मृत्युः परिव्यथा इति ॥९॥ तान् होवाच । एतावदेवाहमेतत् परं ब्रह्म वेद नातः परमस्तीति । ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकम-विद्यायाः परं पारं तारयसीति ॥१०॥ नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥

॥*॥ इति प्रथमः खण्डः ॥*॥

इति श्रीषट्प्रश्नोपनिषदि षष्ठोऽध्यायः

---

समाप्ता चेयमुपनिषत्

---

"प्राणादयः कला यस्मिन् मुक्ता नित्यं प्रतिष्ठिताः । पृथक् पृथङ् नामरूपैर्नमस्तस्मै पराय ते" इति च सत्तत्त्वे[1] ।

"नामरूपाद् विमुक्तः" इत्यनेनापि नामरूपामुक्तत्वमुच्यते । विप्रिय इत्यादिवत् । नामरूपे अविहायेति च पूर्वत्र ।

"अनन्तं वै नामानन्ता विश्वे देवाः" इति नामरूपयोरनन्तत्वं हि श्रुतिर्वक्ति । "यत्र पूर्वे साध्याः सन्ति देवाः", "स तत्र पर्येति जक्षन् क्रीडन् रममाणः", "सोऽश्नुते सर्वान् कामान् त्सह ब्रह्मणा विपश्चिता", "ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु" इत्यादेश्च ।

अतः सर्वमुक्तेभ्योऽप्युत्तमोत्तमः परिपूर्णो नारायण इति सिद्धम् ॥*॥

नमो नमोऽस्तु हरये प्रेष्ठप्रेष्ठतमाय मे ।
परमानन्दसन्दोहसान्द्रानन्दवपुष्मते ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
श्रीषट्प्रश्नोपनिषद्भाष्यं
समाप्तम्

---

१ "इति सत्तत्त्वे" इति प्र. पाठः।

# याज्ञीयमन्त्रोपनिषद्भाष्यम्

ॐ॥ ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद् धनम् ॥१॥ कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥२॥ असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽत्महनो जनाः ॥३॥

---

ॐ ॥ नित्यानित्यजगद्धात्रे नित्याय ज्ञानमूर्तये।
पूर्णानन्दाय हरये सर्वयज्ञभुजे नमः॥

यस्माद् ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपिच।
ज्ञानस्फूर्तिः सदा तस्मै हरये गुरवे नमः॥

स्वायम्भुवो मनुरेतैर्मन्त्रैर्भगवन्तमाकूतिसूनुं यज्ञनामानं विष्णुं तुष्टाव—

"स्वायम्भुवः स्वदौहित्रं विष्णुं यज्ञाभिधं मनुः। ईशावास्यादिभिर्मन्त्रैस्तुष्टावावहितात्मना। रक्षोभिरुग्रैः सम्प्रातः खादितुं मोचितस्तदा। स्तोत्रं श्रुत्वैव यज्ञेन तान् हत्वाऽवध्यतां गतान्। प्रादाद्धि भगवांस्तेषामवध्यत्वं हरः प्रभुः। तैर्वध्यत्वं तथाऽन्येषामतः कोऽन्यो हरेः प्रभुः" इति ब्रह्माण्डे।

भागवते चायमर्थ एवोक्तः। ईशस्य वासयोग्यमीशावास्यम्। जगत्यां प्रकृतौ। तेन ईशेन त्यक्तेन दत्तेन भुञ्जीथाः।

"स्वतः प्रवृत्त्यशक्तत्वादीशावास्यमिदं जगत्। प्रवृत्तये प्रकृतिगं यस्मात् स प्रकृतीश्वरः। तदधीनप्रवृत्तित्वात् तदीयं सर्वमेव यत्। तद्दत्तेनैव भुञ्जीथा अतो नान्यं प्रयाचयेत्" इति ब्राह्मे ॥१॥

अकुर्वतः कर्म न लिप्यत इति नास्ति।

"अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः। ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद् ध्रुवम्। अतोऽलेपेऽपि लेपः स्यादतः कार्यैव सा सदा" इति नारदीये ॥२॥

सुष्ठु रमणविरुद्धत्वादसुराणां प्राप्यत्वाच्च असुर्याः।

"न खलु रमन्त्यहो असदुपासनयाऽऽत्महनः" इत्युक्तत्वात्। "महादुःखैकहेतुत्वात्

---

१ "अयमेवार्थ उक्तः" २ "ईशस्याऽवासयोग्यमीशावास्यम्" ३ "इति ब्रह्माण्डे" इति प्र. पाठाः।
४ "नच रमन्त्यहो" इति प्र.पाठः। यद्यपि भागवततात्पर्यतट्टीकादिसम्मतः पाठोऽयमेवेति भाति। वृत्तसुष्ठुत्वाय च नखल्वित्येव पाठः साधीयान् भवति। सप्तदशाक्षरं हि नर्कुटकम्।

अनेजदेकं मनसो जवीयो नैनद् देवा आप्नुवन् पूर्वमर्षत् । तद् धावतोऽन्यानत्येति तिष्ठत् तस्मिन्नपो मातरिश्वा दधाति ॥४॥ तदेजति तन्नैजति तद् दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः ॥५॥ यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति । सर्वभूतेषु चाऽत्मानं ततो न विजुगुप्सते ॥६॥ यस्मिन् सर्वाणि भूतानि आत्मैवाभूद् विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥ स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥८॥

---

प्राप्यत्वादसुरैस्तथा । असुर्या नाम ते लोकास्तान् यान्ति विमुखा हरौ " इति वामने । ये के चेत्यनेनैन नियम उक्तः—

"नियमेन तमो यान्ति सर्वेऽपि विमुखा हरेः" इति च ॥३॥ "अनेजन्निर्भयत्वात् तदेकं प्राधान्यतस्तथा । सम्यग् ज्ञातुमशक्यत्वादगम्यं तत् सुरैरपि । स्वयं तु सर्वानुगमात् पूर्वमेव स्वभावतः । अचिन्त्यशक्तितश्चैव सर्वगत्वाच्च तत् परम् । द्रवतोऽत्येति सन्तिष्ठत् तस्मिन् कर्माण्यधान्मरुत् । मारुत्येव यतश्चेष्टा सर्वा तां हरयेऽर्पयेत्" इति ब्रह्माण्डे । "ऋष ज्ञाने" ॥४॥

तदेजति तत एजत्यन्यत् । तत् स्वयं नेजति ।

"ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयम् । सर्वगत्वात् स दूरे च बाह्येऽन्तश्च समीपगः" इति तत्त्वसंहितायाम् ॥५॥ "सर्वगं परमात्मानं सर्वं च परमात्मनि । यः पश्येत् स भयाभावान्नाऽत्मानं गोप्तुमिच्छति" इति सौकरायणश्रुतिः ॥६॥

यस्मिन् परमात्मनि सर्वभूतानि स परमात्मैव तत्र सर्वभूतेष्वभूत् । एवं सर्वभूतेष्वेकत्वेन परमात्मानं विजानतः को मोहः ?

"यस्मिन् सर्वाणि भूतानि स आत्मा सर्वभूतगः । एवं सर्वत्र यो विष्णुं पश्येत् तस्य विजानतः । को मोहः कोऽथवा शोकः स विष्णुं पर्यगादतः" इति पिप्पलादशाखायाम् ।

पूर्वोक्तानुवादेन शोकमोहाभावो विजानतश्चात्रोच्यते । अभ्यासश्च सर्वगतत्वस्य तात्पर्यद्योतनार्थः ॥७॥

"शुक्रं तच्छोकराहित्यादव्रणं नित्यपूर्णतः । पावनत्वात् सदा शुद्धं अकायं लिङ्गवर्जनात् । स्थूलदेहस्य राहित्यादस्नाविरमुदाहृतम् । एवम्भूतोऽपि सार्वज्ञ्यात् कविरित्येव

---

१ "ये केचनेत्यनेन" इति प्राचीनः पाठः । तात्पर्यानुवाद इति वक्तव्यम् । २ "हरौ" ३ "सर्वानुगमत्" इति प्र. पाठौ । ४ प्राचीनपाठे "सन्तिष्ठन्" इति पठ्यते । अर्थौचित्यं मृग्यम् । ५ "तत एव एजत्यन्यत्" इति प्र.पाठः । ६ प्राचीनकोशेषु "दूरगत्वात्" (?) इति पठ्यते । ७ "पर्यगाद् यतः" ८ "शोकमोहाभावोऽपि विजानतश्चात्रोच्यते" ९ "अव्रणं" इति प्र. पाठः । १० "शुद्धमकायम्" इति प्र. पाठः । प्राचीनपाठे तु "एमम्भूतोऽपि सार्वज्ञ्यात् कविः" इति वक्ष्यमाणविशेषणैकान्वयद्योतनायात्र पुंलिङ्गप्रयोग इति व्याख्येयम् ।

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते। ततो भूय इव ते तमो य उ विद्यायां रताः ॥९॥ अन्यदेवाऽहुर्विद्यया अन्यदाहुरविद्यया। इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे ॥१०॥ विद्यां चाविद्यां च यस्तद् वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥११॥ अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते। ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥१२॥ अन्यदेवाऽहुः सम्भवादन्यदाहुरसम्भवात्। इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे ॥१३॥ सम्भूतिं च विनाशं च यस्तद् वेदोभयं सह। विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥१४॥*॥१॥*॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥१॥ पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्। समूह तेजो यत् ते रूपं

शब्द्यते। ब्रह्मादिसर्वमनसां प्रकृत्या मनसोऽपि च[1]। ईशितृत्वान्मनीषी स परिभूः सर्वतो वरः। सदाऽनन्याश्रयत्वाच्च स्वयम्भूः परिकीर्तितः। स सत्यं जगदेतादृङ्नित्यमेव प्रवाहतः। अनाद्यनन्तकालेषु प्रवाहैकप्रकारकम्[2]। नियमेनैव ससृजे भगवान् पुरुषोत्तमः। सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः। सज्ज्ञानानन्ददेहश्च सज्ज्ञानानन्दपादवान्। एवम्भूतो महाविष्णुर्यथार्थं[3] जगदीदृशम्। अनाद्यनन्तकालीनं ससर्जाऽत्मेच्छया प्रभुः" इति वाराहे॥८॥ "अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम्। ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः। तस्माद् यथास्वरूपं तु नारायणमनामयम्। अयथार्थस्य निन्दां च ये विदुस्ते हि सज्जनाः। ते निन्दयाऽयथार्थस्य दुःखाज्ञानादिरूपिणः। दुःखाज्ञानादिसन्तीर्णाः सुखज्ञानादिरूपिणः। यथार्थस्य परिज्ञानात् सुखज्ञानादिरूपताम्। यान्त्येव[4] सृष्टिकर्तृत्वं नाङ्गीकुर्वन्ति ये हरेः। तेऽपि यान्ति तमो घोरं तथा संहारकर्तृताम्। नाङ्गीकुर्वन्ति तेऽप्येवं तस्मात् सर्वगुणात्मकम्। सर्वकर्तारमीशेशं सर्वसंहारकारकम्[5]। यो वेद संहृतिज्ञानाद् देहबन्धाद् विमुच्यते। सुखज्ञानादिकर्तृत्वज्ञानं[6] तद्व्यक्तिमाव्रजेत्। सर्वदोषविनिर्मुक्तं गुणरूपं जनार्दनम्। जानीयान्न गुणानां च भागहानिं प्रकल्पयेत्। न मुक्तानामपि हरेः साम्यं विष्णोरभिन्नताम्। नैव प्रचिन्तयेत् तस्माद् ब्रह्मादेः साम्यमेव वा। मानुषादिविरिञ्चान्तं तारतम्यं विमुक्तिगम्। ततो विष्णोः परोत्कर्षं सम्यग् ज्ञात्वा विमुच्यते" इति कौर्मे ॥९-१४॥*॥ "पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतम्। विष्णोः सत्यस्य तेनैव सर्वदाऽपिहितं मुखम्। तत्तु पूर्णत्वतः पूषा विष्णुर्दर्शयति स्वयम्। सत्यधर्माय भक्ताय प्रधानज्ञान-

१ "प्रकृतेर्मनसोऽपि च" २ "प्रवाहैकप्रकारतः" ३ "ये विदुः सह" ४ "यान्त्येवं" ५ "सर्वसंहारकारणम्" इति प्र. पाठाः। ६ "कर्तृत्वज्ञानात्" इति प्र. पाठः। प्राचीनपाठे तु ज्ञानं तद्व्यक्तिं व्रजेत् व्राजयेत् प्रापयेदित्यन्तर्णीतणिच्।

कल्याणतमं तत् ते पश्यामि ॥२॥ योऽसावसौ पुरुषः सोऽहमस्मि । वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ॥३॥ ॐ क्रतो स्मर कृतं स्मर । ॐ क्रतो स्मर कृतं स्मर ॥४॥ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥५॥*॥२॥*॥

इति श्रीयाज्ञीयमन्त्रोपनिषत् समाप्ता

---

रूपतः । विष्णुरेकऋषिर्ज्ञेयो यमो नियमनाद्धरिः । सूर्यः स सूरिगम्यत्वात् प्रजापत्यः प्रजापतेः । विशेषेणैव गम्यत्वादहं चासावहेयतः। अस्मि नित्यास्तितामानात् सर्वजीवेषु संस्थितः । स्वयं तु सर्वजीवेभ्यो व्यतिरिक्तः परो हरिः । स क्रतुर्ज्ञानरूपत्वादग्निरङ्गप्रणेतृतः " इति ब्रह्माण्डे ।

सत्यं ब्रह्म हृदये धारयतीति सत्यधर्मा । एकोऽसौशब्दः प्राणे स्थित इति । यस्मिन् प्राणे स्थितः[1] सोऽप्यमृतः । किमु परः ? अः ब्रह्मैव निलयनं यस्य वायोः सोऽनिलम् ।

" अतिरोहितविज्ञानाद् वायुरप्यमृतः स्मृतः । मुख्यामृतः स्वयं रामः परमात्मा सनातनः " इति रामसंहितायाम् । " भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वं तु नैवान्यत् क्वचिदिष्यते " इति ब्रह्मतर्के ।

वयुनं ज्ञानम् । " यद्दत्तया[2] वयुनयेदमचष्ट विश्वम् " इति वचनात् । जुहुराणं अस्मानल्पं कुर्वेत्[3] । युयोधि वियोजय ।

" यदस्मान् कुरुतेऽत्यल्पांस्तदेनोऽस्मद् वियोजय । नय नो मोक्षवित्तायेत्यस्तौद् यज्ञं मनुः स्वराट् " इति स्कान्दे ।

" युयु वियोगे " इति धातुः । भक्तिज्ञानाभ्यां भूयिष्ठां नम इत्युक्तिं[4] विधेम ॥१-५॥*॥

पूर्णशक्तिचिदानन्दश्रीतेजः स्पष्टमूर्तये ।
ममात्यधिकमित्राय[5] नमो नारायणाय ते ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
याज्ञीयमन्त्रव्याख्यानं[6]
समाप्तम्

---

१ "यस्मिन्नयं स्थितः" इति प्र.पाठः । प्राचीनपाठे प्रथमतत्पदेन भगवान् । द्वितीयेन प्राण उच्यते । यस्मिन् सोऽपीति । प्राणे भगवान् स्थित इति भगवानेव प्राणस्य निलयनमाश्रय इति चार्थतोऽविशिष्टम् । यद्वा अस्य निलयनमिति विग्रहेण प्रथमव्याख्या । अः निलयनं यस्येति चार्थान्तरमुदितं भवति । २ "त्वद्दत्तया" इति प्र.पाठः । ३ "अल्पीकुर्वेत्" इति प्र. पाठः। प्राचीनपाठे अल्पमिति क्रियाविशेषणम् । ४ "नमउक्तिं" ५ "ममाभ्यधिकमित्राय" इति प्र.पाठौ । ६ ईशोपनिषदिति प्रसिद्धेयं शुक्लयजुर्वेदीयवाजसनेयशाखागता मन्त्रोपनिषद् यज्ञदेवताका । तेन याज्ञीयमन्त्रोपनिषदिति व्यपदिश्यते ।

# माण्डूकोपनिषद्भाष्यम्

ॐ॥ ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यदिति । सर्वमोङ्कार एव यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव ॥१॥ सर्वं ह्येतद् ब्रह्म । अयमात्मा ब्रह्म । सोऽयमात्मा चतुष्पात् ॥२॥ जागरितस्थानो बहिःप्रज्ञः । सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमः पादः ॥३॥ स्वप्नस्थानोऽन्तःप्रज्ञः। सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः॥४॥

---

ॐ ॥ पूर्णानन्दज्ञानशक्तिस्वरूपं नित्यमव्ययम् ।
चतुर्धा सर्वभोक्तारं वन्दे विष्णुं परं पदम् ॥

माण्डूकरूपिणा वरुणेन चतूरूपो नारायणः स्तूयते[1] ।

"ध्यायन्नारायणं देवं प्रणवेन समाहितः। मण्डूकरूपी वरुणस्तुष्टाव हरिमव्ययम्" इति पाद्मे । "ओमित्युक्तं तु यद् ब्रह्म तदक्षरमुदाहृतम्। ओतमत्र जगद् यस्मादों तस्माद् भगवान् हरिः। तदिदं गुणपूर्त्यैव सर्वमित्येव शब्दितम् । भाविभूतभवत्कालेष्वेकरूपतया हरिः। सर्वदा नित्य इत्येषा व्याख्योङ्कारस्य कीर्तिता" इति बृहत्संहितायाम् । "ओमित्याक्रियते यस्मादोङ्कारोऽसावतः परः। सर्वत्वमिति पूर्णत्वं तन्नान्यस्य हरेः क्वचित्" इति नैर्गुण्ये ।

सर्वमोङ्कार एवेत्यन्यस्य पूर्णत्वनिवारणम् । त्रिकालातीतत्वं च तस्यैव। प्रकृतेरपि त्रिकालातीतत्वं विद्यत इति अन्यदिति विशेषणम् ।

"परमं यो महद् ब्रह्म", "तदेव ब्रह्म परमं कवीनाम्", "पूर्णमदः पूर्णमिदम्" इत्यादिषु प्रसिद्धं च ब्रह्मणः परिपूर्णत्वमित्याह[2] – "सर्वं ह्येतद् ब्रह्म" इति ।

श्रीब्रह्मादिसकलदेहेषु स्थित्वाऽऽदानादिकर्ता योऽयं कश्चित् प्रतीयते; जीवानामस्वातन्त्र्यदर्शनात् सोऽपि स एवेति दर्शयति – "अयमात्मा ब्रह्म" इति ।

"पूर्णस्तु हरिरेवैको नान्यत् पूर्णं कदाचन । विना च प्रकृतिं नान्यत् कालातीतं परात्मनः। कालश्चैव दिशो वेदाः प्रकृत्यात्मान ईरिताः। अभिमानात्तु जीवानां न कालातीतता भवेत्। मुक्तानामपि पूर्वत्र कालसम्बन्ध ईरितः। पूर्णत्वं च सदा विष्णोः प्रसिद्धं सर्ववेदतः। सोऽयं विष्णू रमाब्रह्मरुद्रानन्तादिगः सदा। आदानादनकर्तृत्वादात्मा

---

१ "नारायणोऽत्र स्तूयते" २ "ब्रह्मणः पूर्णत्वमित्याह" इति प्र. पाठौ ।

यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽनन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥५॥ एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी। एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥६॥ अत्रैते श्लोका भवन्ति। बहिःप्रज्ञो

तेषामगोचरः। इति मण्डूकरूपी सन् ददर्श वरुणः स्वयम्" इति हरिवंशेषु। "चतुर्धाऽवस्थितो देहे परमात्मा सनातनः। वैश्वानरो जागरितस्थानगो गजवक्त्रकः। निर्माता बाह्यसंवित्तेर्जीवानां तदगोचरः। अष्टादशमुखान्यस्य पुमाकाराणि सर्वशः। मध्यमं तु गजाकारं चतुर्बाहुः परः पुमान्। पादौ हस्तिकरो हस्ता इति सप्ताङ्ग ईरितः। स्थूलान् भोगानिन्द्रियैः स शुभान् भुङ्क्ते नचाशुभान्। विश्वं स्थूलं समुद्दिष्टं सर्वगम्यत्वहेतुतः। तत्सम्बन्धी नरोऽनाशाद् वैश्वानर उदाहृतः। विनायकस्तु विश्वस्य ध्यानादैद् गजवक्त्रताम्। तथैव तैजसध्यानात् त्रिध्यानादिन्द्र इन्द्रताम्। चतुर्ध्यानाच्च रुद्रत्वं रुद्र आप जनार्दनात्। एवम्भूतगुणो विष्णुश्चतुरात्मा परात् परः" इति महायोगे। जाग्रद्दर्शनसंस्काररूपत्वात् स्वप्नगं तु यत्। प्रविविक्तं तु तज्ज्ञानकारणोऽन्तर्ज्ञ उच्यते" इति वाराहे। "सुषुप्तं तु तमो ज्ञेयं हरिं प्राप्य तदावृतः। न कामयेन्नैव पश्येज्जीवः स्वात्मतमो विना। कालं च तस्य स्थानस्य पतिः प्राज्ञो हरिः स्वयम्। चित्तस्थो दर्शयेद् यस्मात् तैजसः स्वप्नकृद्धरिः। न बाह्यं ज्ञापयेद् यस्मात् प्राज्ञस्तेन जनार्दनः। एकीभावं व्रजेतां च तेन विश्वश्च तैजसः। एकीभूतस्त्वतः प्राज्ञो घनो जीवस्तमोवृतः। तन्मात्रस्य सकालस्य घनप्रज्ञः प्रदर्शनात्" इति प्रकाशिकायाम्।

आनन्दमयः पूर्णानन्दः। चेतोमुखः ज्ञानस्वरूपमुखः। प्रज्ञानघन इति विपरीतसमासः। घनप्रज्ञ इति वक्ष्यमाणत्वात्। विषयं भोगं विनाऽऽनन्दमात्रभुक्त्वादानन्दभुगिति विशेषः। आनन्दमयचेतोमुखसर्वज्ञत्वसर्वेश्वरादिचतुष्टयेऽपि समः। अन्यत्रातिदेशार्थमेकत्राऽनन्दमयत्वं चेतोमुखत्वं चोक्तम्। एष चतूरूप आत्मा सर्वज्ञत्वसर्वेश्वरत्वादिलक्षणः।

१ वेदसम्प्रदायानभिज्ञाः केचिदाचक्षते—नैते मन्त्रा वैदिकाः। प्रत्युत गौडपादग्रथिताः कारिका एवेति। पूर्वाचार्यपरिगृहीतत्वादेवात्र प्रामाणिकानां चेतसि न किल संशीतिः पदं प्रसारयति। येऽपि तदनभिज्ञाः प्रज्ञावादमात्रप्रहरणाः केचिदर्वाञ्चः शाङ्कराः तेषामपि मुखं मुद्रयति ब्रह्मानन्दसरस्वती। तथाह्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां स किल "अनादिमायया सुप्तः" इत्यादिश्लोकानुदाहृत्य प्रत्यपीपदत्—"इति माण्डूकोपनिषद्व्याख्यारूपगौडपादाचार्यग्रन्थस्थप्रथमप्रकरणस्थश्लोकेभ्यः श्रुतित्वेन वैदिकप्रसिद्धेभ्यः—"इत्यादि। २ "वरुणः श्रुतिम्" इति प्र.पाठः। प्राचीनकोशेऽपि 'स्वयम्' इति विलिख्य परस्तात् हंसपादः कृतः। परन्तु न किमपि पाठान्तरमुल्लिखितम्। ३ "दर्शयेत् तस्मात्" ४ "एकीभूतस्तदा" इति प्र. पाठौ। ५ "आनन्दमयत्वचेतोमुखत्वसर्वज्ञत्वसर्वेश्वरत्वादिचतुष्टयेऽपि समम्" इति प्र. पाठः। प्राचीनपाठेऽयमर्थः—आनन्दमयत्वे चेतोमुखरूपसर्वज्ञत्वे एष सर्वेश्वर इत्यादिपादचतुष्टयोक्तधर्मचतुष्टये च विषये विश्वादिरूपचतुष्टयेऽपि भगवान् समः। विशेषणेषु भावप्रधानो निर्देशः। ज्ञानरूपोऽपि भगवान् विशेषबलाज्ज्ञातेति चेतोमुख इति सर्वज्ञ इति चोक्तम्।

विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः । घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः । ॥७॥ दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः । आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥८॥ विश्वो हि स्थूलभुङ् नित्यं तैजसः प्रविविक्तभुक् । आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत ॥९॥ स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् । आनन्दं च तथा प्राज्ञस्त्रिधा तृप्तिं विजानथ ॥१०॥ त्रिषु धामसु यद् भोज्यं भोक्ता यश्च प्रकीर्तितः । वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥११॥ प्रभवः सर्वभावानां सतामिति विनिश्चयः । सर्वं जनयति प्राणश्चेतोंऽशून्[1] पुरुषः पृथक् ॥१२॥ विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः। स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥१३॥ इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः । कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥१४॥ भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे । देवस्यैषः स्वभावोऽयमाप्तकामस्य का स्पृहेति ॥१५॥*॥ इति प्रथमः खण्डः ॥*॥

"परमात्मा चतूरूपः सर्वप्राणिशरीरगः । विश्वश्च तैजसः प्राज्ञस्तुरीयश्चेति कथ्यते। तानि रूपाणि सर्वाणि पूर्णानन्दमयानि तु । चेतोमुखानि सर्वाणि पूर्णज्ञानस्वरूपतः। मुखशब्दस्तु सर्वस्य देहस्याप्युपलक्षणः । तथाऽपि मुखशब्दोऽयं पूर्णत्वं सूचयेद् विभोः। ज्ञानस्य मुख्यवाचित्वान्मुखवाच्यपि सन् स्वतः" इति मार्कण्डेये । पूर्णानन्द-स्वरूपस्य क्रीडा भोगो नचान्यथा। यथाऽऽदित्यस्य दीपेन न विशेषोऽस्ति कश्चन" इति ब्रह्मतर्के। "प्रमाणस्य प्रमाणं च बलवद् विद्यते मुने । ब्रह्मदृष्टान् यतो मन्त्रान् प्रमाणं सलिलेश्वरः । अत्र श्लोका भवन्तीति चकारैव पृथक् पृथक्" इति गारुडे । खण्डचतुष्टये[2] ।

"प्रभवः सर्वभावानां विष्णुरेव न संशयः। इत्थं सतां निश्चयः स्यादन्यथा त्वसतां भवेत् । सर्वस्य हि प्रणेतृत्वात् प्राणो नारायणः परः । तां सृष्टिं बहुधा प्राहुर्ज्ञानिनोऽ-ज्ञानिनस्तथा। विष्णुर्विकृतिमायाति महदादिस्वरूपिणीम् । तत्तद्विविधभूतिस्तु सृष्टिः प्रोक्ता ह्यपण्डितैः । स्वप्नमायासरूपां[3] च केचिदज्ञा जना विदुः। अविकारस्य चिन्मात्र-स्वेच्छयैवाखिलं जगत् । उत्पद्यत इति प्राज्ञाः प्राहुर्ब्रह्मादयोऽखिलाः। पूर्णशक्तेः कुतो माया सार्वज्ञ्यात् स्वप्नवत् कुतः। सर्वदोषव्यतीतस्य विकारः कुत इष्यते। तस्मादेवा-विकारस्य विष्णोरिच्छावशादिदम्। यथार्थमेव सम्भूतमिति वेदवचोऽखिलम्। केचित् कालत एवैतां सृष्टिमाहुरकोविदाः। केचिद् रुद्राद् ब्रह्मणश्च प्रधानादिति

१ चेतोंऽशवश्चेतनरूपस्य विष्णोः प्रतिबिम्बभूतांशत्वाद् ब्रह्मादय उच्यन्त इति पूर्वाचार्याः। २ "**खण्डचतुष्टये पृथक् पृथक्**" इति प्र. पाठः। प्राचीनपाठे खण्डचतुष्टयेऽप्येवमेते ब्रह्मदृष्टा मन्त्रा एव। नतु यैःकैश्चिन्निबद्धाः कारिका इति। ३ "**स्वप्नमायास्वरूपाम्**" इति प्र. पाठः।

नान्तःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनम्। नप्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्य-[मग्राह्य]मलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥१॥ अत्रैते श्लोका भवन्ति। निवृत्तेः सर्व-दुःखानामीशानः प्रभुरव्ययः। अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः। ॥२॥ कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ। प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ॥३॥ नाऽत्मानं न परांश्चैव न सत्यं नापि चामृतम्। प्राज्ञः

चापरे। विमूढाः सर्व एवैते यतो नारायणः परः। सर्वकर्ता सर्वशक्तिरेक एव नचा-परः।[1] प्रधानकालब्रह्मेशमुखाः सर्वेऽपि तद्वशाः। तस्यापि विष्णोः सृष्टिं तु केचिदाहुर-नैपुणाः। अतृप्तस्यैव भोगार्थं क्रीडार्थं तु विपश्चितः। सा च क्रीडा स्वभावोऽस्य कुतोऽतृप्त्या स्पृहा विभोः" इति हरिवंशेषु ॥*॥ "विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः। मुक्तानां प्राप्यरूपोऽसौ व्यवहारे न दृश्यते। सम्यक् समाहितानां तु प्राप्तानां षोडशीं कलाम्। अपरोक्षदृशां क्वापि तुरीयं दृश्यते पदम्। अन्तर्बहिश्च सौप्तं च समाधिज्ञानमेव च। बहिः शब्दादिकं जानन् पश्यन् स्वप्नं तथैव च। यदा भवति साऽवस्था ह्युभयज्ञानशब्दिता। एतत् सर्वं तुरीयेण रूपेण न करोत्यजः। सर्वज्ञान-प्रदश्चापि मुक्तस्यैव तुरीयकः" इति ब्रह्माण्डे। "अमुक्तस्य त्वदृश्यत्वात् षोडशीं वा कलामृते। तुरीयोऽदृष्ट इत्युक्तो ग्रहणादेरगोचरः। विना मुक्तिं यतस्तेनाव्यवहार्य[2] इतीरितः। जाग्रदादिप्रवृत्तिस्तु लक्षणं ह्यनुमापकम्। अलक्षणस्तद्राहित्याद्[3]चिन्त्यस्तत एव च। तत एव ह्यनिर्देश्यश्चिदानन्दैकलक्षणः। मुक्तस्य सर्वव्यापारहेतुरेव तुरीयकः। एकः प्रधान उद्दिष्ट आत्मा पूर्णत्वतः श्रुतः। तदेवास्य स्वरूपं यदैकात्म्यं तेन कीर्तितः। प्रत्ययो ज्ञानरूपत्वात् सार आनन्दरूपतः। प्रपञ्चो विस्तृतेर्विष्णुः शम आनन्दरूपतः। उत्कृष्टानन्दरूपत्वादुपशब्दः प्रकीर्तितः। प्रपञ्चं देहबन्धाख्यं तुरीयः शमयेद् यतः। प्रपञ्चोपशमस्तेनाप्युक्तः स भगवान् प्रभुः। निर्दुःखसुखरूपत्वाच्छिवशब्दः श्रुतौ श्रुतः। अन्यथाप्रत्ययो द्वैतं शमयेत् तं यतो हरिः। अद्वैतस्तेन चोद्दिष्टस्तुरीयः पुरुषो-त्तमः" इति माहात्म्ये। "अपेक्ष्य वस्तुयाथार्थ्यं द्वित्वमन्यस्वरूपता।[4] इण् गताविति धातोश्च तज्ज्ञानं द्वैतमुच्यते" इति सङ्कल्पे।

"स आत्मा स विज्ञेयः" इति सोऽयमात्मा चतुष्पादिति चतुर्धा विभक्त उच्यते, उपसंहारा-र्थम्। "सोऽयमात्माऽध्यक्षरम्" इति पृथगारम्भात्।

"विश्वादिरूपो यस्त्वात्मा स विज्ञेयो मुमुक्षुभिः। निर्विशेषोऽपि भगवांश्चतुर्धा समुदीरितः" इति प्रत्यये।

१ "एक एव च नापरः" २ "ततस्तेनाव्यवहार्यः" इति प्र. पाठौ। ३ प्राचीनकोशेषु "अलक्षणं तद्राहित्यात्" इति भिन्नलिङ्गतया पठ्यते। ४ "आपेक्ष्यवस्तुयाथार्थ्यवित्त्वमन्यस्वरूपता" (?) इति प्राचीनकोशेषु पठ्यते। अर्थस्तु मृग्यः।

किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा ॥४॥ द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञ-तुर्ययोः । बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥५॥ स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया । न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥६॥ अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः । विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥७॥ अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते । अजमनिद्रमस्वप्न-

---

सर्वदुःखानां निवृत्तेः कारणभूतस्तुरीयो देवः ।

"हरिस्तुरीयरूपेण मोक्षदः सम्प्रकीर्तितः। देवः स सर्वजीवानां गम्यत्वात् समुदीरितः । भावा जीवाः समुद्दिष्टा भवन्त्येते यतो विभोः । ईशानामपि मुक्तानामीशानः सोऽननाच्छ्रुतः" इति प्रत्याहारे । "कार्यकारणबन्धस्य तदधीनत्वतो विभुः । विश्वादिरूपो भगवान् बद्ध इत्युच्यते श्रुतौ । कुतो बन्धः परस्यास्य बन्धेशस्य चिदात्मनः" इति च । "स बद्धः स दुःखी स बन्धयति स दुःखयतीति । स जीवः स प्रकृतिः[1] स जीवयति स प्रकरोतीति । सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति" इति कौषरवश्रुतिः । "विष्णोर्गुणोक्तिपरता मम नित्यं सुरेश्वराः । तदर्थमन्यद् वचनमतस्तस्य विरोधि यत् । तन्ममार्थो नहि क्वापि साऽहं तत्स्मरणात् सदा । सरस्वतीति सम्प्रोक्ता तस्माज्ज्ञेया गुणा हरेः[2]" इति महोपनिषदि । "नाऽत्मानं न परांश्चैव न सत्यं नापि चानृतम्[3] । प्राज्ञः संवेदयेत् किञ्चिज्जीवकालतमो विना । सुप्त्यवस्थां सुखं वाऽपि[4] विना नान्यत् प्रदर्शयेत् । सर्वं तु दर्शयेन्मुक्तौ तुरीयः परमेश्वरः" इति प्रत्यये । "स्वतन्त्रे कर्तृशब्दः स्यात् प्राज्ञस्यावेदनं यथा । सर्वप्रदर्शके चैव तुरीये सर्वदर्शनम्" इति ब्रह्मतर्के । "निद्रायुतास्तु विश्वाद्यास्तदधीना यतो हि सा । यथा भृत्ययुतः स्वामी नह्यज्ञानं परात्मनः" इति च । "अभेदमपि तद् ब्रह्म बहुरूपं विशेषतः । करोति न करोतीति व्यवहार्यं स्वशक्तितः" इति च ।

न संवेदयतीत्यस्वीकारे "तुर्यं तत् सर्वदृक् सदा", "द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः" इति च विरुद्धम् । द्वैतग्रहणाकारणत्वं तुल्यमित्यर्थः ।

"द्वैतं न ग्राहयेत् तुर्यो नच प्राज्ञः कथञ्चन । द्वैतग्रहणबीजं तु निद्रा प्राज्ञं समाश्रिता" इति प्रकटश्रुतिः ।

विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायते ॥*॥

"अनादिमायया विष्णोरिच्छया स्वापितो यदा । तया प्रबोधमायाति तदा विष्णुं प्रपश्यति" इति प्रकाशिकायाम् । "तन्वा स्वस्वामिसम्बन्धः प्रपञ्चोऽस्य शरीरिणः । वस्तुतोऽसौ नचैवास्ति परमस्य वशे यतः । तन्वादिकस्तथाऽप्येष ह्यभिमानात् प्रदृश्यते । अतः स विद्यत इति त्वङ्गीकारो[5] भवेद् यदि । तथाऽपि भगवज्ज्ञानात् स निवर्तेदसंशयम्[6]" इति ब्रह्मतर्के ।

---

१ प्राचीनकोशेषु "स प्रकृति" इति विसर्गरहितं पठ्यते । २ "हरेर्गुणाः" ३ "चापि नानृतम्" ४ "सुखं चापि" ५ "इति ह्यङ्गीकारः" ६ "निवर्तेदसंशयः" इति प्र. पाठाः ।

मद्वैतं बुद्ध्यते तदा ॥८॥ प्रपञ्चो यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥९॥ विकल्पो विनिवर्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यत इति ॥१०॥*॥ इति द्वितीयः खण्डः॥*॥

इति श्रीमाण्डूकोपनिषदि प्रथमोऽध्यायः

---

सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा अकार उकार मकार इति । जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा ॥१॥ आप्तेरादिमत्त्वाद् वा । आप्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद ॥२॥ स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा । उत्कर्षादुभयत्वाद् वा उत्कर्षति ह वै ज्ञानसन्ततिं

---

अद्वैतमनन्यथा ज्ञातं परब्रह्मादिवस्तु[1] । द्वैतं द्विधा ज्ञातमन्यथा ज्ञातमज्ञैः । परमार्थतः परमेश्वरात् । तस्यैव मायामात्रं तदिच्छया निर्मितम् । तदन्यथाज्ञानं तस्मात् तदिच्छयैव निवर्तते ।

"परेण ब्रह्मणा यत्तु द्विधा न ज्ञातमञ्जसा । तदद्वैतं परं ब्रह्म तदेव ज्ञातमन्यथा। जीवेन द्वैतमुद्दिष्टं मिथ्याज्ञानं तदेव च। परमार्थात् पराद् विष्णोर्जातमिच्छावशादनु । मायेतीच्छा समुद्दिष्टा मायामात्रं तदुद्भवम्। उत्तमत्वात् परार्थोऽसौ भगवान् विष्णुरव्ययः[2]" इति च ।

अनन्यथा इतमवगतमद्वैतम् । वस्तुस्वरूपापेक्षया द्विधा ह्यन्यथाज्ञानमित्यर्थः[3] । अतो विकल्पः शरीरादिसम्बन्धः केनचिदज्ञानादिना कारणेन कल्पितोऽप्युपदेशान्निवर्तते । अयं सतां वादः— ज्ञाते सति ब्रह्मणि[4] द्वैतमन्यथाज्ञानं निवर्तत इति ।

"विकल्पो देहबन्धादिः केनचित् कारणेन तु । कल्पितोऽपि निवर्तेत गुरुवाक्यादसंशयम्[5] । एष एव सतां वादो ज्ञाते ब्रह्मणि तत्त्वतः । निवर्ततेऽन्यथाज्ञानं तत आनन्दमेत्यसौ" इति च॥*॥

अधिकं सर्वेत अविनाशि[6] चेत्यध्यक्षरम् । अधिका एव मात्रा अंशा यस्य तदधिमात्रम् । अ इत्यनेनाभिधानेनाऽक्रियत इत्यकारः । तत्र पूर्वोक्तो वैश्वानरोऽकारः । प्रथमा मात्रेत्याद्यनुवादः[7] । अकार इत्यादिकं विधेयम् । प्राज्ञस्तैजसश्चाऽदिरस्येति आदिमान् । सुप्तेरुत्थाने प्राज्ञाद् विभक्तो भवति विश्वः । स्वप्नादुत्थाने तैजसात् । आदिश्चास्योपासकस्य भवति । शरीराभिमानादुत्थाप्य कर्षती-

---

१ "परब्रह्मादिवस्तु तत्" २ "विष्णुरच्युतः" इति प्र.पाठौ । ३ "अद्वैतम्" इत्यतः परम् "द्वैतं वस्तुस्वरूपापेक्षया द्विधा ह्यन्यथा ज्ञातमित्यर्थः" इति प्र. वाक्यपाठः । ४ "ज्ञाते सति परब्रह्मणि" ५ "कल्पितोऽ विनिवर्तेत गुरुवाक्यादसंशयः" इति प्र.पा ६ यद्यपि सर्वतोऽविनाशीति पठनीयम् । तथाऽपि हृषीकेशतीर्थादिभिः सर्वैरपि प्रमितैरेवमेव "सर्वेत अविनाशि" इति पाठः पठित इत्ययमादृतः । "शक्य अहमेवंविधः" इत्यादिभगवत्तमप्रयोगपरिपाटीमनुसरन् भगवत्पादोऽप्येवं प्रायुङ्क्तेति शक्यमभ्यूहितुम् । ७ "पूर्वोक्तो वैश्वानरः प्रथमा मात्रेत्याद्यनुवादः" इति प्र. पाठः ।

समानश्च भवति नास्याब्रह्मवित् कुले भवति य एवं वेद ॥३॥ सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा । मितेरपीतेर्वा । मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ॥४॥ अत्रैते श्लोका भवन्ति । विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् । मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥५॥ तैजसस्योत्वविज्ञान उत्कर्षो विद्यते स्फुटम् । मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ॥६॥ मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् । मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ॥७॥ त्रिषु धामसु यत् तुल्यं सामान्यं वेत्ति निश्चितः । स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥८॥ अकारो नयते विश्वमुकारश्चापि तैजसम् । मकारश्च पुनः प्राज्ञं नामात्रे विद्यतेऽगतिरिति ॥९॥*॥ इति प्रथमः खण्डः ॥*॥

---

त्युत्कर्षः। निद्रा विषयानुभवश्चानेन क्रियत इत्युभयत्वम् । समानः सर्वेषां मध्यस्थो भवति । मितेरन्तर्गमनात् ।

"अधिकत्वाच्च नित्यत्वादध्यक्षरमुदाहृतम्[1] । येऽशास्तस्य तु सर्वेऽपि पूर्णाः प्रत्येकशो विभोः[2] । अतोऽधिमात्रमुद्दिष्टो मात्रा अंशा उदाहृताः । श्रुतः स विष्णुरोङ्कार ओमित्याक्रियते यतः। आद्यस्तदंशो ह्याप्तिः स्याद् विषयानापयेद् यतः[3]। जीवस्य तु यतः प्राज्ञात् तैजसाद् वा समुत्थितिः[4]। अविभागोऽपि भगवानादिमांस्तेन कीर्तितः । तस्मादुत्पद्यते मुक्तस्तज्ज्ञान्यानन्दलक्षणः[5] । आप्नोति विषयान् सर्वान् निद्राया विषयस्य च । उभयोः कारणत्वेन ह्युभयस्तैजसः श्रुतः[6] । देहाभिमानादुद्धृत्य कर्षति स्वप्नमण्डले । उत्कर्षत्वं ततस्तस्य तज्ज्ञानी ज्ञाननित्यताम् । आप्नोति देहादुत्कृष्य स्वात्मानं सर्वमोक्षिणाम् । मध्यस्थश्च भवेत्[7] स्नेहाद् दोषाभावाच्च सर्वशः । स्वात्मन्यन्तर्गमयति मानमन्तर्गतिः स्मृता । जीवमन्तर्गतं कृत्वा तज्ज्ञानलयकृद् यतः । प्राज्ञो मानमपीतिश्च तज्ज्ञोऽप्येवं विमुक्तिगम्[8] । व्याप्यान्तर्गमयेत् सर्वं दुःखाद्यं च[9] विलापयेत्[10] । अणूनामपि जीवानां प्रकाशो व्यापको भवेत् । अण्डमात्रे बहिश्चापि देवतानां यथाक्रमम् । अतोऽन्तर्गमनं मुक्तौ जीवेषु जगतो भवेत्" इति ब्रह्मतर्के ॥*॥

मात्रासम्प्रतिपत्तौ अंशध्याने । आदिमत्त्वं विश्वस्य विद्यते । तदुपासकस्यापि भवतीत्यादिसामान्यम् । अमात्रेऽप्यगतिर्न विद्यते । प्रतिदिवसं विभाग एकीभावश्च विद्यते विश्वादीनाम् । तुरीयस्य तन्न विद्यत इत्यमात्रः । विश्वादीनां व्यवहारकारणत्वं विद्यते, तुरीयस्य तन्न विद्यत इत्यतो गम्यत्वमपि नास्तीत्याशङ्कां निवर्तयति–अगतिर्न विद्यत इति । आत्मानं संविशतीति

---

१ "अध्यक्षरमुदाहृतः" २ "प्रत्येकशः प्रभोः" इति प्र. पाठौ । ३ प्राचीनकोशेषु "आद्यास्तथा तदंशार्थान् विषयानापयेद् यतः" (?) इति पठ्यते । क्वचित्तु "आद्यस्तथा तदंशोऽर्थान्" इति पठ्यते। उभयमप्यस्फुटार्थम् । ४ "समुत्थितः" ५ "मुक्तः सज्ज्ञानानन्दलक्षणः" ६ "स्मृतः" ७ "मध्यस्थः स भवेत्" ८ "विमुक्तिगः। व्याप्त्याऽन्तर्गमयेत्" ९ "दुःखाद्यं तु" १० "निवारयति" इति प्र. पाठाः ।

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत ओङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद॥१॥ अत्रैते श्लोका भवन्ति। ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः। ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥२॥ युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम्। प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥३॥ प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः। अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥४॥ सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च। एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥५॥ प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम्। सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥६॥ अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः। ओङ्कारो विदितो येन स मुनिर्नेतरो जनः स मुनिर्नेतरो जन इति ॥७॥*॥ इति द्वितीयः खण्डः ॥*॥

इति श्रीमाण्डूकोपनिषदि द्वितीयोऽध्यायः

———

समाप्ता चेयमुपनिषत्

———

गतिवचनात्।

"आदिमत्त्वेन सामान्यमुपास्येन भवेदिति। उपासकस्य सज्ञानन् सर्ववन्द्यो भवेत् पुमान्। सामान्यत्रयमप्येतत् तुल्यं मुक्तिगतत्वतः। अमात्रत्वं तुरीयस्य त्वविभागाद् दिने दिने। जाग्रदादेरकर्ताऽपि गम्योऽसौ ज्ञानिनां भवेत्" इति च। "आदिमत्त्वादिसामान्यं तुल्यं मोक्षोपभोग्यतः। अमात्रत्वं तुरीयस्याप्यविभागो दिने दिने" इत्यात्मसंहितायाम्॥*॥

आत्मैव भूत्वाऽन्याभिमानं त्यक्त्वा परमात्मनैव परमात्मानं प्रविशत्युपासकः। अव्यवहार्यत्वादिकमत्र साम्यमिति दर्शयितुं पुनरप्युक्तमव्यवहार्यत्वादिकम्।

"तुरीयं नादनामानं हरिं ज्ञात्वा परं पदम्। तमेव प्रविशेच्छुद्धरूपी तत्सदृशात्मवान्। ज्ञानानन्दौ च शक्तिश्च तथाऽपि न समाः[3] क्वचित्। विमुक्तस्यापि जीवस्य पारतन्त्र्यं च नित्यदा। चतूरूपस्यास्य विष्णोर्नाम प्रणव इत्यपि। जाग्रदादिप्रणयनात् स एव ब्रह्म बृंहणात्। ओमित्याक्रियमाणत्वादोङ्कारः स प्रकीर्तितः। आदिमत्त्वादयो ह्यर्था

१ "अविभागाद् दिने दिने" २ "सममिति" इति प्र.पाठौ। ३ प्राचीनकोशेषु "न समः" इति पठ्यते। स्फुटं स्खलनम्।

ओमित्यस्य श्रुतौ श्रुतः। अपूर्वः कारणाभावान्नाशाभावादनन्तरः। पराधीनस्थित्यभावाद-नपर उदाहृतः। सर्वगत्वादबाह्यश्च तं ज्ञात्वा विप्रमुच्यते" इति च। "परत्वमपरत्वं च विष्णोरेकस्य वै यदा। श्रूयते नतु सामर्थ्यभेदस्तत्र कथञ्चन। अवतारस्य पूर्वत्वात् पौर्वापर्यमुदाहृतम्" इति ब्रह्मतर्के।

पूर्वावतारे पश्चिमावतारेऽपि पूर्ण एवेति प्रणवो ह्यपरं ब्रह्मेत्यादेरर्थः ॥*॥

एकोऽपि निर्विशेषोऽपि चतुर्धा व्यवहारभाक्।
यस्तं वन्दे सदानन्दं विष्णुं विश्वादिरूपिणम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
माण्डूकोपनिषद्भाष्यं
समाप्तम्

*

१-२ प्राचीनकोशेषु **"नाशाभावादनन्तकः। पराधीनस्थित्यभावादनन्तर उदाहृतः"** इति पठ्यते। अर्थौचित्यं तु चिन्त्यम्। ३ **"चिदात्मानम्"** इति प्र. पाठः। ४ इयमेव माण्डूक्योपनिषदिति चाथर्वणी व्यपदिश्यते। तथाच याज्ञीयमन्त्रः, बृहदारण्यकम्, तैत्तिरीयम्, काठकम् इति चतस्रो याजुष्यः। आथर्वणम्, षट्प्रश्नम्, माण्डूकं चेति तिस्र आथर्वण्यः। छन्दोगम्, तलवकारमिति द्वे सामीये। ऐतरेयमेकं बाहृचमिति दशोपनिषदः।

# श्रीतैत्तिरीयोपनिषद्भाष्यम्

ॐ॥ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव[1] प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद् वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ॥१॥ शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥२॥ स ह नौ यशः । स ह नौ ब्रह्म-वर्चसम् । अथातः संहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासंहिता इत्याचक्षते ।

---

ॐ ॥ सत्यं ज्ञानमनन्तमानन्दं ब्रह्म सर्वशक्त्येकम् ।
सर्वैर्देवैरीड्यं विष्ण्वाख्यं सर्वदैमि सुप्रेष्ठम् ॥

"आदित्यसंस्थिताद् विष्णोः श्रुत्वा ब्रह्मा यथा हरिम् । तुष्टाव तत्प्रकारेण वरुणोक्तेन वै भृगुः॥ विष्णुमस्तौत् तथा प्राह शन्नोमित्रादिका श्रुतिः॥ यदुवाच हरिः सूर्यमण्डलस्थः परः पुमान् । ब्रह्मा तदाह वरुणे वरुणो भृगवेऽपि तु । शन्नोमित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् । भृगुः पञ्चात्मकं पूर्णमन्नादिमयमच्युतम् । मुक्तगीतावसानैस्तु स्तुतस्तेन जनार्दनः॥ सुप्रीतः प्रददौ ज्ञानं स्वात्मभक्तिं च शाश्वतीम्" इत्यादि यजुःसंहितायाम् । "भृगुवाक्यतया वायुनमस्कारादिकं हरिः । प्रोवाच ब्रह्मणे चैवं वचः सुबहुदर्शिषु" इति च ।

वरणीयो वर्णः । स्वरतेः[2] स्वरः । मानात् मात्रा । बलरूपः । समश्च सर्वरूपेषु । सन्ततश्च ।

"वर्णादिवाचकं रूपं ज्ञेयं वर्णादिनामकम् । विष्णोर्वर्णादिसंस्थं च पुंसु तत्तत्क्रियाप्रदम् । नारायणादिरूपाणि लोकादिषु च पञ्चसु । अनिरुद्धावसानानि ध्येयानि चतुरात्मना ।

---

१ यद्यपि "त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि" इति वैदिकाः पठन्ति व्याचक्षते च । तथाऽपि श्रीहृषीकेशतीर्थादिभिः "त्वामेव" इत्येव पाठः पठितः । व्यासतीर्थीयव्याख्यानेऽप्येवं दृश्यते । तथा शाङ्करादिष्वपि "त्वामेव" इति पाठस्यैव परिग्रहणं स्फुटम् । २ "स्वरतेस्तु स्वरः" इति प्र. पाठः ।

अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः ॥३॥ वायुः सन्धानम् । इत्यधिलोकम् । अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् । अथाधिविद्यम् । आचार्यः पूर्वरूपम् ॥४॥ अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳ सन्धानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳ सन्धानम् । इत्यधिप्रजम् ॥५॥ अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्गेण लोकेन ॥६॥ यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय । आवहन्ती वितन्वाना ॥७॥ कुर्वाणा चीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमा वह । लोमशां पशुभिः सह स्वाहा । आ मा यन्तु ब्रह्मचारिणः स्वाहा । वि मा यन्तु ब्रह्मचारिणः स्वाहा । प्र मा यन्तु ब्रह्मचारिणः स्वाहा । दमा यन्तु ब्रह्मचारिणः स्वाहा । शमा यन्तु ब्रह्मचारिणः स्वाहा ॥ ८ ॥ यशो जनेऽसानि स्वाहा श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्र विशानि स्वाहा । स मा

---

वासुदेवादिकान्येव तानि पूर्वोत्तराण्ययोः। संहितायास्तथा सन्धौ सन्धाने चापि कृत्स्नशः। यो वेदैतानि रूपाणि सर्वभोगसमन्वितः। प्राप्नोति वैष्णवं स्थानं मुक्तः स्वर्गाभिधं परम्। यो विश्वरूपो भगवांश्छन्दसामधिपो हरिः। छन्दोभ्योऽमृतरूपेभ्यः सुव्यक्तस्तदुपासनात्। मेधावी तत्त्वविज्ञानी भूत्वा क्षिप्रं विमुच्यते " इति च। "वेदा-

---

१ यद्यपि वैदिकाः "सुवर्ग्येण" इति पाठं पठन्ति । तथाऽपि बहूनां भाष्यकाराणां तद्व्याख्यातॄणां च "सुवर्गेण" इत्येव पाठः सम्मत इति समादृतः ।

भग प्र विश स्वाहा। तस्मिन् सहस्रशाखे। नि भगाहं त्वयि मृजे स्वाहा। यथाऽऽपः प्रवता यन्ति। यथा मासा अहर्जरम्। एवं मां ब्रह्मचारिणः। धातरा यन्तु सर्वतः स्वाहा। प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥९॥ भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मैतां चतुर्थीम्। माहाचमस्यः प्र वेदयते। मह इति। तद् ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः। भूरिति वा अयं लोकः। भुव इत्यन्तरिक्षम्। सुवरित्यसौ लोकः ॥१०॥ मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते। भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः। मह इति चन्द्रमाः। चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते। भूरिति वा ऋचः। भुव इति सामानि। सुवरिति यजूꣳषि ॥११॥ मह इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा महीयन्ते। भूरिति वै प्राणः। भुव इत्यपानः। सुवरिति व्यानः। मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते। ता वा एताश्चतस्रश्चतुर्धा। चतस्र-

---

वासत्वतो विष्णुर्ब्रह्मकोश इति स्मृतः। भगः षड्गुणपूर्णत्वाद् बहुरूपत्वतो विभुः। सहस्रशाख इत्युक्तस्तमुपास्य जनार्दनम्। मुच्यते नात्र सन्देहः सर्वभोगैश्च युज्यते[1]" इति प्रक्लृप्ते। "आवहन्ती चिरं सर्वभोगान् या श्रीः सनातनी। तां मय्यावह गोविन्द सुशिखण्डोपशोभिताम्" इति च। "भूरादिव्याहृतीभिस्तु वाच्यं मूर्तिचतुष्टयम्। अनिरुद्धादिकं वासुदेवान्तं देहमध्यमः। वासुदेवो महोनामा त्वनिरुद्धः शिरो मतः। भूर्नामाऽथ भुवोनामा बाहू प्रद्युम्न ईरितः। सङ्कर्षणः सुवर्नामा पादौ तस्य महात्मनः। अनन्योऽप्यन्यशब्देन चतुरात्मा प्रकीर्त्यते। निर्विशेषोऽपि भगवान् सङ्ख्यामात्रविशेषतः। लोकज्योतिः प्राणवेदेष्वेकः स पुरुषोत्तमः। प्रत्येकशश्चातुरात्म्यात् षोडशात्मा प्रकीर्तितः। महीयते महति च स्वयं स भगवान् हरिः। पूज्यपूजकभेदोऽत्र नैव कश्चिद्पीष्यते। नामप्रवृत्तिहेतुत्वान्नाम लोकादिकं हरेः। अयं समीपस्थतया त्वसौ प्राणे स्थितत्वतः। ईक्षणादन्तरिक्षं चाथाऽदित्यस्त्वदितेः[2] सुतः। अग्निरङ्गे[3] स्थितत्वाच्च वायुर्वयति यज्जगत्। चन्द्र आह्लादरूपत्वादृगर्च्यत्वाज्जनार्दनः। यजुर्याज्यस्वरूपत्वात् साम चासौ समत्वतः। बृहत्त्वाद् ब्रह्म वेदानां समुदायेऽखिले स्थितः। तत्सम्बन्धाद् वेदराशिर्ब्रह्मशब्देन कीर्तितः। प्रकृष्टनयनात् प्राणोऽपानोऽवाङ्नयनाद्धरिः। विविधं

---

१ "पूज्यते" २ "आदित्यस्थोऽदितेः" ३ "अग्निरग्नौ" इति प्र. पाठाः।

श्वतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमा वहन्ति ॥१२॥ स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एष स्तन इवाव लम्बते । सेन्द्रयोनिः । यत्रासौ केशान्ते वि वर्तते । व्यपो ह्यशीर्षकपाले । भूरित्यग्नौ प्रति तिष्ठति । भुव इति वायौ ॥१३॥ सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत् ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मनआनन्दम् ।

---

नयनाद् व्यानः सोऽन्नं सर्वोपजीव्यतः । एवं षोडशरूपोऽसौ चतुरात्मा व्यवस्थितः। महाचमसनामाऽसौ यस्मादतिचमत्कृतिः। माहाचमस्यस्तज्ज्ञानी ब्रह्मा सम्परिकीर्तितः। एवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुखः । स एव ब्रह्मवित् तस्मात् पूज्यते मुक्तिगोऽपि सन् । सर्वदेवैरतितरां यः सम्यक् षोडशात्मवित्" इति व्याहृतितत्त्वे । "तस्य भूरिति शिरः एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे" इत्यादिश्रुतेः ।

सर्वव्याहृतीनां प्रवेत्ता माहाचमस्यश्चतुर्थीत्वेनैव[२] तां प्रवेदयत इति विशेषः ।

"भूर्नाम स्फूर्तिरूपत्वाद् भूरिवीर्यत्वतो भुवः । सुवः सुबलरूपत्वान्महः पूर्णत्वतो विभुः । तदेतच्चतुराकारं ब्रह्मोक्तं गुणबृंहणात् । स आत्मा सर्वदेवानां चतुरात्मा जनार्दनः । तस्य ब्रह्मादयो देवा अङ्गमागन्तुकत्वतः । वासुदेवादिरूपोऽसौ षोडशात्मा चतुश्चतुः । स एव सर्ववेदोक्तः सर्वविद्यासु चेश्वरः । प्रणवार्था व्याहृतयो व्याहृत्यर्था ऋगादयः । इतिहासपुराणं[३] च पञ्चरात्रं च सर्वशः । सम्यग् व्याहरणाद् विष्णोः श्रुता व्याहृतयस्त्विति । सर्ववेदोक्तसर्वस्वव्याहृतेर्व्याहृतित्वमु । विशेषेणाऽहरन्तीमं विष्णुमित्यथवा स्मृताः" इति व्याहृतिसारे । "य एष हृदयाकाशस्त्वनिरुद्धस्तु तद्गतः । प्रद्युम्नस्तालुमध्यस्थो लम्बिन्यामिन्द्रनामकः । व्याख्यः सुपर्णरूपत्वात् केशान्ते वर्तते तु यः । सङ्कर्षणः सुपर्णात्मा वासुदेवो व्यपः स्मृतः । यस्माद् व्यपगते स्थाता जगति प्रळये विभुः । अशीर्षकपालोऽसौ[४] कपालादुपरि स्थितः । अनिरुद्धस्तु भूर्नामा हुताशे संव्यवस्थितः । प्रद्युम्नो भगवान् वायौ भुव इत्येव कीर्तितः । सङ्कर्षणः सुवर्नामा सूर्ये तिष्ठति केशवः। महोनामा वासुदेवो ब्रह्मणि स्थश्चतुर्मुखे। स वासुदेवः स्वाराज्यं व्याप्यास्मिन् मनसस्पतौ । अनिरुद्धे च संव्यासस्ततो वागादिनां पतिः ।

---

१ "सुवरिति प्रतिष्ठे" २ "चतुर्थीत्वेनैतां" ३ "इतिहासः पुराणं च" ४ "अशीर्षककपालोऽसौ" इति प्र. पाठाः ।

शान्ति समृद्धममृतम् । इति प्राचीनयोग्योपास्व ॥ १४ ॥ पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म माꣳसꣳ स्नावास्थि मज्जा । एतदधि विधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति ॥१५॥ ओमिति ब्रह्म । ओमितीदꣳ सर्वम् । ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्या श्रावयन्ति । ओमिति सामानि गायन्ति । ओꣳ शोमिति शस्त्राणि शꣳसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्र सौति । ओमित्यग्निहोत्रमनु जानाति । ओमिति ब्राह्मणः प्र वक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ॥१६॥ ऋतं च स्वाध्यायप्रवचने च । सत्यं

---

वागादिषु स्थितो नित्यं भवत्येषं[1] जनार्दनः । स्वव्यापी च जगद्व्यापी नित्यैश्वर्यात् स ईश्वरः । आकाशवद् व्याप्तदेहः सत्यात्मा गुणपूर्तितः। वायोर्विशेषरमको बलानन्दस्वरूपवान् । ज्ञानानन्दस्वरूपोऽसौ शान्तिनामा सुखोन्नतेः। अन्तगत्वात् स्वतः पूर्तेः समृद्धं तत्प्रकीर्तितम् । इत्युपास्व प्राथमिको योग्यस्त्वं मदुपासने । प्राधान्यादिति पूर्वं हि प्राह विष्णुश्चतुर्मुखम् " इति ब्रह्मसारे । "पृथिव्याद्यं पाङ्क्तषट्कं पाङ्क्तेनैव स्वयं हरिः । नारायणादिरूपेण बलयत्यञ्जसा विभुः । इत्युवाच स्वयं विष्णुर्वेदद्रष्टा गुणाधिकः" इति तत्त्वसंहितायाम् ।

आत्मा अहङ्कारतत्त्वम् ।

"ओंनामा भगवान् विष्णुरधिकोच्चगुणत्वतः । यद्यद् रूपं भगवतस्तदिदं सर्वमेव च ओमेवाधिकपूर्णत्वात् तस्माद् यज्ञेषु चर्त्विजः । ओमित्येव स्वकर्माणि कुर्वन्त्युद्दिश्य केशवम् । अधिकोच्च शृणुष्वेति हरिमध्वर्युराह हि । अधिकोच्च महाधाम सूच्च देवेति[2] चाऽदरात् । प्रति प्रति गृणात्येनं शंरूपात्युच्च सावनं[3] । इत्याह होता शस्त्रेषु तथैवान्येऽपिचर्त्विजः। एवं स्वाध्यायकृत्वाऽह ब्रह्मप्राप्त्यर्थमञ्जसा । एवं जानन्त एते तु

---

१ "भवत्येव" इति प्र. पाठः । २ "ओ थामो देव" इति प्रतिगरमन्त्रः । थामेत्यस्यार्थः महाधामेति । "तृतीयोऽतिशये" इति हि पठन्ति । ३ "ॐ शों सावोम्" इति शस्त्रमन्त्रः। तत्र सावेत्यस्यार्थः सावनेति। सवो यज्ञः । तत्सम्बन्धित्वात्, इज्यमानत्वादिति यावत्, सावः । यद्यपि "शंरूपात्युच्चशावन" इति प्र. पाठः । तत्पक्षे "ॐ शों शावोम्" इति शस्त्रमन्त्रः। याजुषे भास्करभाष्ये तु "सावोम्" इत्येव मन्त्रपाठ उद्धृतः। स तु सावनेति प्राचीनभाष्यपाठसंवादी ।

च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रं च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषं च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः ॥१७॥ अहं वृक्षस्य रेरिवा कीर्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि। द्रविणꣳ सवर्चसम्। सुमेधा अमृतोक्षितः।

---

प्राप्नुवन्त्येव तत् परम्" इति च।

"ऋतं च स्वाध्यायप्रवचने च" कर्तव्यानि[1]। प्रवचनं व्याख्यानम्। यथार्थज्ञानमृतम्। तत्पूर्वकं यथार्थवचनं करणं च सत्यम्।

"ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका[2] कृतिः। ध्यानं सत्ये[3] पूज्यपूजा तप इत्यभिधीयते" इति शब्दनिर्णये।

सर्वकर्मकृतिकालेष्वपि स्वाध्यायप्रवचनयोः कर्तव्यत्वात् तयोः सर्वत्रानुषङ्गः।

"मन्त्रो मन्त्रार्थवचनमन्यस्य स्वात्मनोऽपि वा। सर्वकर्मसु कर्तव्यौ सर्वकर्मात्मकौ तत[4]ः" इति कर्मतत्त्वे।

आत्मनश्चेन्मनसैवार्थवचनम्।

"मानुषं मानुषो धर्मो देवा अपि हि मानुषे। मनुष्यवत् प्रवर्तन्ते नैवैश्वर्यप्रकाशिनः" इति च। "प्रजाया रक्षणं चैव पुनः प्रजननं तथा। प्रकृष्टजातिकरणं कर्मभिस्तनये पितुः" इति च। "सत्ये तपसि वा चीर्णे सर्वं[5] कर्म कृतं भवेत्। स्वाध्याये च प्रवचने ह्यन्तर्भावो विशेषतः" इति च। "यं यं क्रतुमधीते तेन तेनास्येष्टं भवति" इति च श्रुतिः। "जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः। कुर्यादन्यन्नवा कुर्यान्मैत्रो ब्राह्मण उच्यते" इति भारते। सम्यग् ज्ञात्वा तु यो विष्णुं व्याख्यायीत जपेत च। न तस्य किञ्चिदकृतं कर्तव्यं मुच्यते च सः" इति कर्मतत्त्वे। "संसारवृक्षच्छेत्ताऽहं मत्कीर्तिः पर्वतोपमा। अत्युत्कृष्टेन हरिणा पावितोऽस्मि यतः स्फुटम्। वाजिरूपश्च

---

१ प्राचीनकोशेषु "स्वाध्यायप्रवचने कर्तव्यानि" इति चकारहीनं पठ्यते। २ "तत्पूर्विका" इति प्र. पाठः। ३ "ध्यानसत्ये" इति प्र. पाठः। प्राचीनपाठे यथार्थवचनं करणं चेति द्विविधे अपि सत्ये विवक्षिते इति द्विवचनं व्याख्येयम्। ४ "यतः" ५ "सर्वकर्म कृतं" इति प्र. पाठौ।

इति त्रिशङ्कोर्वेदानुवचनम् ॥१८॥ वेदमनूच्याऽऽचार्योऽन्तेवासिनमनु शास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्र मदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यव च्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥१९॥ देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माकꣳ सुचरितानि। तानि त्वयोपास्यानि ॥२०॥ नो इतराणि। ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः। तेषां त्वयाऽऽसने न प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धया देयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ॥ २१ ॥ ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम् ॥२२॥ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्।

---

नेता च वाजिनी सूर्य उच्यते[1]। तत्रस्थो भगवान् विष्णुः सम्प्रोक्तो वाजिनीवसुः। तेनामृतोऽस्मि द्रविणं नित्यानन्दस्वरूपतः। तेनामृतेन सिक्तोऽहं तेन व्याप्तो यतः सदा। इत्याह मन्त्रदृक् पूर्वं त्रिशङ्कुर्मानवो नृपः" इति यजुर्विवेके।

संहितायाः पञ्चाधिकरणाभिमानित्वं प्राणादिरूपस्य वायोरपि भवति। पृथिव्यन्तरिक्षमित्युक्त-

---

१ "वाजिनीः सूर्य उच्यते" इति प्र. पाठः।

सत्यमवादिषम्। तन्मामावीत्। तद् वक्तारमावीत्। आवीन्माम्। आवीद् वक्तारम्। ॐ शान्तिः शान्तिः शान्तिः ॥*॥

इति श्रीतैत्तिरीयोपनिषदि प्रथमोऽध्यायः

---

ॐ॥ सह [स ह] नाववतु। सह [स ह] नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु [तेजस्विनावधीमस्तु] मा वि द्विषावहै। ॐ शान्तिः शान्तिः शान्तिः॥ ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान्त्सह। ब्रह्मणा विपश्चितेति। तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद् वायुः। वायोरग्निः। अग्नेरापः ॥१॥ अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात् पुरुषः। स वा एष पुरुषोऽन्नरसमयः। तस्येदमेव शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति ॥२॥ अन्नाद् वै प्रजाः प्र जायन्ते। याः काश्च पृथिवीꣳ श्रिताः। अथो अन्नेनैव जीवन्ति। अथैनदपि यन्त्यन्ततः। अन्नꣳ हि भूतानां ज्येष्ठम्। तस्मात् सर्वौषधमुच्यते। सर्वं वै तेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासते। अन्नꣳ हि भूतानां ज्येष्ठम्। तस्मात् सर्वौषधमुच्यते ॥३॥ अन्नाद् भूतानि

---

पाङ्क्तत्वं च। अत उपक्रमोपसंहारयोः "त्वामेवं[1] प्रत्यक्षं ब्रह्म वदिष्यामि", "त्वामेव प्रत्यक्षं ब्रह्मावादिषम्" इति युज्यते ॥*॥

"स्वयोग्यं ब्रह्मविद् भुङ्क्ते विरिञ्चेन परेण च। ब्रह्मणा सह तद्द्वयः सुखमेनेन्न[2] दुष्कृतम्" इति च। "य एष भगवान् विष्णुर्भूतस्रष्टा गुणाधिकः। स एवान्नात् पुनर्जातो ह्यजातोऽपि यतो विभुः। अन्नात्मनि शरीरेऽसौ व्यज्यते सुविवेकिभिः। अन्नस्य सारभूतोऽयं शरीरस्य च केशवः। अन्ननामा चान्नसंस्थः शरीरेषु च संस्थितः। अत्तृत्वात् सर्वलोकानामन्नमित्युच्यते हरिः। उपजीव्यश्च भूतानामिति वाऽन्नं[3] जनार्दनः। स ज्यायान् सर्वभूतेभ्यस्तस्मात् सर्वौषधं स्मृतम्[4]। संसारे दह्यमानानामाश्रयत्वात् स औषधम्। प्रचुरं मय इत्युक्तं प्रचुरात्ता यतो हरिः। प्रचुरैः सेव्यते नित्यमतोऽन्नमय

---

१ "त्वमेव" २ "सुखमेव न" ३ "इति चान्नं" ४ "स्मृतः" इति प्र.पाठाः।

जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति । तस्माद् वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥४॥ प्राणं देवा अनु प्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते । सर्वमेवत आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥५॥ तस्माद् वा एतस्मात् प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः। स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग् दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥६॥ यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदा-

---

ईरितः। देहस्यैव शिरस्यस्य शिरो विष्णोः प्रतिष्ठितम्। बाह्वोः पक्षौ तथा मध्ये मध्यं पश्चात्तनौ तथा। पुच्छमित्येष भगवाननिरुद्धः स्वयं हरिः। तस्याऽन्तरं परं रूपमभिन्नमपि भिन्नवत्। प्रद्युम्नाख्यं प्राणमयं प्रणेतृत्वात् प्रकीर्तितम्। शिरस्तस्य प्राणगतं प्राण इत्येव नामतः। व्यानाख्यो दक्षिणः पक्षो व्यानगश्चोत्तरस्तथा। अपानाख्योऽपानगत आकाशस्थं च मध्यमम्। आकाशाख्यं तथा पुच्छं पृथ्व्यां पृथिविनामकम्। उदान आकाशनामा समानः पृथिवीति च। प्रणेतृत्वात् प्राणनाम शिरो विष्णोः प्रकीर्तितम्। विशेषाच्चेष्टयेद् यस्माद् व्यानाख्यो दक्षिणः करः। यस्मादपनयेद् दोषानपानः सव्य उच्यते। आकाशस्त्ववकाशत्वान्मध्यदेहो महात्मनः। पृथिवी पुच्छमस्योक्तं सर्वस्यापि प्रधारणात्। स एष जगतामायुस्तस्मिन् सङ्कर्षणः स्थितः। शिरस्तस्य यजुर्नाम यज्ञानां भरणात्[1] स्मृतम्। यजुःसंस्थं च तद्बाहू[2] ऋक्सामान्तस्थितौ सदा। ऋगर्चनायाः स्वीकारात् साम दोषात् समीकृतेः। पञ्चरात्रगतं मध्यमादेशाख्यं सुविस्तृतेः। अथर्वाख्यं तथा पुच्छमधरं चाङ्गिनां रसः। मनोवाचामगम्यं तं ज्ञात्वाऽऽनन्दस्वरूपि-

---

१ "हरणात् स्मृतम्" २ "यजुःसंस्थं च बाहू तु" इति प्र.पाठौ।

चनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद् वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥७॥ विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद् वेद । तस्माच्चेन्न प्र माद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान्त्समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥८॥ तस्माद् वा एतस्माद् विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥९॥ असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद । सन्तमेनं ततो

---

णम् । कुतश्चिन्न बिभेत्येव वासुदेवोऽन्तरस्ततः । श्रद्धाख्यं श्रुतिधर्तृत्वाच्छ्रद्धायां तच्छिरः स्मृतम् । ऋतं ज्ञानततेर्दाता चर्तस्थो दक्षिणः करः । वामः सत्यस्थितः सत्यं सतां यस्मान्नियामकः । योगाख्यं सर्वलोकस्य योगादत्रैव योगगम् । मध्यं पुच्छं महोनाम महनीयत्वतः सदा । तस्मिन्नानन्दरूपोऽसौ स्थितो नारायणः सदा । शिरः प्रिये स्थितं तस्य परेयं प्रियनामकम् । मोदप्रमोदयोर्बाहू मोदनाच्च प्रमोदनात् । मोदप्रमोदनामानावानन्दश्चाऽततत्वतः । मध्यमानन्दसंस्थं च ब्रह्म सृष्ट्या तु बृंहयत्[१] । पुच्छं प्रधानवायौ च ब्रह्माख्ये संस्थितं सदा । अभेदोऽप्यविशेषोऽपि परमैश्वर्ययोगतः । देहदेहिवदेवासौ पञ्चधाऽवस्थितो हरिः । बहिस्थो देहवद् विष्णुरन्तस्थो देहिवत् स्मृतः । अन्तर्व्यातिविशेषेण न त्वशक्तत्वतो बहिः । सर्वेऽपि पुरुषाकारा उत्तरात् पूर्वसम्भवैः[२] । उत्तरैः पूरिताः पूर्वे निच्छिद्रत्वेन[३] सर्वशः । अत्तृत्वं च प्रणेतृत्वं बोधो विविधवेत्तृता । आनन्दश्च यतः पूर्णस्ततोऽन्नादिमयाः स्मृताः । अत्त्यादिदास्ते प्रत्येकं सर्वे सर्वगुणा अपि । नामभेदस्ततस्तूक्तः सर्वनामवतामपि । पञ्चरूपं तु[४] तद् ब्रह्म जीवादन्यन्न विद्यते । इति ये तु विजानन्ति तेऽसन्तस्तमआलयाः । जीवादन्यत्परं ब्रह्म पञ्चरूपं तु ये विदुः । सन्तस्त इति

---

१ "बृंहयेत्" इति प्र.पाठः । यद्यपि प्राचीनकोशेषु "बृंहयन्" इतीव प्रतीयते । तथाऽप्यन्वयस्वारस्यात् तत्त्वप्रदीपसंवादाच्च "बृंहयत्" इत्येव पाठ इति निश्चीयते । २ "पूर्वसम्भवाः" ३ "निश्छिद्रत्वेन" ४ "पञ्चरूपं च" इति प्र. पाठाः ।

विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य ॥१०॥ कश्चित् समश्नुता३ उ । सोऽकामयत । बहु स्यां प्र जायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद९ सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानु प्राविशत् । तदनु प्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च । तत् सत्यमित्या चक्षते । तदप्येष श्लोको भवति ॥११॥ असद् वा इदमग्र

---

विज्ञेया मोक्षयोग्या हि ते ध्रुवम् । इत्युक्ते ब्रह्मणा पूर्वं पप्रच्छ वरुणो विभुम् । अविद्वानपि यः कश्चिद् ब्रह्माऽप्नोति कथञ्चन । विद्वानेवोत तत्रापि सर्वे वाऽथैव केचन । यदि सर्वेऽथ तत्रापि सर्वे सम्यक् समाप्नुयुः । केचिदेवोत सम्यक् तदसम्यगपरे जनाः । ज्ञानिनोऽपीति पृष्टः सन् ब्रह्मा प्राह चतुर्मुखः । अज्ञा न प्राप्नुयुर्ब्रह्म प्राप्नुयुर्ज्ञानिनोऽखिलाः । तत्रापि सम्यक् प्राप्तिस्तु विरिञ्चस्यैव सर्वदा । अन्येषां तारतम्येन प्राप्तिः सुखविशेषतः । इत्यभिप्रायवान् ब्रह्मा ह्युकारेण समासतः । उक्त्वा प्रश्नोत्तरं पश्चाद् विस्तरेण जगाद ह । कश्चिदेवोत सम्यक् तदाप्नुयादिति वाक्यतः । अनन्तरं तथैवेति ब्रह्मोकारमुवाच ह । अज्ञो नैवैतदाप्नोति[1] ज्ञान्येवैतदवाप्नुते । इति ज्ञापयितुं विष्णोः स्वातन्त्र्यज्ञापनाय तु । आह सृष्टिं प्रवेशं च माहात्म्यज्ञानतो यतः । प्रीतिं यान्ति महान्तस्तु तद्वशा एव चेश्वराः । अग्न्यादयोऽपि किमुत तदन्ये मुक्तिदस्ततः । स एवैकः स विज्ञेयः पूर्णैश्वर्यादिरूपवान् । इति तस्य महैश्वर्यमुच्यते स त्वकामयत् । सृष्ट्वा जगदिदं सर्वं नियामकतयाऽस्य तु । बहुरूपो भवानीति स्याज्जगच्चेत्यचिन्तयत् । स्यादित्यालोचनान्नान्यत् तपो विष्णोः कदाचन । अवतारेष्वनुकृतिर्बाह्यवृत्त्या तपस्विनाम् । सृष्टिर्नाम स्वरूपात्तु बहिर्निष्क्रामणं[2] स्मृतम् । यद्यपीदं जगत् सर्वं स्वोदरस्थं महात्मनः । तथाऽप्येष द्वितीयेन रूपेण बहिराक्षिपेत् । रूपान्तरेणाऽविशच्च जगत् सर्वं जनार्दनः । त्यच्चानिरुक्तं विज्ञानं तथा निलयनं महान् । सत्यं प्राणस्तथा श्रीश्च सन्निरुक्तं तथाऽनृतम् । अविज्ञानं चानिलयनं प्रकृतिप्राणयोः परम् । तद्वविष्णोस्तु सम्बन्धात् स्वतस्तन्नामको हरिः । ततो नियामकश्चेति त्यदानन्त्याद्वाच्यतः । अनिरुक्तं निलयनं सर्वाधारत्वतो हरिः । विज्ञानं सर्वविज्ञानात् सत्यं साधुस्वरूपतः । अवसादसुवाच्यत्वदौर्बल्याज्ञप्त्यसाधुताः । प्रकृतिप्राणतोऽन्यत्र कुर्वंस्तन्नामको हरिः । अतः साधुस्वरूपः सन् सत्यनामाऽनृतादिकम् । नामानेन गतत्वादेर्यदिदं किञ्च

---

१ "नैव तदाप्नोति" २ "निष्क्रमणं" इति प्र. पाठौ ।

आसीत्। ततो वै सदजायत। तदात्मानꣳ स्वयमकुरुत। तस्मात् तत् सुकृतमुच्यत इति । यद् वै तत् सुकृतम्। रसो वै सः। रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति। को ह्येवान्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवाऽऽनन्दयाति। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुद-रमन्तरं कुरुते। अथ तस्य भयं भवति। तत् त्वेव भयं विदुषोऽमन्वानस्य। तदप्येष श्लोको भवति ॥ १२ ॥ भीषाऽस्माद् वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति।

---

भाषितम्। सन्निरुक्तादिशब्देन तत् सर्वं साधुतैव हि। अवसादनादिहेतुत्वं साधुतैव हि सर्वशः। असाधुताऽवसादादिस्तत्कर्तृत्वं हि भाषितम्। अनासाद्यस्त्वसन्नामा पूर्वं नारायणाभिधः। स आसाद्यश्च सन्नामा वासुदेवोऽभवत् प्रभुः। स वासुदेवः स्वात्मानं चक्रे सङ्कर्षणादिकम्। तस्मात् स सुकृतं नाम[1] स आनन्दो रसस्ततः। आनन्दमेनं सम्प्राप्य मुच्येदेव नचान्यथा[2]। आदीतस्त्वेष भगवान् यद्यानन्दो भवेन्नच। सामान्यचेष्टा धर्म्याश्च कस्य स्युस्तमृते प्रभुम्। सुखं लब्ध्वा हि कुरुते लोकचेष्टा[3] जनार्दनः। अल्पात् सुखादल्पकर्मा पूर्णानन्दाद्धि सर्वकृत्। नह्यार्ताः कर्म कुर्वन्ति मुग्धाश्चैव विशेषतः। तस्माद् यादृक् सुखं तादृक् कर्म पूर्णसुखस्ततः। सर्वकृत्त्वात् परो विष्णुराह तस्मात् सनातनी। सुखं लब्ध्वा करोतीति छन्दोगानां श्रुतिः परा। अलब्ध्वा तु सुखं नैव करोतीत्यपि सादरम्। तत् पूर्णानन्ददेवेन कारितः प्राणिति स्फुटम्। सर्वलोकः स एवैक आनन्दयति चाखिलम्। तस्माददृश्ये जैवानां गुणानामप्यसङ्गतेः। अनात्म्येऽथ गुणानन्त्यादनिरुक्ते निजाश्रयात्[4]। अनिलायनेऽभयत्वेन यदा ज्ञानेन तिष्ठति। तदाऽभयं हरिं गच्छेन्नैवाज्ञानी कथञ्चन। यदैतस्मिन् परे विष्णावुदरं जीवगत्वतः। भेदं करोति तेनैव भयमस्य महद् भवेत्। अ इत्युक्तः परो विष्णुर्यैभ्य उद्यः स एव तु। त उदा जीवसङ्घाः स्युरुदरं तद्गतान्तरम्[5]। तदेव ब्रह्म भयकृद् विदुषोऽविदुषस्ततः[6]। विदुषोऽल्पभयं कुर्याद् यावन्मुक्तिं व्रजत्यसौ[7]। अथाभयं भवेद् ब्रह्म तस्य मुक्तस्य सर्वदा। तस्माद् वाय्वादयो देवा विद्वांसोऽपि विशेषतः। भीताः

---

१ "तत् सुकृतं नाम" २ "मुक्तो मोदेन्नचान्यथा" ३ "लोकचेष्टां" इति प्र. पाठाः। ४ "निराश्रयात्। अनिलयने" इति प्र. पाठः। प्राचीनपाठेऽयमर्थः:—निजाश्रयात् स्वस्यैव स्वाश्रयत्वात् न विद्यते स्वतोऽन्यत् निलयनं तथा अकारवाच्यः स्वयमेव निलयनं यस्येत्यर्थद्वयम्। अनिलस्यायनत्वादाश्रयत्वादनिलयनमित्यपरोऽर्थश्च। ५ "तद्गतान्तरम्" ६ "अविदुषस्तथा" इति प्र. पाठौ। ७ अत्र तु मूलकोशेषु व्रजतिरोष्ठ्यादिरेव पठ्यते। न दन्तोष्ठ्यादिः।

सैषाऽऽनन्दस्य मीमांसा भवति । युवा स्यात् साधुयुवाऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः ॥१३॥ स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः ॥१४॥ श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः । स एक इन्द्रस्याऽऽनन्दः ॥१५॥ श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्याऽऽनन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं

---

स्वकर्म कुर्वन्ति विष्णोः प्रीत्यर्थमञ्जसा । अमन्वानस्य नुर्विष्णुः कुर्यान्नित्यं महद् भयम् । तमआख्यमनुत्थानं विदुषां नियमेन तु । स्यादेव मोक्षस्तत्राप्यानन्दस्य[1] विचित्रता । यस्तु साधुगुणैर्युक्तस्तस्यैवाप्यखिला मही । त्रेतायुगे चक्रवर्ती यदा मुक्तिस्तु[2] संसृतेः । अधीतिफलपूर्णत्वादध्यायक इतीरितः[3] । स एव विष्णुना युक्तो गच्छतीति युवा स्मृतः । एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते । तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मकाः । मुक्त्या[4] श्रुतिफलं प्राप्तास्ततः कामाहतास्तथा । तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः । ये ते हि देवगन्धर्वा मुक्तेभ्यस्तेभ्य एवच । शताधिका हि पितरस्तेभ्य आजानदेवताः । अनाख्याता देवतास्तु जाता देवकुले च याः । आजानदेवतास्ता हि ताभ्योऽग्र्याः कर्मदेवताः । बल्याद्या अन्तरा प्राप्ता देवताः[5] कर्मदेवताः । ताभ्यश्च तात्त्विका देवाः सृष्ट्यादौ देवतां गताः । तेभ्यो दक्षश्चेन्द्रनामा

---

१ "तत्रापि ह्यानन्दस्य" इति प्र.पाठः। प्राचीनपाठे तु द्वितीयः सप्ताक्षरः पादः "नवा एकेनाक्षरेण" इति न्यायात् ।
२ "मुक्तस्तु" इति प्र. पाठः । ३ "आध्यायक इतीरितः" इति प्र. पाठः। अध्यायक इत्येव श्रुतिपादपाठोऽन्यत्रापि परभाष्यादिषु दृश्यते । ४ "मुक्ताः" ५ "अन्तराप्राप्तदेवताः" इति प्र. पाठौ ।

बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य। ॥१६॥ स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसङ्क्रामति। एतं प्राणमयमात्मानमुपसङ्क्रामति। एतं मनोमयमात्मानमुपसङ्क्रामति। एतं विज्ञानमयमात्मानमुपसङ्क्रामति। एतमानन्दमयमात्मानमुपसङ्क्रामति। तदप्येष श्लोको भवति॥१७॥ यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चनेति। एत२ ह वाव न तपति। किमह२ साधु नाकरवम्। किमहं पापमकरवमिति। स य एवं विद्वानेते आत्मान२ स्पृणुते। उभे ह्येवैष एते

---

स हीन्दुं[१] राय यत् पुरा। तस्माद् बृहस्पतिर्नाम महेन्द्रत्वात् पुरन्दरः। तस्मात् प्रजापतिर्मुक्तो रुद्रः प्रजननेशिता। तस्माद् ब्रह्मा शतगुणो मुक्त इत्येष निर्णयः। यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके। सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः। अथवा सहस्रगुणिता अनन्तगुणितास्तथा। परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात्। यथा दीपाच्छतगुणाऽप्यग्निज्वाला न दीपवत्। स्फुटीभवेद् यथैवाग्निर्बहुलोऽपि न सूर्यवत्। यथैव सूर्याद् द्विगुणश्चन्द्रो नैव स्फुटीभवेत्। उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः। प्रतिबिम्बा यतः पूर्वे ब्रह्मान्तानां नरादयः। अतोऽस्पष्टस्वरूपास्ते स्फुटरूपास्तथोत्तराः। यत्प्रसादात् स्वरूपाप्तिर्ब्रह्मादीनां समन्ततः। स विष्णुः सर्वजीवेषु नृषु देवेषु च स्थितः। एक एव महायोगी निर्विशेषोऽखिलैर्गुणैः। सर्वोत्तमः स पूर्णश्च तमेवं वेद यः पुमान्। जीवांश्च तारतम्यस्थान् स गच्छेत् पञ्चरूपिणम्। विष्णुं न पुण्यपापे च तस्यानिष्टे कदाचन। प्रियाप्रियेषु ते ज्ञानी[२] ह्यास्तृणोति यतो नृषु। अगोचरं वाङ्मनसोरानन्त्यात् पुरुषोत्तमम्। ज्ञात्वा मुक्तस्य भीर्नैव कुतश्चन भविष्यति" इत्यादि यजुःसंहितायाम् ॥*॥

नच "सह ब्रह्मणा" इत्यादेरन्यार्थः कल्प्यः। अप्रामाणकत्वात्[३]। अनाश्वासाच्च। नचोषधीभ्योऽ[४]-

---

१ "स हीन्दुं रारयत् पुरा" इति प्र. पाठः। प्राचीनपाठस्यायमर्थः--सहि दक्षः पुरा इन्दुं राय रिराय प्राप जामातृत्वायेति यत् तस्मात् इन्द्रनामा। री गतौ। रिरायेति वक्तव्ये सवर्णलोपश्छान्दसः। निमुम्लोचेति वक्तव्ये निम्लोचेति यथा। "लोपः समाने" इत्यादि हि पठन्ति। २ "तज्ज्ञानी" ३ "अन्योऽर्थः कल्प्यः। अप्रामाणिकत्वात्" ४ "नचौषधीभ्यः" इति प्र. पाठाः।

आत्मान ँ स्पृणुते । य एवं वेद । इत्युपनिषत् ॥१८॥ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा वि द्विषावहै ।

ॐ शान्तिः शान्तिः शान्तिः ॥*॥

इति श्रीतैत्तिरीयोपनिषदि द्वितीयोऽध्यायः

---

न्नमन्नरसमय इत्यत्रोभयार्थत्वे विरोधः[1]। "अन्नस्यान्नम्", "मध्यमः प्राणः", "प्राणः स्थूणा" इत्यादिवद् विशेषितत्वादुपपत्तेः। नचान्नमयादीनामब्रह्मत्वे किञ्चिन्मानम् । "येऽन्नं ब्रह्मोपासते"[2], "आनन्दं ब्रह्मणो विद्वान्", "विज्ञानं ब्रह्म चेद् वेद", "अस्ति ब्रह्मेति चेद् वेद", "अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्" इत्यादिना ब्रह्मशब्देनैवोक्तत्वाच्च[3] । नच लौकिकान्नस्याप्तृत्वमस्ति ।

"येऽन्यथा[4] विदुस्तेऽन्यराजानः क्षय्यलोका भवन्ति" इति श्रुतेरविद्यमानोपासनाद् दोषावगतेश्च । "नच रमन्त्यहो असदुपासनयाऽऽत्महनः" इति च भागवते । "नाविद्यमानं ब्रुवते वेदा ध्यातुर्न वैदिकाः[5] । अविद्यमानं ध्यायन्तो यान्ति सर्वेऽधरं तमः । तस्मात् सत्यार्थतां ब्रूयाद् वेदानामपि सर्वशः । य एवं वेद स ज्ञानी ज्ञानवान् नान्यथा भवेत्" इति वेदार्थविवेके । "स यश्चायं पुरुषे । यश्चासावादित्ये" इत्यधिकरणत्वेन भेद एव जीवस्य परमादुक्तः । "एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते", "एतमानन्दमयमात्मानमुपसङ्क्रामति", "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता", "एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्" इत्यादिना मुक्तस्यापि भेद एवाभ्यस्यते । "अथ सोऽभयं गतो भवति" इति मुक्तिप्रस्तावात् । "सैषाऽऽनन्दस्य मीमांसा" इति मुक्तानन्दो मीमांस्यते । श्रोत्रियस्याकामहतस्येति[6] सर्वत्र विशेषणाच्च ।

नह्यमुक्तस्याकामहतत्वं मुख्यं भवति । नच मुख्या श्रोत्रियता—

"यस्य श्रुतिफलं पूर्णं स श्रोत्रिय उदाहृतः । स हि मुक्तोऽकामहतः स हि कामैर्न हन्यते । यस्य कामास्तु सत्याः स्युः स हि कामैर्न हन्यते । नह्यकामः क्वचित् कश्चिद् दृश्यते श्रूयतेऽपिवा[7]" इति ब्रह्माण्डे ।

नच देवपदाकामस्य सकाशादिन्द्रपदाकामस्य शतगुणानन्दो दृश्यते सति च प्राजापत्यादिकामे। नच मानुषाः प्रायस्तदिच्छवः । चक्रवर्तिनस्तु युवशब्देनैव मुक्तत्वमुक्तम् । तस्मान्मुक्तविषयेयं मीमांसा । "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः[8]" इत्यत्राप्यन्तःकरणस्थानामेव कामानां विमोकः[9] उक्तः । नतु स्वरूपभूतानाम् ।

---

१ "उभयार्थत्वेन विरोधः" इति प्र. पाठः । २ इतः परं प्र. पाठे "ये प्राणं ब्रह्मोपासते" इत्यधिकम्। ३ "ब्रह्मशब्देनोक्तत्वाच्च" ४ "येऽन्यथाऽतो विदुस्तेऽन्यराजानस्ते" ५ "ध्यातुं न वैदिकाः" ६ "श्रोत्रियस्य चाकामहतस्येति" ७ "श्रूयतेऽपिच" ८ "स्थिताः" ९ "विमोक्षः" इति प्र. पाठाः ।

"यं यमन्तमभिकामो भवति सोऽस्य सङ्कल्पादेव भवति" इति मुक्तानामपि स्वरूपभूतः कामः प्रतीयते । "कामः सङ्कल्प आनन्दो मुक्तानां तारतम्यतः । स्वरूपभूतास्ते सर्वे निर्दोषा गुणरूपकाः" इति पाद्मे । "सङ्कल्पादेव च तच्छ्रुतेः" इति सूत्रम् । "भेदव्यपदेशात्" इति जीवेशयोर्भेदश्चोक्तो भगवता ।

नच भेददर्शनमसुकरम् । स्वरूपत्वाद् भेदस्य । सर्वव्यावृत्तं हि सर्वस्य स्वरूपं सर्वैरनुभूयते । अन्यथाऽहं वा दृष्टोऽन्यो वा दृष्ट इत्यपि संशयः स्यात् । नच पश्चाद् भेदो ज्ञायत इत्यत्र किञ्चिन्मानम् । नहि दृष्टवस्तुनः पुरुषस्य तस्य वस्त्वन्तराद् भेदे संशयः क्वचिद् दृष्टः । नच सर्वतो व्यावृत्त्यनुभवे सर्वज्ञताऽपेक्षितेति दोषः । सामान्यतः सर्वस्य सर्वैरपि ज्ञातत्वात् । यावत्तु सर्वतो भेदो विशेषतो न ज्ञायते तावत् स्वरूपमेव विशेषतो न ज्ञातम् । नहि ज्ञाताद् वस्तुनोऽव्यावृत्तिः केनचिच्छङ्क्यते । यदा तु संशीयते तदाऽपि कुतश्चिद् व्यावृत्तमेव ज्ञायते । नहि सर्वमिदं भवति वा नवेति कस्यचित् संशयः । अतो व्यावृत्तिरेव स्वरूपम् । अस्य भेद इति विशेषत्वमस्य[1] स्वरूपमितिवत् । यथाऽस्तीति वर्तमानः कालो वस्तुना सहैवानुभूयते, एवमन्यस्माद् व्यावृत्तिरन्यताऽन्यदपि सामान्यतः सदैवानुभूयते[2] । नह्यस्तीति वर्तमानकालापेक्षयाऽनुभूयत इत्येतावता विद्यमानता नाम वस्तुनोऽन्या । सदित्यपि शत्रन्तत्वात् कालसम्बन्ध्येवानुभूयते । तिष्ठन्नितिवत् । एवमन्यस्माद् व्यावृत्तमित्यन्येन सह प्रतीयमानमपि न स्वरूपादन्यत् । अस्माद् व्यावृत्तिरन्यस्य स्वरूपमन्यस्माद् व्यावृत्तिरस्य स्वरूपमिति नैकस्वरूपता । ज्ञानानन्दादिवत् स्वरूपत्वेऽपि व्यवहारविशेषो भवति । नच स्वरूपत्वेन भेदस्याभावो भवति । ज्ञानानन्दादिवदेव[3] ।

"भेदस्तु सर्ववस्तूनां स्वरूपं नैजमव्ययम् । नष्टानामपि वस्तूनां भेदो नैव विनश्यति । अवस्तुनोऽपि रूपं स्वं भेद एव नचान्यथा । विशेषरूपनाशेन भेदमात्रावसायिता । नाश इत्युच्यते सद्भिर्भेदो नहि विनश्यति । इत्याहुः केचिदज्ञानात् तत्राऽहुः सूक्ष्मदर्शिनः । सत्यं भेदस्तु वस्तूनां स्वरूपं नात्र संशयः । तस्माद् वस्तुविनाशे तु तद्भेदो नास्ति कुत्रचित् । अविनष्टस्य तस्मात्तु भेदोऽस्त्येव स्वरूपतः । एवं भावादभावस्य न भेदो भावरूपवान् । अभावाद् भावरूपस्य स्वरूपं भाव इष्यते । नष्टभेदोऽप्यभावात्मा विद्यते च विनाशतः । स्वरूपत्वात्तु भेदस्य भेदे शङ्का न कस्यचित् । सर्वं सामान्यतो यस्मात् सर्वैरप्यनुभूयते । तस्माद् व्यावृत्तता सर्वैः सर्वस्मादनुभूयते । प्रतियोगिता त्वभावस्याप्यस्त्यभावतया स्फुटम् । नह्यभावोऽप्यधर्मा स्यान्नतु स्याद् भावधर्मयुक् । अभावस्यास्तिता नाम स्यादेवाभावरूपिणी । अभावताऽपि सैव स्यान्न तु स्याद् भावरूपिणी । अतः स सर्वव्यावृत्तस्वरूपो भगवान् परः । येन ज्ञातः स तु ज्ञानी मुच्यते नात्र संशयः" इति तत्त्वनिर्णये ॥*॥

---

१ "विशेष्यत्वमस्य" इति प्र. पाठः। प्राचीनपाठे भेदस्य विशेषत्वं विशेषणत्वम् । धर्मत्वमिति यावत् ।
२ "अन्यस्माद् व्यावृत्तमित्यत्रान्यदपि सामान्यतः सहैवानुभूयते" इति प्र. पाठः । ३ इतः परं प्र.पाठे "अन्यप्रतियोगिकत्वाद् भेदस्य न स्वस्मादपि भवति" इति वाक्यमधिकम् ।

ॐ ॥ भृगुर्वै वारुणिः । वरुणं पितरमुप ससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्र यन्त्यभि सं विशन्ति । तद् विजिज्ञासस्व । तद् ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥१॥ अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्र यन्त्यभि सं विशन्तीति । तद् विज्ञाय । पुनरेव वरुणं पितरमुप ससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म वि जिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥२॥ प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्र यन्त्यभि सं विशन्तीति । तद् विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म वि जिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥३॥ मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्र यन्त्यभि सं विशन्तीति । तद् विज्ञाय । पुनरेव वरुणं पितरमुप ससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म वि जिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥४॥ विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्र यन्त्यभि सं विशन्तीति । तद् विज्ञाय । पुनरेव वरुणं पितरमुप ससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म वि जिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा॥५॥ आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते ।

---

"चक्षुः स चष्टे यद् विष्णुः श्रोत्रं श्रोतृत्वतो विभुः । वाक् च वक्तृत्वतो नित्यं मनो मन्तृत्वतस्तथा । तपो ज्ञानस्वरूपत्वाद् विज्ञानं तु विवेचनात् । ज्ञानानुसन्धानरूपतपसा तं जनार्दनम् । क्रमाद् भृगुर्व्यजानात् तमन्नादिबहुरूपिणम् । एवं विजानंस्तं विष्णुं

आनन्देन जातानि जीवन्ति। आनन्दं प्र यन्त्यभि सं विशन्तीति। सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता। य एवं वेद प्रति तिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या। ॥६॥ अन्नं न निन्द्यात्। तद् व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रति तिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥७॥ अन्नं न परि चक्षीत। तद् व्रतम्। आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रति तिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्म-वर्चसेन। महान् कीर्त्या॥८॥ अन्नं बहु कुर्वीत। तद् व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रति तिष्ठति। अन्नवा-नन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥९॥ न कञ्चन वसतौ प्रत्या चक्षीत। तद् व्रतम्। तस्माद् यया कया च विधया

---

तस्मिंस्तु प्रतितिष्ठति। मुक्तो भूत्वाऽन्नवांश्च स्यादन्नादश्च स एव तुं[1]। अन्ननामा तु भगवान् विद्वांस्तमुपजीवति। तद्वांश्च तेन गुप्तत्वाद् विद्यार्थे वसतीच्छया। आगतं नेति न ब्रूयात् तदेतद् विदुषो व्रतम्। स विष्णुः पृथिवीनामा पृथुत्वात् प्राणनामकः। प्रकृष्टानन्दवलत आकाशः सर्ववेत्तृतः। शराख्यदेहिनश्चैव शरीरं प्रेरणात् स्मृतः। एतैश्चतुर्भिर्भगवान् रूपैस्तु[2] चतुरात्मभिः। भोग्यभोक्तृत्वरूपेण[3] तिष्ठति क्रीडया स्वयम्। नच भोग्यत्वमात्रेण हीनत्वं तस्य कुत्रचित्। नच[4] भार्योपभोग्यस्तु भर्ता हीनत्वमाप्नु-

---

१ "सदैव तु" २ रूपैश्च" ३ "भोग्यभोक्तृस्वरूपेण" ४ "नहि" इति प्र. पाठाः।

बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्या चक्षते । एतद् वै मुखतोऽन्नꣳराद्धम् । मुखतोऽस्मा अन्नꣳराध्यते । एतद् वै मध्यतोऽन्नꣳ राद्धम् । मध्यतोऽस्मा अन्नꣳ राध्यते । एतद् वा अन्ततोऽन्नꣳ राद्धम् । अन्ततोऽस्मा अन्नꣳराध्यते ॥१०॥ य एवं वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति ॥११॥ यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत् प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मन इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति ॥ १२ ॥ तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः ।

---

यात् । एवं स भगवान् विष्णुरविशेषोऽखिलेष्वपि । रूपेषु क्रीडते नित्यं भोक्ता भोग्य इतीच्छया । अन्नाख्यं तं नैव निन्द्याद् बहु मन्येत तं सदा । इति व्रतद्वयं[1] ह्येतद् भाव्यं यदि सुखे स्पृहा । येन केनापि विधिना बह्वित्येव जनार्दनम् । मत्वैव प्राप्नुयान्नित्यं मनोवाक्कायवृत्तिभिः । य एवं समुपासीत तस्यान्नाख्यो हरिः स्वयम् । सिद्ध इत्येव हि प्राहुर्विद्वांसः परिनिष्ठिताः । यस्य तद् ब्रह्म संसिद्धं पूर्वं तेनाऽप्यतेऽग्रतः । मध्ये वयसि चेत् सिद्धं मुक्तो मध्यं प्रपश्यति । वार्धक्ये[2] चेद् विजानाति मुक्तः पादौ प्रपश्यति । तेजोमण्डलमेवान्यत् क्रमेणाङ्गं प्रपश्यति[3] । पूर्वं वयसि बोद्धव्यमा मुखात् सर्वदृष्टये । क्षेमं कृत्वा[4] क्षेमनामा वाचि स्थः स परो हरिः । योगनामा तथा प्राणे सर्वकामनियोजनात् । क्षेमनामा क्षेमकृत्त्वादपानेऽपि[5] हरिः स्वयम् । कर्मनामा हस्तगतः कर्मकृत्त्वाज्जनार्दनः । गतिदत्वाद् गतिर्नाम पादस्थः पुरुषोत्तमः । विसर्गकृद् विमुक्त्याख्यः पायुस्थः परमो विभुः । अध्यात्मस्थ इति प्रोक्तोऽथाधिदैवगतं शृणु । पर्जन्ये तृप्तिनामाऽसौ तृप्तिदत्वाज्जनार्दनः । वायौ तु बलनामा च बलदत्वात् सदैव हि । यशःप्रदत्वाद् दक्षे तु यशः पश्वभिमानिनि । नक्षत्रेषु ज्योतिराख्यो ज्योतिर्दातृत्वतो हरिः । उपस्थमानिनि शिवे प्रजात्यानन्दसन्ततेः । दातृत्वात् तत्तदाख्योऽसौ सन्ततिस्त्वमृतं स्मृतम् । सर्वैः[6] सर्वप्रदत्वात्तु प्रकृतौ पुरुषोत्तमः । स प्रतिष्ठा स्थापकत्वान्मनो मान्यत्वतो हरिः । नमो नम्यत्वतो नित्यं महश्चापि[7] महत्त्वतः । विरिञ्चमारकश्चासौ

---

१ "इति व्रतद्वयं" २ "वार्धके" ३ "अङ्गं विष्णोः प्रपश्यति" ४ "क्षेमकृत्त्वात्" ५ "अपाने हि" ६ "सर्वम्" इति प्र. पाठः । ७ प्राचीनकोशेषु "नित्यमहश्चापि" इति पठ्यते । स्खलितं स्यात् ।

तद् ब्रह्मेत्युपासीत। ब्रह्मवान् भवति। तद् ब्रह्मणः परिमर इत्युपासीत। पर्येण म्रियन्ते द्विषन्तः सपत्नाः। परि येऽप्रिया भ्रातृव्याः। स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः ॥१३॥ स य एवंवित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसङ्क्रम्य। एतं प्राणमयमात्मानमुपसङ्क्रम्य। एतं मनोमयमात्मानमुपसङ्क्रम्य। एतं विज्ञानमयमात्मानमुपसङ्क्रम्य। एतमानन्दमयमात्मानमुपसङ्क्रम्य। इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्। एतत् साम गायन्नास्ते। हा३वु हा३वु हा३वु ॥१४॥ अहमन्नमहमन्नमहमन्नम्। अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः। अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत्। अहमस्मि प्रथमजा ऋता३स्य। पूर्वं देवेभ्योऽमृतस्य ना३भाइ। यो मा ददाति स इदेव मा३वाः। अहमन्नमन्नमदन्तमा३द्मि। अहं विश्वं भुवनमभ्यभवाम्। सुवर्णज्योतीः[1]। य एवं वेद। इत्युपनिषत् ॥१५॥

## इति श्रीतैत्तिरीयोपनिषदि तृतीयोऽध्यायः

---

### समाप्ता चेयमुपनिषत्

---

ब्रह्म पूर्णगुणत्वतः। वेदैनं तत्वतो ब्रह्मा स एतं[2] पञ्चरूपिणम्। प्राप्य गायति मुक्तः सन्नन्ननामाऽस्मि भोग्यतः। यथेष्टमन्नभोक्ता च कीर्तिकर्ता हरेस्तथा। ऋतरूपस्य विष्णोस्तु पुत्रः प्रथमजो ह्यहम्। देवेभ्यः पूर्वजश्चाहं मुक्तानामाश्रयः सदा। यो ददाति च मां सम्यग् विष्णुतत्त्वप्रदर्शकः। स इत्थमेव मां याति विष्णोरन्नमहं सदा। ममान्नं सर्वजीवास्तु भोग्या मम यतः सदा। सर्वमभ्यभवं चाहं गुणैः सर्वैश्च नित्यकैः। सुवर्णो भगवान् विष्णुर्ज्योतिः स मम रोचकः[3]। योऽहमेवंविदभवं तस्य मे माधवः पतिः। इति ब्रह्मा गायमानो मुक्तश्चरति सर्वदा" इति यजुःसंहितायाम् ॥*॥

*अन्नं भगवन्तं न परिचक्षीत। न निराकुर्यात्। तद्गुणांस्तत्कर्माणि वा कुत्रापि बहु कुर्वीत।

---

१ यद्यपि "सुवर्न ज्योतीः" इति वैदिकसम्प्रदायागतः पाठः। सुवः न ज्योतिः इति पदपाठश्च श्रूयते। किन्तु भगवत्पादैः "सुवर्णो भगवान् विष्णुः" इति व्याख्यानात्—व्याख्यातृभिः सर्वैः "सुवर्ण ज्योतीः" इति पाठस्यैव स्वीकरणाच्चायमेवात्र पाठः परिगृहीतः। २ "स एनं" ३ "स मम रेचकः" इति प्र. पाठौ।

बहुगुणत्वेन प्रसाधयेद् भगवन्तम्। यया कया च विधया बह्वन्नं प्राप्नुयात्। अतिप्रयत्नेनापि विहितप्रकारेण बहुतरां भगवद्विद्यां प्राप्नुयात्।

"प्रजापतिः प्रथमजा ऋतस्यात्मनाऽऽत्मानमभिसम्बभूव", "प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव" इत्यादिना विरिञ्चस्यैव तद् ज्ञानम्। अन्यो न परि बभूवेति निषेधात्। "विद्युद्वन्मानुषा विद्युः सूर्यमण्डलवत् सुराः। प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं पश्यति स्फुटम्। ब्रह्मा हि स्थिरचिद्रूपो बहळात्मा विशेषतः। अन्ये क्रमादबहळास्तथा चञ्चलचेतनाः। तस्मात् सम्यङ् न पश्यन्ति हरिं ब्रह्मा तु पश्यति" इति हरिवंशवचनाच्च ब्रह्मैवैनं सम्यग् वेद ॥*॥

यस्योच्चोऽथ समो वा कश्चिन्नैवास्त्यनन्तसच्छक्तेः।
तं वन्दे परमेशं प्रेयांसं प्रेयसश्च मे विष्णुम् ॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत्।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ॥

"हनशब्दो ज्ञानवाची हनूमान् मतिशब्दितः। रामस्य स्मृतरूपस्य वाचस्तेनानयन्त हि। भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः। ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम्। प्रोक्ताः सप्त शिवास्तत्र शयो भीमस्ततः स्मृतः। [दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते। प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः।][5] मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्। मध्व आनन्दतीर्थः स्यात् तृतीया मारुती तनुः। इति सूक्तगतं रूपत्रयमेतन्महात्मनः। यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः" इति च। "साधको रामवाक्यानां तत्समीपगतः सदा। हनूमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः। पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः। पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः। दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते। प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः। आ समन्तात् पतित्वे तु गूढं कलियुगे हरिम्। असत्यमप्रतिष्ठं च जगदेतद-नीश्वरम्। वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति। येन विष्णोर्हि वर्पाख्यान् गुणान-ज्ञासिषुः परान्। ईशानासः सूरयश्च निगूढान् निर्गुणोक्तिभिः। त्रेतायां द्वापरे चैव

१ "प्रतिपादयेत्" २ "विरिञ्चस्यैवैतज्ज्ञानम्" ३ "बहुलात्मा" ४ "अन्ये क्रमादबहुलास्तथा चञ्चल-चेतसः" इति प्र. पाठाः। ५ ( ) एतदन्तर्गतः श्लोकः प्र. पाठे अत्र न पठ्यते। उत्तरत्र "आनन्दतीर्थनामा प्रकीर्तितः" इत्यनन्तरं सकृदेव। प्राचीनकोशेषूभयत्रापि। ग्रन्थद्वयगतत्वाच्च द्विपाठः। ६ "विष्णोस्तु वर्पाख्यान् गुणानाज्ञासिषुः" इति प्र. पाठः।

कलौ चैते क्रमात् त्रयः । एतेषां परमो विष्णुर्नेता सर्वेश्वरः स्वयम् । स्वयम्भुब्रह्म-सञ्ज्ञोऽसौ परोऽस्मै ब्रह्मणे नमः” इति च ॥*॥

पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे ।
अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीतैत्तिरीयोपनिषद्भाष्ये
भृगुवल्ली समाप्ता

---

समाप्तं चेदं भाष्यम्

---

## उपनिषत्प्रस्थानं समाप्तम्

※

---

“सर्वेश्वरेश्वरः” इति प्र.पाठः । २ परस्मै ब्रह्मणे नमः” इति प्र.पाठः। यद्यपि क्वचित् प्राचीनकोशेष्वपि [illegible]रस्मै” इत्येव पठ्यते । परन्तु भाष्यान्तरेषु परस्मै इत्यादौ विलिख्य परस्तात् “परोऽस्मै” इति परिशोधितत्वाद-[illegible]तरकोशेषु “परोऽस्मै” इत्येव पाठाच्च स एवाभिमत इति निश्चीयते । ३ याजुषे तैत्तिरीयारण्यके पठितायाम-[illegible]तुष्टय्यां तैत्तिरीयोपनिषदि प्रथमाध्यायत्रयस्यापि भृगुवल्लीति नाम युज्यते । शंनोमित्रादिमुक्तगीतावसानं [illegible]गुदृष्टमिति भाषितत्वात् । तृतीयोऽध्यायोऽपि विशिष्य भृगुवल्लीति व्यपदिश्यते । चतुर्थस्तु नारायणवल्लीति “अम्भस्यपारे” इत्यादिकः । नारायणोपनिषदिति चेयमेवोच्यते ।